ऽप्रत्यक्षत्वं वा। तमसश्चाक्षुषप्रभाविशेषरूपत्वं त्वेतेषामपूर्वमेव वस्तु, येन प्रसङ्गेनेन्द्रियभूतान्तःकरणादीनां व्यष्टिसमष्टिभेदेनोन्मेषशक्तिविजृम्भणादिकमपि नूतनमेव तत्त्वमाविष्क्रियते ॥

वार्तिकाङ्गदुरुक्तचिन्तनपरीक्षा

**एतेन**—अप्रत्यक्षेऽपि ह्याकाश इति भाष्ये विकल्पस्य भ्रमत्वमभिप्रेत्य बालपदम्, समन्वयाधिकरण ईक्षतिसूत्रादिभिरप्येकवाक्यतयैकाधिकरणत्वव्यवस्था चैतेषां भाष्यकारानपि कटाक्षयति, इति न केवलमुक्तानुक्तचिन्तनम्, किन्तु दुरुक्तचिन्तनमप्यत्र विशदमेव। इयान् विशेषः—कु मा रि ल भ ट्टा द यो दुरुक्तचिन्तनेनव कृतकृत्यमात्मानं मन्यन्ते, इमे तु क्लिष्टेन प्रकारविशेषेण कथञ्चन दुरुक्तचिन्तनमपि फलतस्सदुक्तचिन्तने पर्यवसाययन्ति। सर्वथा तूक्तानुक्तदुरुक्तचिन्तनाद् वार्तिकत्वमस्य निबन्धस्यानपोढमेव ॥

वार्तिककाराचार्यादिपरिचयः

सविवरणं हि वार्तिकमिदं श्री बा ल कृ ष्णा न न्द सरस्वतीनां कृतिः, येषां साहित्यगुरवः विश्वगुणादर्शचम्पूप्रभृतिसाहित्यग्रन्थकर्तारः श्री वे ङ्क ट कवयोऽतिप्रसिद्धाः। महाभाष्यगुरवः प्रसिद्धाः श्री ना गो जि भट्टाः। स्व य म्प्र का श ती ति र्था स् ति प्प न्न यज्वानश्च ज्योतिःशास्त्रगुरवः। न्यायशास्त्राध्यापकाः श्री वा सु दे वा न न्द सरस्वत्यः, येषामेवान्तेवासिनः सिद्धान्तसिद्धाञ्जनकाराः श्री कृ ष्णा न न्द सरस्वत्यः। वेदान्तशास्त्रगुरवस्तु प्रसिद्धाः श्री गौ ड ब्र ह्मा न न्द सरस्वत्यो गुरुचन्द्रिकालघुचन्द्रिकान्यायरत्नावल्यादिकर्तार इतीयं विद्यागुरुपरम्परा ॥

उपदेशगुरुपरम्परा तु (१)—श्री ध रा न न्द सरस्वत्यः, (२) श्री स्व य म्प्र का शा न न्द सरस्वत्यः, (३) श्री गो पा ला न न्द सरस्वत्यः, (४) श्रीशि व रा मा न न्द सरस्वत्यः, (५) श्री पु रु षो त्त मा न न्द सरस्वत्यः (६) श्री पू र्णा न न्द सरस्वत्यश्च गुरुपरमगुरुपरमेष्ठिगुरुपरात्परगुरुक्रमेणेति ग्रन्थत एव विशदीभवति ॥

अत्र सिद्धान्तसिद्धाञ्जनकाराणां श्री कृ ष्णा न न्द सरस्वतीनां गुरवोऽपि वा सु दे वा न न्द सरस्वत्यः, परमगुरवश्च श्री स्व य म्प्र का शा न न्द सरस्वत्यः।

एवमानुमानिकापरोक्षतावादो विद्याङ्गोपनयनस्य कृताकृतत्वमित्याद्यसाधारणविषयसाम्यमपि सिद्धान्तसिद्धाञ्जनप्रकृतवार्तिकयोर्वर्तते। नामसाम्यं त्वतिविशदमेवेति सिद्धान्तसिद्धाञ्जनवार्तिकयोरेककर्तृकत्वमापाततः सत्यं प्रतीयते, सम्प्रति तु वयं निश्चिनुमः—यत् सिद्धान्तसिद्धाञ्जनकाराः श्री कृ ष्णा न न्द सरस्वत्यः प्रकृतवार्तिककारा अभिनवद्रविडाचार्य श्री बा ल कृ ष्णा न न्द सरस्वत्यश्चान्ये, सिद्धान्तसिद्धाञ्जनकारास्तु प्रकृतवार्तिकविरचने नितरां प्रोत्साहका एवासन्। श्री वा सु दे वा न न्द सरस्वत्यस्तु श्री बा ल कृ ष्णा न न्द सरस्वतीनां विद्यागुरवः, श्री कृ ष्णा न न्द सरस्वतीनां दीक्षागुरवः, ये तु श्री बा ल कृ ष्णा न न्दसरस्वतीनां दीक्षागुरूणां श्री ध रा न न्द सरस्वतीनां दीक्षासब्रह्मचारिणः, श्री स्व यं प्र का शा न न्द सरस्वतीनां दीक्षाशिष्याश्चेति परमगुरुसाम्यमपि न विरुद्धम्। सति चैवं सिद्धान्तसिद्धाञ्जनकाराणां गुरवो श्री रा म भ द्रयतीन्द्रा अपीति यदुक्तं सिद्धान्तसिद्धाञ्जने, यदपि च वार्तिकेऽत्र चतुर्विंशश्लोके "सकलभेदमतनिराकर्तृनुपदेशगुरुसतीर्थ्यान् अ ल ङ्का र वा सु दे व शिष्यान् (कृ ष्णा न न्द सरस्वतीपादान्) स्मरती"त्यवतारितम्, सर्वमुपपद्यते। अनेन हि श्री रा म भ द्र यतीश्वराणामेव विद्यान्तेवासिनः श्री कृ ष्णा न न्द सरस्वत्यः, श्री श्री ध रा न न्द सरस्वत्यश्चासन्निति विज्ञायते। श्री रा म भ द्र यतीश्वरास्तु, प्रतिभाति, श्री रा मा न न्द सरस्वत्य एव रत्नप्रभाकाराः श्री स्व य म्प्र का शान न्द सरस्वतीसब्रह्मचारिणां श्री गो वि न्दा नं न्द सरस्वतीनामन्तेवासिन इति, येषामपरेऽन्तेवासिनः श्री रा मा न न्द सब्रह्मचारिणः श्री ना रा य णा न न्दसरस्वत्यः, येषामन्तेवासिनः श्री ब्र ह्मा न न्द सरस्वत्यः, प्रशिष्यास्तु श्री बा लकृ ष्णा न न्द सरस्वत्यः प्रकृतवार्तिककाराः। तथाच सिद्धान्तसिद्धाञ्जनकाराणां विद्यागुरवः श्री रा मा न न्द सरस्वत्यः प्रकृतवार्तिककाराणां विद्याप्रगुरवः श्री ना रा य णा न न्द सरस्वत्यश्च श्री गो वि न्दा न न्द सरस्वतीनां श्री गो पा ला न न्द सरस्वत्यन्तेवासिनामन्तेवासिनः॥

श्री गो वि न्दा न न्द सरस्वत्य एव रत्नप्रभाकारा इति तु विभ्रम एव। आङ्ग्लभूमिकायामस्य विस्तारोऽवगन्तव्यः॥

श्री बा ल कृ ष्णा न न्द गुरुपरम्परायां वेदान्तशास्त्रनिबन्धकानानन्दसरस्वतीसम्प्रदायानुसारिणः सम्प्रति सङ्कृह्णीमः।

तत्र आनन्दपूर्ण मुनय इति व्यपदिश्यमानाः श्रीपूर्णानन्दसरस्वत्यः श्रीबालकृष्णानन्दसरस्वतीनां सप्तमा मूलपुरुषास्तु खण्डनखण्डखाद्यव्याख्याया वेदान्तविद्यासागर्याख्यायाः, मण्डनमिश्रकृतब्रह्मसिद्धिव्याख्याया सिद्धिव्याख्याख्यायाश्च कर्तारः। तत उपरि पञ्चमस्थाने विद्यमानाः श्रीरामानन्दसरस्वत्यो रत्नप्रभाब्रह्मामृतवर्षिणीविवरणोपन्यासादिकाराः, श्रीनारायणानन्दसरस्वत्यस्तु गद्यमयशारीरकमीमांसाभाष्यवार्तिकस्यातिगभीरस्य विस्तृतस्य च कर्तारः। तत्र श्रीरामानन्दसरस्वतीशिष्याः श्रीकृष्णानन्दसरस्वत्यः सिद्धान्तसिद्धाञ्जनकाराः। तच्छिष्याः श्रीभास्करदीक्षिताश्च गृहस्थाः सिद्धान्तसिद्धाञ्जनव्याख्याया रत्नतूलिकाख्यायाः कर्तारः॥

एवमेव श्रीनारायणानन्दसरस्वत्यन्तेवासिनः श्रीब्रह्मानन्दसरस्वत्यो गुरुलघुचन्द्रिकान्यायरत्नावल्यादिकर्तारः, तच्छिष्यास्तु श्रीबालकृष्णानन्दसरस्वत्यः सर्वासामुपनिषदां विशिष्य च तैत्तिरीयोपनिषदो विवरणस्यैतस्य च कर्तारस्तैत्तिरीयोपनिषद्विवरणोपक्रमेऽपि स्वाचार्यपरम्परां श्रीपूर्णानन्दादिं श्रीश्रीधरान्तामेव स्वपरिचयदानमुखेन संगृह्णते—

> श्रीमत्पूर्णानन्दान् वन्दे पुरुषोत्तमानन्दान्।
> श्रीशिवरामयतीशान् गोपालानन्ददेशिकेन्द्रांश्च॥
> श्रीमत्स्वयम्प्रकाशान् श्रितजनकल्पद्रुमानाश्रये सततम्।
> श्रीमच्छ्रीधरचरणाम्भोजं हृदये सदा कलये॥
> श्रुतिनगराधीशेनाभिनवद्रविडार्य बालकृष्णेन।
> रचितेयं मोदयतात् कैलासेशं कृतिर्महादेवम्॥

इति। अत्र निर्दिष्टाः श्रीशिवरामयतीन्द्रा एव श्रीगौडब्रह्मानन्दसरस्वतीभिरपि—

> "महानुभावधौरेय शिवरामाख्यवर्णिनः।
> एतद्ग्रन्थस्य कर्तारः केवलं लेखका वयम्॥"

इति लघुचन्द्रिकोपसंहारे नाम्ना निर्दिश्यन्ते। विश्वसिमः—इम एव श्रीगोविन्दानन्दसरस्वतीनां स्वपरमगुरूणामपि परमगुरवः श्रीगौडब्रह्मानन्दसरस्वतीनां लघुचन्द्रिकाकालेऽपि कामाक्षीसेवापरायणा आसन्, अतिवृद्धाश्चेम एव पूजार्थमत्र कर्तृतया स्मृता इति॥

तत्र स्वसम्प्रदायाचार्येषु स्वोल्लिखितेषु त्वद्वैतसम्प्रदायपरनिबन्धकर्तृषु प्रथमे श्री गौ ड पा दा चा र्याः श्रुतिविवरणवैतथ्यप्रकरणाद्वैतप्रकरणालातशान्ति-प्रकरणचतुष्टयरूपाया माण्डूक्योपनिषद्विवृतेः कर्तार इति प्रकृतवार्तिकगतेन सप्तमेन श्लोकेनेमे वदन्ति। किं बहुना—"अन्योन्यविरुद्धतया द्वैतिनां वैनाशिकानां च दर्शना-नामसम्यग्दर्शनत्वं प्रदर्श्य तत्प्रतिषेधेनाद्वैतदर्शनसिद्धिरुपसंहर्तव्येत्यवीतन्यायेनालातशान्ति-रारभ्यत इति वदन्तो भगवत्पादा अप्यलातशान्तिप्रकरणस्याद्वैतपर्यवसानं सौगत-मतनिरसनेनेति प्रतिपादयन्ति ॥

"ज्ञानेनाकाशकल्पेन धर्मान् यो गगनोपमान्।
ज्ञेयाभिन्नेन सम्बुद्धस्तं वन्दे द्विपदां वरम् ॥"

इति मङ्गलश्लोके द्विपदां वरमित्यनेन "न र ना रा य णा श्र मे महतस्तपसः करणेनाति-प्रीतो ना रा य ण एव ब्रह्मविद्याप्रदत्वेन परमगुरुरिति मत्वा ना रा य ण एव मन्यत इति विवृण्वन्त आ न न्द गि र यो वदन्ति। त एवाकाशकल्पत्वं च वृत्त्य-वच्छेदमात्रेणेति सूचयन्ति। ज्ञेयाभिन्नेन रूपेण धर्माणां ज्ञानं नाम ज्ञेयब्रह्म-व्यतिरेकेण तदितराभाव एव। तत्र च कारणम् गगनोपमत्वम्; मिथ्यात्वात्। अयं च ज्ञेयव्यतिरेकेण धर्माणामभावः सद्विवर्तवाद एव सङ्गच्छते, इति सद्विवर्तवादनिरूपणार्थमजातवादोऽद्वैतिनाम्, यत्र कार्यात्मनैवोत्पत्तिः, न तु कारणात्मना। मिथ्यात्वमपि तथैव। वक्ष्यते चोत्तरत्रैव "सद्भावेन ह्यजं सर्वमि"ति। सौगतानामजातवादस्तु न सद्भावेन, किन्तु स्वभावेनेति सर्वस्य प्रकरणस्याद्वैतदर्शनोपसंहारपरत्वं वाचारम्भणश्रुतिसिद्धमेव फलति। पाश्चात्य-शैलीमनुरुन्धानास्तु बहवोऽन्य इव म० म० श्री वि धु शे ख र भट्टाचार्या अपि बौद्धमतानुवाद एवात्रेति मन्यन्ते। इदं तु भगवत्पादानारभ्यतद्वार्तिककारपर्यन्ता-नामद्वैताचार्याणां विरुद्धम्। अजातवादादीनामद्वैतवादेऽपि सत्त्वात्तु न विशेषतो-ऽत्र विमर्शनमर्हति ॥

द्वितीयास्तु भगवत्पादा एव, येषां विषये नात्र किमपि वक्तव्यं मन्यते; अविप्रतिपन्नत्वात् तेषां मतस्य बहुतरनिबन्धादिद्वाराऽद्वैतसम्प्रदायप्रवर्तनस्य च।

तृतीयाचार्यास्तु श्री प द्म पा दा चा र्याः पञ्चपादिकाकर्तारः। तुरीयास्तु श्री सु रे श्व रा चा र्याः, यानधिकृत्य नवमः श्लोकोऽत्र प्रवर्तितः। अत्र हि श्री सु रे श्व रा चा र्याः स्वतन्त्रवार्तिककर्तारः। एतेषां वि श्व रू पा-

चार्या इत्येव प्रथमं नाम, काश्यां दिक्पालावहनेन सुरेश्वरस्यैतैरेव दृष्टत्वात् सुरेश्वराचार्या इति प्रसिद्धिरिति वर्णनाद् आनन्दगिरिः शङ्करविजयस्य प्रामाण्यं मन्यते। पूर्वाश्रमे तु विश्वरूपाः शोणभद्रातीरवासिनः पञ्चगौडान्तर्गताः कुमारिलभट्टजामातरः पूर्वकाण्डप्रवर्तकाश्चासन्निति वदन्तो मण्डनमिश्रा एव विश्वरूपाचार्याः सुरेश्वराचार्याश्चेति ज्ञापयन्ति। प्रसिद्धं हि वङ्गीयानां सर्वेषामपि श्रीशङ्करनामकमतिप्राचीनं नाटकं विशेषतोऽनुशीलयतां मण्डनमिश्रा एव कुमारिलभट्टजामातर आसन्निति। सति चैवं मण्डनसुरेश्वरयोर्भेदकथाऽपि विद्यावाचस्पतिकुलपत्यादिविरुदभूषणमहामहोपाध्याय श्री कुप्पुस्वामिशास्त्रिपादानां विशेषतो विचारमर्हति। अस्मत्प्रियमित्राणि विद्यावाचस्पत्यादिविरुदाङ्किताः मद्रपुरराजकीयमहाविद्यालयसंस्कृतविभागाध्यक्षाः पि. पि. एस् शास्त्रिमहोदयास्तु स्वीयब्रह्मसिद्धिमुखबन्धेऽन्यत्र च बहु विमृशन्त्यत्र विषये। एतन्मतदृष्ट्या तु मण्डनसुरेश्वरविश्वरूपाणामैक्यमेव। प्रकृतं वार्तिकमपि तदनुगुणमेव। अन्ये तु केऽप्याचार्या अद्वैतसंप्रदायनिबन्धका आनन्दसरस्वतीसम्प्रदाये श्री मदानन्दपूर्णतोऽपि पूर्वं नासन्नित्येव प्रकृताद्वार्तिकादवगच्छामः॥

वार्तिककाराणामभिनवद्रविडाचार्यतापरीक्षा

सत्स्वपि पूर्वाचार्याणां भाष्यविवरणेषु, वार्तिके च परस्मिन् श्री नारायणसरस्वतीकृते श्री बालकृष्णानन्द सरस्वतीनां वार्तिकं हीदं सत्यमेवोक्तानुक्तदुरुक्तचिन्तनेन स्थालीपुलाकन्यायेन परीक्षितेनात्युन्नतं स्थानं लभते। प्रतीम एतादृशनिबन्धरत्नस्यामूल्यस्य रचनानैपुण्यमुपलक्ष्यैवाभिनवद्रविडाचार्यत्वेनेमे प्रसिद्धिं नीताः कैश्चन गौडैः परमहंसैरिति॥

प्राचीना हि द्रविडाचार्या भगवत्पादेभ्योऽपि पूर्वतनास्तत्र तत्रोपनिषद्विवरणादिमुखेन नूतनसम्प्रदायप्रवर्तकत्वेन सम्प्रदायवित्त्वेनापि प्रसिद्धाः, येषां कारिकाः साम्प्रतमपि प्रत्यहं सम्प्रदायवित्कारिकात्वेन गुरुपरम्पराक्रमेणैवाधीत्य तत्पारायणमपि स्वकर्तव्येषु प्रधानतया प्रायेण सर्वेऽपि संन्यासिनो मन्यन्ते, यासु भाष्यकारैः समन्वयाधिकरणान्ते संगृहीताः—

"गौणमिथ्यात्मनोऽसत्त्वे पुत्रदेहादिबाधनात्।
सद्ब्रह्मात्माहमित्येवं बोधे कार्यं कथं भवेत्॥

> अन्वेष्टव्यात्मविज्ञानात् प्राक् प्रमातृत्वमात्मनः ।
> अन्विष्टः स्यात् प्रमातैव पाप्मदोषादिवर्जितः ॥
> देहात्मप्रत्ययो यद्वत्प्रमाणत्वेन कल्पितः ।
> लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात् ॥"

इति कारिका अपि, इति प्रकृतवार्तिके सम्प्रदायवित्त्वेन प्रसिद्धा द्र वि डा चा र्या एवैतासां कारिकाणां कर्तार इति स्पष्टं प्रतिपादनाद् विज्ञायते। इम एव द्र वि डा चा र्याश्छान्दोग्योपनिषदो बृहदारण्यकोपनिषदश्च व्याख्यातारः, माण्डूक्योपनिषद्भाष्ये भाष्यकारैर्द्वितीयाध्यायद्वात्रिंशमन्त्रव्याख्यावसर आगमवित्त्वेन सम्प्रदायवित्त्वेन चोल्लिखिताः। एत एव व्याधसंवर्धितराजपुत्राख्यायिकाप्रवर्तका इत्यादि बडोदानगरप्रकाशितानन्दगिरिकृतितर्कसंग्रहभूमिकायां तत्सम्पादकप्रवरा विवेचयन्ति ॥

एतेषां मतदृष्ट्या तु सर्वात्मनाऽद्वैतसम्प्रदायमेवेमेऽनुसरन्तीति ज्ञापनादिदमवगम्यते—केचन शैवाचार्या एव "गौणमिथ्यात्मनोऽसत्त्व" इति कारिकाणां कर्तार इति परमश्रद्धास्पद महामहोपाध्यायश्री कु प्पु स्वा मि शास्त्रिपादानां मतं चिन्तनीयमेवेति। एते हि द्र वि डा चा र्या गौ ड पा द समकालिकास्तत्समानमेव पूजनमर्हन्तश्च गौडदेशे न्यवसन्निति प्रतीमः, यतस्ते गौडाचार्याः, इमे तु द्रविडाचार्या इति तत्तन्नामत्यागेनैव प्रसिद्धा आसन्। एतावत्तु प्रतिभाति—गौ ड पा दा इवेमेऽपि संन्यासपरम्परायाः प्रवर्तका आसन्। स च सम्प्रदायस्तीर्थाश्रमादिसम्प्रदायेषु कश्चन स्यात्। सोऽपि सम्प्रदायो भगवत्पादैः स्वान्तेवासिषु केषुचनोरीकृत एव, परन्तु न श्रीभगवत्पादादिक्रमेण, किन्तु सम्प्रदायान्तरद्वारेति। अत एव स्वाचार्यपरम्परासु गौ ड पा दा नारभ्य सङ्कलितासु श्री द्र वि डा चा र्या अपि न निर्दिष्टाः ॥

युक्तं चैतत्—यदि गौडाचार्यत्वेन पूजनीयेषु केचन तत्समकक्षा अपि द्राविडाः स्युः, तर्हि ते द्रविडाचार्यत्वेन व्यपदेशमर्हन्तीति। विश्वसिमोऽनेनैव न्यायेन श्री गौ ड ब्र ह्मा न न्द सरस्वतीनामन्तेवासिनोऽपि स्वविद्ययाऽध्यापनसामर्थ्येन स्वानुष्ठाननिष्ठया च परया तत्समतयैव सर्वैरपि संन्यासिभिः पूजिताः श्री बा ल कृ ष्णा न न्द सरस्वत्योऽप्यभिनवद्रविडाचार्यत्वेन प्रसिद्धिं गताः। श्री गौ ड ब्र ह्मा न न्द सरस्वत्यस्तु श्री बा ल कृ ष्णा न न्द सरस्वतीनां न

दीक्षागुरवः, इति तेषां तत्समानम्, चातुर्मास्यसङ्ख्याधिक्ये ततोऽप्यधिकं वा पूजनं न कथमपि विरुद्धम् ॥

अभिनवद्रविडाचार्यतयैतेषां प्रसिद्धौ मुख्यं निदानं तु तमसश्चक्षुःप्रभारूपता-ऽऽकाशसरूपत्वादिविषये नूतनस्यैव सम्प्रदायस्य प्रवर्तनमेव ॥

वार्तिककाराभिजनादिः

श्री बा ल कृ ष्णा न न्द सरस्वतीनामभिजनस्तु द्रविडाचार्यत्वेन प्रसिद्ध्या द्राविडो देशः, श्रुतिनगराधीश इति व्यपदेशात् तत्रत्यमेव श्रुतिनगरं नाम नगरमिति जानीमः। तच्च यदि वेदपुरीति प्रसिद्धम्, तर्हि काञ्ची-मण्डलान्तःपाति। अन्यत्तु किमिति नैतावतापि ज्ञायते ॥

संन्यासाश्रमस्वीकारेण पूर्वाश्रममातापितृसम्बन्धत्यागेन पूर्वतनजन्मवियोग-स्त्वेतेषां पुष्करक्षेत्र इति

"वैनतेय इव पुष्करदेशं जन्मयोगमतरं जलराशिम् ॥"

इति जन्माद्यधिकरणोपसंहारमङ्गलश्लोकेन ध्वन्यते। वार्तिककारा हीमे तत्र तत्राधिकरणान्ते श्लिष्टपदप्रयोगेण स्वीयमितिवृत्तं विशेषतश्चैतन्निबन्धोपयोगि ध्वनयन्तीत्यानन्दमयाधिकरणान्तश्लोकतद्विवरणाभ्यां स्वयं विशदीकुर्वते। तदत्रेमानि तद्गतानि वाक्यानि—

"श्रीम त्सा ल्व व ते य श ङ्क र लसत्पद्मावलम्बात्परो
हंसोऽहं विजये पुनर्विलङ्घ्य परमानन्दाभिधे धामनि ॥"

"अत्र पुनर्विलङ्घ्येत्यनेनोत्तरयात्रायां हिमालयोल्लङ्घनेन काशीयात्राकाल एवैतद्ग्रन्थरचन-मिति गम्यते" इति। सति चैवं जन्मादिसूत्रान्तश्लोकेनापि पुष्करक्षेत्र एवैतेषां संन्यासाश्रमस्वीकारो जन्मादिसूत्रभाष्यवार्तिकरचनं चेति ध्वन्यत इति विवक्षायां न किमप्यनौचित्यं वार्तिककारैरत्र पृथगुक्तार्थध्वनेरविवेचनेऽपीति प्रतिभाति। अयमेव न्यायः—

"रचितेयं मोदयतात् कैलासेशं कृतिर्म हा दे व म् "

इति प्रकृतवार्तिककाराणां तैत्तिरीयोपनिषद्विवरणोपक्रमश्लोकेऽपि यदि योज्यते, तर्हि तैत्तिरीयोपनिषद्विवरणमिदं श्रीकैलासाश्रमवासिनां केषाञ्चन म हा दे वा-ख्यानां प्रधानब्रह्मचारिणामेव कृते कृतमिति ध्वन्यते ॥

कृतिं हीमां वार्तिकाख्यां तु कैलासाश्रमवासिनां म हा दे वा ख्यानां ब्रह्मचारिणामेव कृते कृतां विशिष्य ग्रन्थकारा इमे—

"महादेवः श्रीमान् समधिगततत्त्वो बटुवरो
महाकैलासेशः सकलयतिसंसेवनपरः ।
विशेषं जानीतां विशदवचनैर्भाष्यवचसाम्
इतीयं सञ्जाता जगति कृतिरग्र्या विजयताम् ॥"

इति प्रकृतवार्तिकजिज्ञासाधिकरणप्रकरणगतद्वात्रिंशश्लोकेन ध्वनयन्ति । अनेन च श्री बालकृष्णानन्द सरस्वत्यः श्रीकैलासाश्रमवासिनां केषाञ्चन महादेवाख्यप्रधानब्रह्मचारिणामेव कृत इदं व्यरचयन्निति विज्ञायते ॥

वार्तिककारसमयः

समयनिर्धारणं त्वेतेषामतिविशदमेव । यतः श्री ब्रह्मानन्द सरस्वतीश्रीनागोजिभट्टादीनामन्तेवासिन इमेऽपि तत्तद्दर्शनजीवातूनां स्वनामधन्यानां जन्मस्थानं सप्तदशशतकमेवालमकुर्वत । विशिष्य श्री ब्रह्मानन्दसरस्वतीनां समयनिर्धारणं तु तद्गुरुचरणानां श्री नारायणानन्द सरस्वतीनां निर्धारितसमयविज्ञानाधीनमिति तदीयानि गद्यमयवार्तिकोपसंहारगतानि वाक्यानि कानिचनात्र लिखामः । तानि यथा—

"चत्वार्यब्दसहस्राणि तथा रसशतानि च ।
नवतिस्त्रीण्यथाब्दस्य व्यतीतानि यदा कलेः ॥
मुनिर्नारायणस्तर्हि श्रीमच्छारीरवार्तिकम् ।
सम्पूर्णं कृतवान् रामनवम्यां शुक्रवासरे ॥"

इति । अनेन च कलेस्त्रिनवत्युत्तरषट्शताधिकचतुस्सहस्रवत्सरेष्वतीतेषु १६७०-तमे शकवत्सरे वा वार्तिकरचनमित्यवगम्यते । सति चैवं तत्समकालिकास्ततो न्यूनवयस्काश्चेमे शकवत्सराणां सप्तदशमष्टादशं शतकं चांशतो विशिष्यालमकार्षुरिति युक्तमिति पश्यामः ॥

साम्प्रतं तु ग्रन्थविस्तरभयात् प्रकृतानुपयोगाच्च नाधिकमत्र व्याप्रियते ॥

वार्तिकोद्धृतनिबन्धादिनामानि

उपहरन्तो हीदं संस्करणं प्रथममुक्तवार्तिकोदाहृतानां प्राचीनानां निबन्धानामाचार्यादीनां च परिचयं ददामहे ॥

एतद्वार्तिके नामत उल्लिखिता निबन्धा उपनिषत्सु कठमुण्डकतैत्तिरीय-

च्छान्दोग्यबृहदारण्यकाऽऽरुणिकाख्याः[1], विषयवाक्यद्वारा सङ्गृहीतास्तु ईशकेनप्रश्नश्वेताश्वनरकैवल्याख्याश्च। पुराणेषु विष्णुपुराणमात्रम्। दर्शनेषु कापिलपातञ्जलकाणादगौतमीयवेदान्तदर्शनानि। विद्यासु पञ्चाग्निविद्याभूमविद्ये। इतिहासेषु महाभारतगतोद्योगशान्तिपर्वणी, विशिष्य च भगवद्गीता। संहितासु तैत्तिरीयवाजसनेय्यौ। शतपथब्राह्मणम्। धर्मशास्त्रेष्वापस्तम्बधर्मसूत्रम्। वेदाङ्गेषु सभाष्यव्याकरणच्छन्दोनिरुक्तकल्पाः। साहित्येषु नैषधकाव्यम्। कोशेष्वमरमेदिनीविश्वा इति। मेदिनीकोशश्चायं श्रीमेदिनिकृतत्वात् प्रकृतवार्तिककारैः २७५तमे पृष्ठे "इति मेदिनेः" इति कर्तृनाम्नाऽपि गृह्यते॥

पूज्या दार्शनिकाचार्या गुरुशिष्यभावेनोपनिषत्सु प्रस्तुता देवताविशेषाश्च तत्तन्नाम्ना निर्दिष्टास्तु ग्रन्थमध्ये विश्लिष्टैरेवाक्षरैर्मुद्रापितैस्तत्तत्पदैः स्पष्टीकृताः, विशिष्य चाकाराद्यनुक्रमणिकादिद्वाराऽन्ते सङ्गृहीताः पाठकानां सौकर्येणावगमार्थम्॥

वार्तिकविषये वक्तव्या विशेषाः

मुखबन्धमुखेन तु वार्तिकश्लोकेषु क्वचन छन्दोभङ्गादयो दोषाः, तत्परिहाराभिप्रायेण विभक्त्यादिलोपाश्च दृश्यन्ते। एवमुद्धृतवाक्येष्वपि केषुचनोपलभ्यमानमुद्रितपुस्तकधृतपाठेभ्यो विलक्षणाः पाठा दृश्यमानास्तथैव मुद्रापिताः, प्रियपाठका एव स्वयं यथायोगं तद्विचारयिष्यन्तीति निवेदयामः॥

वार्तिकं हीदं भिक्षुसूत्रवार्तिकमिति शारीरकमीमांसाभाष्यवार्तिकमिति च व्यपदिश्यते। वार्तिकविवरणमप्यत्र योजितं मूलकाराणामेव कृतिः। अस्य च नाम शारीरकमीमांसाभाष्यवार्तिकविवरणमिति प्रागानन्दमयाधिकरणात्, आनन्दमयाधिकरणमारभ्य तु पारिजातमिति नामान्तरं दृश्यते॥

वार्तिकव्याख्या हीयं श्री ना रा य णा न न्द स र स्व ती कृतगद्यमयवार्तिकस्यैव श्री बा ल कृ ष्णा न न्द सरस्वतीनां विवरणमिति ब्रह्मसूत्रभाष्यस्यव्याख्यानवकोपेतस्य प्रकाशनकालेऽस्माभिर्गृहीतम्, यदेवानुसृत्य तदीयायां भूमिकायाम् "शारीरकमीमांसाभाष्यवार्तिकस्यास्य श्री कृ ष्णा न न्द सरस्वतीकृता व्याख्याप्येका दरीदृश्यत" इति लिखितम्। न्यायामृताद्वैतसिद्धिप्रकाशनावसरे परं सम्यक् परीक्षितेयं व्याख्या। यदा त्ववगतम्—अस्या व्याख्याया मूलं वार्तिकं

---

1 २३१-२३२तमपृष्ठयोर्मूले विवरणे च "आरणके"तिमुद्रितमपि आरुणिकेति पठनीयम्।

श्री ना रा य ण स र स्व तो वार्तिकादन्यदेवेति। कर्तारोऽप्येतन्मूलभूतवार्तिकस्य श्री बा ल कृ ष्णा न न्द सरस्वत्य एवेति। ततश्च वार्तिकद्वयं भाष्यस्य वर्तत इति विज्ञायास्यापि सविवरणस्य वार्तिकस्य प्रतिलिपिरेका सङ्कलिता यथावसरमिदमपि प्रकाशमेष्यतीति। साम्प्रतं तु स्वनामधन्या शु तो ष-संस्कृ त ग्र न्थ मा ला यामस्यापि स्थानं प्राप्तमिति महदिदमानन्दस्थानम्, इति तदिदं समन्वयाधिकरणान्तमिदानीमुपहरामः ॥

समन्वयाधिकरणं हि भाष्यकाराणामपरेषां तद्व्याख्यातॄणां च दृष्टयैकेनैव "तत्तु समन्वयादि"ति सूत्रेण सम्पूर्णम्। वार्तिककारास्त्विमे बहुभिरेव कारणैरनिवारणीयैरीक्षत्यादिसूत्रैरपि मिलितमेव तत्संपूर्णं मन्वाना नेक्षत्यधिकरणं नामाधिकरणान्तरमेव समुचितमिति न केवलं समन्वयसूत्रविवरणावसरे, किन्त्वीक्षतिसूत्रावतरणादिमुखेनापि विवेचयन्ति ॥

इदमत्रावधेयम्—यत् समन्वयसूत्रस्य पृथगनधिकरणत्वं मन्वाना अपीमे व्याख्यानान्तरानुसारि समन्वयसूत्रानुबन्ध्येकमधिकरणमिति पक्षं स्वानभिमतमपि न सर्वथा विरुन्धते। यतः समन्वयसूत्रविवरणोपसंहारावसरेऽपि यथास्वसम्प्रदायमधिकरणान्ते क्रियमाणं मङ्गलाचरणमत्रापि रचयन्ति। ततश्चैतेषामपि गौणतया परदृष्ट्या वाऽभिमतं समन्वयाधिकरणमप्येकेनैव सूत्रेण सम्पूर्णमिति पक्षमेवादाय वयमपि ग्रन्थविस्तरभयात् प्रसिद्धां रीतिमेवानुसृत्य साम्प्रतं समन्वयाधिकरणान्तं प्रकाशयामः ॥

किञ्चिदिव वयमप्यनेनापूर्णप्रकाशनेन सत्यं दुःखमनुभवामः। तथाप्याशास्महे यदचिरेणैव द्वितीयभागस्यापि प्रकाशनेन कृतकृत्या भविष्याम इति। किं बहुना। सुगृहीतनामधेयाः प्राच्यपाश्चात्यविद्याजीवातवः कलिकाताविश्वविद्यालयप्राणदातारो भारतवर्षस्यैव मण्डनानि च श्रीसरस्वत्युपनामान आ शु तो ष मुखोपाध्याया एव, येषां स्मरणार्थमियं ग्रन्थमाला कलिकाताविश्वविद्यालयेन प्रारभ्यते, सर्वमस्मदीयं मनोरथं पूरयिष्यन्ति, ये हि नाम कलिकाताविश्वविद्यालयमिमं स्वीयेन यशःशरीरेण साम्प्रतमप्यधितिष्ठन्त "आत्मा वै पुत्रनामासी"ति श्रुतिमक्षरशो यथार्थयन्ति ॥

वार्तिकमातृकाविषयसूचनम्

मातृका चास्य वार्तिकस्य सविवरणस्यैकैव व ङ्गी य रा य ल् ए स्या टि क्-

सो सा इ टी स्थान एव लभ्यते, नान्यत्रेति मातृकान्तरमस्माभिरेतत्तारतम्यपरीक्षणार्थं न शीलयितुमपार्यत। सर्वथा तु ससन्तोषमिदं निवेद्यते यदेकाऽपि सा मातृका सुरक्षिता सर्वाङ्गशोभना च वर्तते, इति नात्र ग्रन्थानन्वयादिशङ्का लेशतोऽपि प्रसरति। केवलं समन्वयाधिकरणोपसंहारे ६४तमपत्रस्य प्रथमे पृष्ठे ( दृश्यतामस्मिन्पुस्तके ४०६तमपत्रस्य दशमी पङ्क्तिः ) मातृकायां "प......... रज्जुहस्तक" इति वाक्ये कानिचनाक्षराणि त्रुटितानि। कानि नामाऽक्षराणीह योजनीयानीति तु प्रियपाठका एव निर्णयन्त्विति नाऽस्माभिस्तत्र काऽपि सूचना कृता ॥

द्वितीयजन्माद्यधिकरणानन्तरं पृथक्सङ्ख्यानिर्देशेन तुरीयसमन्वयाधिकरणमारभ्यैव [III B. 48. Part I] वार्तिकमातृकायाः प्रथमे भागे मातृकोपलभ्यते। शास्त्रयोनित्वाधिकरणवार्तिकं तु नोपलभ्यत इति सत्यं महदिदं दुःखनिदानम्, यत एकस्याप्यक्षरस्य प्रकृतवार्तिकगतस्य लोपोऽनर्घ्यरत्नलोप एव। विश्वसिमः सो सा इ टी पुस्तकागारत एव मातृकान्तरतः कुतश्चनायमपि भागोऽचिरेणैव लभ्येत। सो सा इ टी सम्पादकास्तु साम्प्रतिकाः श्री गु ह महोदयाः प्राचीनमातृकाणां गौरवं विशेषतो जानन्तः साम्प्रतं सर्वा मातृकाः संशोध्य यथास्थानं व्यवस्थापयितुमायतन्त इति महदिदमानन्दस्थानम् ॥

उपसंहारः

मुद्रापणकाले इकारैकारैकारोकारौकारौकारादिमात्राक्षराणां भङ्गतोऽनिवारणीयान् कांश्चन मात्राच्युत्यादिदोषान् क्वचनोपलभ्यमानान् प्रियपाठका एव संशोधयितुं सादरमनुरुध्यन्ते ॥

निवेदयामः सबहुमानमेतत्संशोधनविषये यथायोगमपेक्षितसूचनेनास्मानधमर्णयन्ति कलिकाताविश्वविद्यालयसंस्कृतविभागशीर्षण्या महामहोपाध्यायाः श्री वि धु शे ख र भट्टाचार्याः। इति

कलिकाता-विश्वविद्यालयः,
शकाब्दाः १८६२, चैत्रः।

सुधीजनविधेयतमौ
अनन्तकृष्णशास्त्री
अशोकनाथभट्टाचार्यश्च।

# ANALYSIS OF THE TEXT



* नक्षत्रचिह्निता विषया वार्तिक एव विशिष्य समालोचिता अनुक्तचिन्तनतां वार्तिकस्य घट्टयन्ति ।

| Śloka | Subject | Page |
|---|---|---|
| *117-120 | काचादिघटितोपनेत्रवशेन तु दूरेऽपि चाक्षुषप्रभायाः शक्तिविजृम्भणभेद एव, न तु तस्या एव स्थौल्यादिकमिति बहुतरोदाहरणपरीक्षणपूर्वकं विवेचनम् । | 89-90 |
| *121 | शक्तिभेदेनैव स्वल्पस्याधिकतयाऽधिकस्य स्वल्पतया वा भानमित्यत्र स्वप्नादिदृष्टान्तोपन्यासः । | 91 |
| *122 | किरणगतशक्तेश्चक्षुरादिमध्यान्तर्भागगतायाः स्फुटत्वास्फुटत्वस्फुटास्फुटभावेन त्रैविध्यम् । | 92 |
| *123-124 | अभ्रेषु गच्छत्सु तद्विपरीतं चन्द्रगमनप्रतीतिर्मेघदेशावच्छेदेन सञ्जातचक्षुःप्रभान्तःकरणपरिणामयोश्चन्द्राकारपरिणामप्रदेशपर्यन्तं सङ्क्रमणेन परिणामद्वयस्यैकप्रदेशे संहतिवशेन च भवति । | 93 |
| *125 | अन्तकरणस्य चन्द्रेऽवधानविरहे तु मेघे गच्छत्यपि दृश्यमाने न चन्द्रगमनप्रतीतिः । | 94 |
| 126-127 | अनवधानकृता प्रतीतिर्निरुपाधिकस्थल एव, सोपाधिकस्थले त्वनवधानेऽप्युपाधिवशाद् तस्योर्ध्वगमनं दूरवर्तिनः समीपगमनं चोपपद्यते चक्षुःप्रभापरिणामतः । | 95 |
| 128-129 | नावि गच्छन्त्यां तद्गतपुरुषगतिविपरीतं नयनकराणां विततनयनकरगतविषयाकारपरिणामात्तीरगतवृक्षादेर्विपरीतगमनप्रतीतिर्निर्वहति । | 96 |
| *130 | दर्पणादितलप्रतिहतगतिः प्रत्यक् तिर्यक् च प्रसरच्चक्षुःप्रभापरिणामविशेष एव प्रतिबिम्बमिति युक्तमुक्तं व्यष्टिनयनशक्तिसमुन्मेषे तत्कराणां बहिरनिर्गमनेऽपि समष्टिनयनपरिणामो भवतीति । | 97 |
| 131-132 | नयनप्रभायाः सावित्रकिरणानां च सर्वदर्पणेषु स्वल्पं स्वल्पमनुकरणम् । तत्र प्रतिबिम्बे नयनरश्मिपरिणामे पुनरन्तरन्तः प्रतिबिम्बान्तरपरिणामोऽपि । | 98 |
| 133 | नयनवृत्तेरन्तःकरणेनानुगमे दर्पणपराग्भूताया दर्पणाभिमुखमतिगताः परिणामा एव चिद्भास्याः । | 99 |
| 134 | दर्पणे स्वल्पेऽपि महतामपि सवितृमण्डलादीनां प्रतिबिम्बरूपेण ग्रहणं नयनशक्तिविजृम्भणात एव । | |

| Śloka | Subject | Page |
|---|---|---|
| 227-233 | "तदर्हमि"ति सूत्रानुसारेणार्हार्थे वतिप्रत्ययादप्यनिर्वचनीयवादानुगुणयमुक्तानुभवस्येति "तत्र तस्येवे"ति सूत्रार्थस्यापि व्यवस्थापनपूर्वकं व्यवस्था, येन शुक्त्यभेदस्यापि बोधनद्वारेणानिर्वचनीयख्यातिसिद्धिः, प्रसिद्धरजतस्याभेदानर्हत्वात्, मतान्तरे तु न रजताभेदो विवक्ष्यते शुक्तेरिति तन्मतनिरास उक्तानुभवप्रदर्शनेन सूच्यते। | 175-178 |
| 234-235 | इन्द्रियार्थसम्प्रयोगजन्याधिष्ठानज्ञानाभावान्नाध्याससम्भव इति कथं पुनः प्रत्यगात्मनीति भाष्यभावविवेकः : अत्रेदमनुमानं—आत्मा, अन्तःकरणाध्यासानास्पदः, इन्द्रियादिजन्यप्रत्ययाविषयत्वात्, तत्त्वं च युष्मत्पदजन्यप्रत्ययाविषयत्वादिति। तथाच युष्मदस्मत्प्रत्ययगोचरयोरिति न भेदग्रहनिरूपणमात्रार्थम्, किन्त्वधिष्ठानज्ञानाभावसूचनार्थमपि। | 179 |
| 236-237 | गौरोऽहमित्यादिभ्रमेष्विवाहमिति भ्रमेऽप्यस्मत्प्रत्ययविषयत्वेनाधिष्ठानविषयतानिर्वाहः। तथाच तत्त्वं च युष्मत्प्रत्ययविषयत्वादित्यत्र विषयत्वमात्रस्यैव प्रयोजकत्वे वक्तव्ये व्यर्थविशेषणता, अविषयत्वं त्वसिद्धमिति मन्तव्यम्। स्थूलसूक्ष्मकारणशरीरचितामैक्यभ्रमे त्वधिष्ठानस्याविषयत्वं यद्यपि वर्तते तथापि न विषयत्वस्याधिष्ठानताप्रयोजकतानियमः ; दूरस्थपर्वतादौ व्यभिचारात्। जडयोरपि परस्पराध्यासवारणार्थं त्वधिष्ठानस्फुरणमात्रं कारणमिति स्वीक्रियते। तच्चात्मनि सर्वदा वर्तत एवेत्यभिप्रायमपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरिति भाष्यम्। | 180-182 |
| *238 | आरोप्यग्रहकाल एवाधिष्ठानस्य ग्रहः, तदुभयाकारिकैकैवाविद्यावृत्तिरिति यावदिति सकारणाध्यासवाद एव न चायमस्ति नियम इति भाष्यार्थः। | 182 |
| *239-242 | नीरूपे गगने वायाविवाप्रत्यक्षे कथमध्यास इति शङ्का, नक्षत्रमण्डलादुपरितनभाग एव खलु नीलत्वेन प्रतीयते, तच्च न गगनमेव, किन्तु सावयवं सरूपं चाण्डकपालस्य भागान्तरमेव, इति कथमप्रत्यक्षेऽपि ह्याकाश इति भाष्यम्, कुतो वाऽत्र बालपदमित्याक्षेपः। | 183-184 |

| Śloka | Subject | Page |
|---|---|---|
| 256 | संशयस्यापि भ्रमप्रमातो वैलक्षण्यमेव । | 194 |
| 257 | तदेवं पूर्वोक्तप्रत्यक्षप्रमालक्षणमिन्द्रियवृत्तिद्वारकप्रमातृचैतन्याभेदेन | 195 |
| | विषयस्य सुष्ठु लगति । | 195 |
| 258 | एवं भ्रमलक्षणमपि पूर्वोक्तमुपपद्यते । | |
| *259 | अध्यासोऽविद्या, जडपदार्थविलक्षणस्वरूपचैतन्यप्रतिफलनयुतवृत्तिरेव विद्या, अनेन च शुद्धचैतन्येन नाविद्याया विरोधः, किन्तु वृत्तिप्रतिफलितचैतन्येनैवेति सिध्यति । | 196 |
| 260 | तमेतमेवंलक्षणमध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहाराः प्रवृत्ता इति तु सङ्ग्रहः । | 197 |
| 261 | प्रत्यक्षादिप्रमाणानां कथमविद्यावद्विषयत्वमिति प्रत्यवस्थानम् । | 197 |
| 762-263 | प्रत्यक्षादिप्रमाणप्रमेयव्यवहाराणामध्यासं विना नोपपत्तिरिति समाधानम् । | 198 |
| 264 | असङ्गेऽपि चैतन्येऽविद्यासम्बन्धस्यानादित्वात् स्थूलसूक्ष्मकारणशरीरचितां परस्पराध्यासोऽध्यक्षादिप्रमाणप्रवृत्त्यर्थमपेक्षितः । | 199 |
| 265 | विवेकिपुरुषाणां लौकिकवैदिकव्यवहारः, शुद्धचिदात्मभेदाग्रहविशिष्टविपरीतग्रहपूर्वकः, व्यवहारत्वात, पश्वादिव्यवहारवदित्यनुमानं तत्र प्रमाणम् । | 200 |
| 266-267 | अत्र चिदात्मपदेन शुद्धचिदात्मनो ग्रहणात् शास्त्रीयव्यवहारे सूक्ष्मकारणशरीरविशिष्टप्रमातृभेदग्रहेऽपि नोक्तानुमानस्य व्यभिचारः,सर्वेषु व्यवहारेषु शुद्धचिदात्मभेदाग्रहविशिष्टविपरीतग्रहपूर्वकत्वस्याबाधात् । | 201 |
| 268 | उक्तानुमाने विवेकाग्रहविशिष्टविपरीतज्ञानेति भ्रमस्य विवेक्यविवेकिसाधारण्यं जीवन्मुक्तिमनभ्युपगम्योक्तम्, जीवन्मुक्तिस्वीकारे तु विकल्पज्ञानसाधारणं भ्रान्तिभानमात्रमेव साध्यकोटिप्रविष्टम्, जीवन्मुक्तानामपि भेदग्रहे सत्येव जायमानमहमादिज्ञानं विकल्पज्ञानमेवेति तदीयव्यवहारेऽपि न व्यभिचारः । | 202-203 |
| 269 | जीवन्मुक्तानामपि विकल्पज्ञानवतां नित्यनैमित्तिकादिकर्माधिकारो वर्तत एवेति तदाचरणमपेक्षितमेव ; यावत्प्रारब्धशेषं कर्माधिकारावश्यम्भावात् । | 204 |

| Śloka | Subject | Page |
|---|---|---|
| 1-2 | "जन्माद्यस्य यत" इति सूत्रस्य सकर्तृकत्वसाधकानुमानपरत्वं तु इदं कार्यं यत्कर्तृकमित्येव सूत्रविरचनापत्त्या प्रपञ्चगतजनेस्सकर्तृकता-साधनस्यायोगेन जन्मादीत्यादिपदवैतथ्येन च न सम्भवति । | 264 |
| ,, | श्रुतिक्रमानुसारेण यतोऽस्य जन्मादीति सूत्रविरचनापत्त्या जन्माद्येषां यत इति वा सूत्रविरचनापत्त्या श्रुतिविवरणमपि न सम्भवति । | 265 |
| ,, | संशयपूर्वपक्षयोरदर्शनादधिकरणलक्षणमत्र नास्ति । | 265 |
| ,, | प्रथमं लक्षणपरत्वम्, ततोऽनुमानपरत्वनिषेधोऽनन्तरं श्रुति-विवरणत्वमिति पूर्वापरविरोधोऽत्र भाष्ये वर्तते । | 266 |
| ,, | सर्वज्ञात्सर्वशक्तेरिति वाक्येनेश्वरस्वरूपलक्षणस्यैवात्र विवक्षणम्, पुनः शुद्धब्रह्मतटस्थलक्षणमिति न विरुद्धम् ; शुद्धाद्विवर्तो-पादानादीश्वरद्वारा जगज्जन्मादीत्येवं सूत्रविवरणस्य युक्तत्वात् । | 266 |
| ,, | श्रुत्यपेक्षयैवानुमानप्रामाण्यस्य बहुशः स्थापितत्वादिदं सूत्रं श्रुतिनिरपेक्षानुमानपरं न भवतीति दूषणमनुक्तोपालम्भनम् ; का णा द गौ त म योर्वैदिकत्वेन, तन्मतदृष्ट्याऽपि श्रुतिनिरपेक्षा-नुमानप्रामाण्याभावात् । | 267 |
| ,, | न च चतुरध्याय्याः श्रुतिव्याख्यापरत्वम् ; बहुष्वधिकरणेषु तर्क-चरणादौ श्रुतिवाक्यानामविचारादिति वेदान्तवाक्यग्रथनार्थत्वं सूत्राणामित्यप्यसङ्गतमेव । वस्तुतस्तु वेदान्तसापेक्षानुमानस्यापि प्रामाण्यमत्र स्वीकृतमिति वेदान्तग्रथनार्थमेवेति बाधितम्, तथा चोपक्रमोपसंहारविरुद्धं च । | |
| ,, | जन्मादिसूत्रस्य लक्षणपरत्वमेव । अनुमानप्रामाण्यशङ्कापरिहारौ शास्त्रयोनित्वाद्यधिकरणसिद्धार्थानुवाद इति कल्पना तु तत्रैवोक्त-ग्रन्थप्रवृत्त्यौचित्यात्र युक्ता ; तस्माज्जन्मादिसूत्रं नानुमानोपन्या-सार्थम् । किं तर्हि । वेदान्तवाक्यप्रदर्शनार्थमिति ग्रन्थविरोधात् । | 268 |
| ,, | किंलक्षणमिति श्रुत्युपात्तलक्षणपरत्वं वेदान्तवाक्यग्रथनार्थ-त्वादिति श्रुत्युपात्तानुमानत्वं च जन्मादिसूत्रस्येति कल्पनाऽपि पूर्वापरविरुद्धैव । | 269 |

| Śloka | Subject | Page |
|---|---|---|
| | सूत्रार्थः । तथाच प्रकारान्तरेण शास्त्रयोनित्वपरित्यागेन तत्पदेन ब्रह्मपरामर्शोऽपि व्याख्यातः । | 323-324 |
| 13 | तृतीयमपि वर्णकमत्र भाष्यकारा मन्यन्ते—प्रथमसूत्रैकवाक्यतयोक्तसूत्रयोजनेनेति वर्णकभेदविवक्षणार्थं तुपदम्, इत्यत्र वर्णकभेदेन त्रीणि वर्णकानि विवक्षितानि । | 325 |
| 14-16 | श्रुतिविवरणत्वमेव प्रथमसूत्रस्येति स्वमते सत्यपि वृत्तिकाराणां दृष्ट्या वर्णकान्तरमनुसन्धेयम् । सत्यपि विरोधे तदुक्तं स्वस्तु स्वगतस्योत्कर्षं सूचयितुम् । | 326 |
| 16-17 | प्रथमे वर्णके हेतुसाध्ययोरविशेषो वर्तत एव । तत एव स्वतन्त्रं वर्णकान्तरम् । अतो न तत्र भाष्यकाराणामाशयः । | 327 |
| *18-20 | भाष्यकृन्मते हि तत्पदेन विषयसूचनाद् ईक्षतिसूत्रस्यैतद्गुणसूत्रतया विवक्षणाच्च तुपदसार्थक्यमनपोह्यम्; मतान्तरनिराससूचनार्थत्वात् । तच्च मतान्तरं साङ्ख्यानां प्रधानवाद एव । | 328 |
| 21-24 | "तदैक्षते"त्यादौ तदादिपदस्य हि न प्रकृतिपरत्वम्, किन्तु सर्वशाखाप्रत्ययन्यायेन परमात्मपरत्वमेवेति विशदं भाष्यकाराः समन्वयमुखेन विवेचयन्ति । | 329-331 |
| 25 | वर्णकद्वयानुगुणं सूत्रभाष्ये तन्त्रेण योजनीये । | 331 |
| 26 | सिद्धस्यापि ब्रह्मणः श्रुत्येकगम्यता । | 332 |
| *27-28 | ईक्षतिसूत्रावतरणभाष्यस्यैव समन्वयाधिकरणपूर्वपक्षत्वमिति स्वाभिप्रायेण योजनं विवक्ष्यते । | 332-333 |
| 29-30 | प्रथमत एवोक्तपूर्वपक्षस्य स्वाभिप्रेतस्याप्यसूचनं त्ववतारितवर्णकभङ्गभीत्यैव । वर्णकान्तरद्वयवदेवैतद्वर्णकानुगुणतयाऽपि योजनं तु न सम्भवति । | 333 |
| *31-34 | तत्र प्रथमं शास्त्रयोनित्वाधिकरणाक्षेपपरवर्णकपरतया भाष्ययोजनप्रकारः—कर्तृदेवतादिबोधकतयोपासनापरतया वा प्रामाण्यमिति वा, सर्वथाऽप्रामाण्यमिति वा । | 334-336 |
| 35 | "तत्तु समन्वयादि"ति सूत्रगततुशब्दसार्थक्यादिसूचनपूर्वकं भाष्यवाक्यान्यन्यथाऽऽलोच्यन्ते । | 337 |

| Śloka | Subject | Page |
|---|---|---|
| 36-37 | ब्रह्म, शास्त्रयोनि, समन्वयादित्यनुमाने न हेतुसाध्याविशेषः । | 338 |
| 38 | वेदान्तानां ब्रह्मण्यतात्पर्ये जघन्यवृत्त्याश्रणापत्तिः । | 338 |
| 39 | ब्रह्मेतरनिषेधपराणां वेदान्तानां भेदेऽसमन्वयः । | 339 |
| 40-41 | सिद्धबोधनेऽपि सप्रयोजनत्वेन प्रामाण्यं निर्वहति । | 340 |
| 42 | फलवत्त्वमेव हि प्रामाण्यप्रयोजकम्, न तु क्रियापरत्वम्, ज्ञानमात्रपराण्यप्यविद्यानिवृत्त्या सप्रयोजनान्येव वेदान्तवाक्यानि । | 341 |
| 43 | ज्ञानपरमपि हि ब्रह्मकाण्डं विधिपरमपि भवत्विति शङ्का, तत्र भाष्यार्थविवेकश्च । | 342-343 |
| 44-48 | ब्रह्मणः प्रतिपत्तिविषयताऽवश्यमेव हि स्वीकर्तव्या ; सिद्धार्थपराणामप्रामाण्यात् । तथा च कर्मब्रह्मकाण्डयोः सममेव प्रामाण्याप्रामाण्यव्यवस्थापनम्, प्रवृत्तिनिवृत्त्यन्यतरबोधनेन प्रामाण्यमिति च । | 344 |
| 49 | कर्मब्रह्मकाण्डयोर्वैलक्षण्यमिति सिद्धान्तोपक्रमः । | 345 |
| 50-51 | उपासनाशेषतया ब्रह्मसमर्पणम्, उपासनस्यैव शास्त्रप्रामाण्यान्मोक्षसाधनत्वं च । | 345-346 |
| 52-53 | रज्जुज्ञानात्सर्पभ्रान्तेरिव ज्ञानमात्रात् संसारनिवृत्तिर्न भवितुमर्हति ; परोक्षज्ञानेन भ्रमकार्यभयकम्पादिनिवृत्तावपि भ्रमानिवृत्तेः । | 347 |
| 54 | शाब्दं हि ज्ञानमभिमानमेव निवर्तयितुमीष्टे, न तु मूलाविद्याम् । | 347 |
| 55 | शाब्दनिश्चयेनापि भ्रमनिवृत्तिरिति तु परेषां स्वाभिमतम्, नाद्वैताभिमतमिति निष्कर्षः । | 348 |
| 56 | श्रुतब्रह्मणोऽपि यथापूर्वं संसारदर्शनाद् रज्जुज्ञानाद्ब्रह्मज्ञानस्य सर्पतः संसारस्य च वैलक्षण्यमाशङ्कते । | 349 |
| 57 | इयं चाशङ्का ज्ञानाविधिपक्षे सुतरां लगति, ज्ञानविधित्वे तु श्रवणादित्रयस्य दर्शत्रिकस्येव फलार्थमपेक्षणान्न सम्भवतीति ज्ञानविधिविषयतैव ब्रह्मण इति पूर्वपक्षनिष्कर्षः । | 350 |
| 58-59 | कर्मब्रह्मविद्याफलयोः कृतकत्वाकृतकत्वसातिशयत्वनिरतिशयत्वादिवैलक्षण्यादुभयोरप्येकविधविधिविषयत्वं हि व्याहन्यत इति सिद्धान्तनिष्कर्षः । | 350 |

| Śloka | Subject | Page |
|---|---|---|
| 124-126 | सशरीरताया अनवस्थायापत्त्या कर्मानिमित्तकता । | 391-392 |
| 127-130 | शरीरित्वस्य धर्माधर्मकृतत्वनिरासः । | 393-394 |
| 131-133 | गौणविकल्पभ्रमविवेकः । | 395-396 |
| 134-136 | शरीरादावहंज्ञानस्य भ्रमविकल्परूपता । | 397-398 |
| 137-139 | आभिमानिकशरीरविलयेनाशरीरता । | 399-400 |
| 140-144 | जिज्ञासासूत्रस्य विचारप्रतिज्ञापरत्वस्य परमतत्वम्, श्रुतिविवरण-रूपत्वस्यैव स्वमतत्वम्, समन्वयसूत्रस्य परमतरीत्या विवरणं च । | 401-402 |
| 145-147 | "गौणमिथ्यात्मन" इति कारिकाविवरणम् । | 403-404 |
| 148 | देहात्मप्रत्यय इति कारिकाविवरणम् । | 405 |
| 149 | भाष्यकाररीत्या समन्वयाधिकरणोपसंहारः । | 406 |

॥ ॐ स्वस्ति श्रीगणेशाय नमः ॥

[1b] आनन्दसान्द्रमखिलैरपि योगिवृन्दै-
रान्दोलितं हृदयसद्मनि मन्दमन्दम् ।
अन्तश्चिरन्तनमनन्तमनन्तरायम्
मन्तुर्महः किमपि कौतुकमातनोतु ॥ १ ॥

5 समाधावम्भोधौ स्फुरदमृतमाधुर्यमहिते
शरद्राकाचन्द्रः सकलकलिकामोदमधुरः ।
सदद्वैतानन्दः शमरसमहिम्ना समरसो
विवर्तानामादिर्विविधघटनानां विजयते ॥ १ ॥
श्रुत्यन्ताम्बुजमोदने दिनमणिश्चिन्तामणिश्चिन्तित-
10 स्वात्मानन्दपुमर्थपूर्णतरसद्विश्राणने विश्रुतः ।
यो विश्रान्तिसुरद्रुमो भवभवप्रोद्दामतापश्रमे
सोऽयं शङ्कर भिक्षुशेखरमणिश्चित्ते चिरं वर्तताम् ॥ २ ॥
श्रीमच्छङ्कर देशिकनिर्वर्तित भिक्षुसूत्रभाष्यस्य ।
विवृणोमि भावशुद्ध्यै वार्तिकमल्पाक्षरैर्वाक्यैः ॥ ३ ॥

15 प्रारिप्सितस्याविघ्नेन परिसमाप्तये कृतं मङ्गलं तत्त्वानुस्मरणलक्षणं शिष्य-शिक्षायै निबध्नाति—आनन्देति ॥ आनन्दसान्द्रम् आनन्देन सान्द्रम् नीरन्ध्रम् —आनन्दघनम् । अखिलैरपि योगिवृन्दैः हृदयसद्मनि हृदयगृहे मन्दमन्दम् अल्पाल्पम् आन्दोलितम् समाधिवृत्तिभेदेष्वभिव्यक्तिभेदेन चालितमिव । चिरन्तनम् अनादिसिद्धम् । अनन्तम् त्रिविधपरिच्छेदरहितम् । अनन्तरायम् 20 निष्प्रत्यूहम् । ईद्दशं महः । अन्तः हृदये । मन्तुः विचारयितुः । किमपि अनिर्वचनीयम् । कौतुकम् सन्तोषविशेषम् । आतनोतु विरचयतु ॥ १ ॥

[2a] भूमा पुरातनगिरा परिचीयमानो
भूत्यै पचेलिमविचारधुरे स्फुरन्त्यै ।

भूयोऽपि योगपरिचेयवपुः पुरस्ताद्
भूतावगाढतमसो रविराविरास्ताम् ॥ २ ॥

विघ्नबाहुल्यशङ्कया पुनरपि कृतं तत्त्वानुसन्धानमाबध्नाति—भूमेति ॥ पुरातनगिरा "भूमानं भगवो जिज्ञास"[1] इत्यादिवेदान्तवचसा परिचीयमानः मुहुर्मुहु-
5 र्ज्ञाप्यमानः। भूयोऽपि योगपरिचेयवपुः चित्तैकाग्र्येण विज्ञेयदेहः "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि"[2]रिति श्रुतेः। भूतावगाढतमसो रविः प्राणिवर्गा-वरणाविद्यानिवर्तकः। भूमा शुद्धो भूमात्मा "स एवाधस्ता"[3]दिति निर्दिश्यमानः। पचेलिमविचारधुरे भूत्यै परिपक्ववेदान्तविचारलक्षणैश्वर्याय। पुरस्तादाविरास्ताम् प्रकाशताम्। इत्यर्थः ॥ २ ॥

10 समन्तात् संवीतं सकलमुनिवृन्दैरपि सदा
समस्ताम्नायार्थप्रवचनसमुन्निद्रहृदयम्।
सचिन्मुद्रं व्यासं सजलजलदश्यामलतनुं
समासीनं वीरासनकलनया नौमि सततम् ॥ ३ ॥

अथ वेदान्तशास्त्रसूत्रप्रवर्तकं व्यासं नमस्यति—समन्तादिति ॥ परितः
15 सर्वर्षिभिर्वेष्टितं सकलवेदार्थकथनजागरूकमनसं ज्ञानमुद्रासहितं मेघश्यामलं वीरासने समुपविष्टं व्यासं सदा नौमि। इति गोलार्थः ॥ ३ ॥

त्रिवर्गेणाक्रान्ते जननमरणादिव्रणभुवा
जनेऽस्मिन् सर्वस्मिंस्तिमिरपरिणाहैकशरणे।
निषेक्तुं निध्यातोऽमृतमगपतिः शङ्कर इति
20 स्वनाम व्याख्यातुं जयति कुहनाभिक्षुरनिशम् ॥ ४ ॥

अथ व्याससूत्रभाष्यकर्तारं भगवत्पादमनुसन्धत्ते—त्रिवर्गेणेति ॥ जन्म-मरणादिदुःखस्फोटखनिभूतेन धर्मार्थकामलक्षणत्रिवर्गेण समावृते तिमिरपरिणाहैक-शरणे अविद्यासमृद्धिस्थानभूते परिदृश्यमानजने अमृतम् मुक्तिसुधां निषेक्तुं समर्थः श्रीगिरीशः शङ्कर इति स्वनाम व्याख्यातुम् प्रकाशयितुम्—सुखकरो
25 लोकानामिति प्रकटयितुम्। व्याजयतिः सन् सततं जयति। इत्यर्थः ॥ ४ ॥

[2b] पुराणं पुण्यानामवधिरवसन्नं समरसं
दुरूहे पाथोधावपनयमहानक्रगहने ।
मनोमन्थानेन प्रतिनयसमावृत्ततनुना
जगत्यामद्वैतं जयति भगवत्पादनिचितम् ॥ ५ ॥

5 अथ भगवत्पादप्रकाशितमखण्डं पुरुषार्थमनुस्मरति – पुराणमिति ॥ चिरन्तनम् । पुण्यानामवधिः निरतिशयानन्दत्वेन सर्वानन्दानामत्रान्तर्भावात् सकलपुण्यप्राप्यसुखसीमा । यद्वा सकलपुण्यनिर्मलजनप्राप्यत्वात् "तमेत-"[1] मित्यादिश्रुतेः पुण्यावधिः । असन्न्यायनक्रत्वादनाक्रमणीये दुस्तर्कसमुद्रे । समरसं सैन्धवखण्डवत् । अवसन्नम् लीनम् । मनोमन्थानेन प्रतिनयसमावृत्ततनुना
10 सिद्धान्तन्यायरज्जुपरिवृत्तशरीरमनोरूपमन्थनदण्डेन । भगवत्पादनिचितम् श्री श ङ्क र यतीन्द्रसङ्गृहीतम् । अद्वैतम् अखण्डचित्स्वरूपम् । जगत्यां जयति । इत्यन्वयः ॥ ५ ॥

समाधावम्भोधौ सकलकलिकः शारदविधुः
समाधानादीनां निरवधिमणीनां वरनिधिः ।
15 यतीनां गो वि न्दो हृदयजलजानां दिनमणि-
श्चिरं चेतोऽम्भोजे सुभगचरितो मे विजयताम् ॥ ६ ॥

अथ भाष्यकर्तुर्गुरुं सम्प्रदायशुद्ध्यै परिचिन्तयति—समाधाविति ॥ समाधिसमुद्रे सकलकलः शारदचन्द्रः समाधानशमादिगुणमणीनां निरवधिखनिः यतिहृदयकमलरविः शोभनचरितः श्री गो वि न्द भ ग व त्पा दा-
20 चा र्यो हृदयजलजे विजयताम् । इत्यर्थः ॥ ६ ॥

[3a] परिव्राजामाद्याः परमगुरवः श ङ्क र यतेः
प्रणेतारः प्रौढं गहनतर मा ण्डू क्य विवृतेः ।
परानन्दाभोगे पटुतरहृदो गौ ड च र णाः
पुरस्ताद् नः स्फूर्तिं विदधतु चिदानन्दमधुराम् ॥ ७ ॥

अथ श्री श ङ्क रा चा र्य परमगुरून् ब्रह्मविद्याप्रवर्तकाननुसन्धत्ते—परिव्राजामिति ॥ परिव्राजामाद्याः—

"ना रा य णं प द्म भु वं व सि ष्ठं श क्तिं च तत्पुत्र प रा श रं च ।
व्या सं शु कं गौ ड प दं यतीन्द्रं गो वि न्द योगीन्द्रमपि स्मरामि ॥"[1]

5 इति सम्प्रदायवित्कारिकारीत्या ब्रह्मविद्यायां श्री शु क शिष्याः परिव्राजामाद्या एतद्युगे प्रथमयतयः । श ङ्क रा चा र्य परमगुरवः । गहनतर मा ण्डू क्य विवृतेः अतिगहनाया मा ण्डू क्यो प नि ष द् विवृतेः—श्रुतिविवरणवैतथ्यप्रकरणाद्वैतप्रकरणालातशान्तिप्रकरणचतुष्टयरूपायाः प्रौढं यथा भवति तथा कर्तारः । परानन्दाभोगे पटुतरहृदः परानन्दानुभवे समर्थमनसः । गौ ड च र णाः कु रु-
10 क्षे त्र देशगत हि र रा व ती नदीतीरभवगौडजातिश्रेष्ठाः देशविशेषभवजातिनाम्नैव प्रसिद्धाः द्वापरयुगमारभ्यैव समाधिनिष्ठत्वेनाधुनिकैर्जनैरपरिज्ञातविशेषाभिधानाः सामान्यनाम्नैव लोकविख्याताः । चिदानन्दमधुराम् अखण्डसच्चिदानन्दरूपाम् । स्फूर्तिम् प्रतिभाम् । विदधतु कुर्वन्तु । इत्यन्वयः ॥ ७ ॥

[3b] स्फुटाटोपं टीका व्यरचि गुरुवाचां न र ह रेः
15 कृपापालीभूतैर्विशदवचसाऽऽपञ्चचरणम् ।
नयैः सद्भिर्यैस्ते क म ल च र णा चा र्य मणयो
नयन्त्वेनोहानिं विनयमपि चेतो मम सदा ॥ ८ ॥

अथ श्री श ङ्क र भ ग व त्पा द शिष्यं सर्वश्रेष्ठं प द्म पा दा चा र्य मौत्तरद्राविडाचार्यं प्रार्थयते—स्फुटेति ॥ न र ह रेः कृपापालीभूतैर्यैः प द्म पा दा-
20 चा र्यैः । गुरुवाचाम् गुरोः श्री श ङ्क रा चा र्य स्य वाचाम् शा री र क भा ष्यगिराम् । आपञ्चचरणम् पञ्चचरणपर्यन्तम् । टीका टीकेति प्रसिद्धा विवृतिः । स्फुटाटोपं यथा भवति तथा सु रे श्वा चा र्ये ण कनिष्ठेन मुख्य शा री र क-भा ष्य टीका मयि व्याख्यातरि जागरूके सति कथं विधेया, मयैव विधेया टीका, इत्याचार्याणामभ्यनुज्ञामाटोपसहितम्, परनिराकरणायाटोपापेक्षणात्,
25 प्राप्य । सद्भिर्नयैर्व्यरचि विरचिताऽभूत । ते क म ल च र णा चा र्य मणयः प द्म पा दा चा र्य गुरवः । एनोहानिम् ब्रह्मविद्याप्रतिबन्धकपापहानिम् । महत्सु ब्रह्मविद्याप्रवर्तकेषु विनयमपि । मम चेतः प्रापयन्तु । इत्यन्वयः ॥ ८ ॥

सु रे शा र्या वर्याः सुरगुरुसमाना धिषणया
स्वतन्त्राः स्वं तन्त्वं श त प थ शिर स्ति त्ति रि गिराम् ।
मुहुर्भाष्ये भाष्ये विमलवचनैर्वार्तिकवरं
स्फुरन्तु स्वच्छन्दं सपदि कृतवन्तः सुकृतिनः ॥ ९ ॥

5 अथातिकनिष्ठत्वेऽपि ब्रह्मविद्यारूपवार्तिकप्रवर्तकत्वेनातिश्रैष्ठ्यात् सु रे-श्व रा चा र्या नादावेवाभ्यर्थयते—सु रे शा र्या इति ॥ सु रे शा र्याः वि श्व-रू पा चा र्या इति प्रथमं प्रसिद्धाः । तदनन्तरं का श्यां दिक्पालावाहनेन सुरनाथ-स्यान्यैरदृष्टत्वाद् विश्वरूपैरेव दृष्टत्वाद् गुरुभिः सु रे श्व रा चा र्या इति दत्त-नामानः । धिषणया बुद्ध्या सुरगुरुसमानाः । स्वतन्त्रवार्तिककृत्त्वेनोक्तानुक्तदुरुक्त-10 चिन्तनकर्तृत्वेन भाष्यकारा इव स्वतन्त्राः पृथक्प्रस्थानस्य—व्याख्याभेदस्य प्रवर्तकाः । सुकृतिनः पूर्वं पूर्वकाण्डप्रवर्तकाः कु मा रि ल भ ट्टा चा र्य जामातरः शो ण भ द्रा तीरवासिनः पञ्चगौडान्तर्गताः । श त प थ शिर स्ति त्ति रि गिरां भाष्ये श्री श ङ्क र भ ग व त्पा द प्रणीते । मुहुर्भाष्ये मुहुरपि विचारार्हे । वार्तिकवरं स्वं तन्त्वम् शास्त्रम् उक्तानुक्तदुरुक्तचिन्तनपरत्वेन भाष्यवदेव शास्त्रम्—शासकम् । 15 सपदि सत्वरम्—प द्म पा दा चा र्या विघ्नं शा री र क भा ष्य इव मा कुर्वन्त्विति शीघ्रमेव । कृतवन्तः निर्मितवन्तः । स्फुरन्तु प्रतिभान्तु । इति समन्वयः ॥ ६ ॥

[4a] सदद्वैतानन्दे समरसतरे साधु चरतः
सदा द्वैताद् दूरे सकलमुनिमौलीन् समदृशः ।
20 समाराध्य स्वैरं सरससरसं तो ट क गु रू न्
समाधिप्रत्यूहान् हृदिह सहसा त्रोटयतु नः ॥ १० ॥

अथ सर्वकनिष्ठ सु रे श्व र परिग्रहात् कनिष्ठक्रमेण ह स्ता म ल क कनिष्ठान् सु रे श्व र ज्येष्ठान् समाधिनिष्ठान् श्रीगुरुप्रसादेन तो ट क वृत्तालम्बेनाद्वैतो-पदेष्टॄननुसन्धत्ते—सदिति ॥ समरसतरे जीवेशसामरस्यलक्षणैक्ये । सदद्वैतानन्दे 25 सति कालत्रयाबाध्ये । अद्वैते द्वैतविनिर्मुक्ते । आनन्दे अखण्डे । सदा द्वैताद् दूरे

द्वैतस्पर्शविनिर्मुक्ते । चरतः सञ्चरतः—तत्रैव निष्ठावतः । समदृष्टिभाजः शत्रुमित्रविभागादिरहितान् । सकलध्यानतत्परश्रेष्ठान् तो ट क गु रू न् गुरो-रनुग्रहतः शिष्यान्तरविश्वासाय तो ट क वृत्तेनाद्वैतोपदेष्टृत्वेन गुरुणा तो ट-का चा र्य इति विहितनाम्नः । सरससरसम् अतिसरसम् । स्वैरम् स्वेच्छया ।
5 आराध्य । इह वार्तिकप्रणयने । हृद् मदीयम् । प्रत्यूहान् विघ्नान् । सहसा हठेन । त्रोटयतु नाशयतु । इत्यन्वयः ॥ १० ॥

[4b] हृदम्भोजे हस्तामलकसममद्वैतममलं
हतद्वन्द्वं यस्य स्फुरति लसदानन्दमधुरम् ।
तमाचार्यं ह स्ता म ल क मखिलैर्मस्करिगणै-
10 र्निषेव्यं संसेवे निजगुणगणाराधितगुरुम् ॥ ११ ॥

अथ तो ट क ज्येष्ठान् ह स्ता म ल का नभिसन्धत्ते—हृदम्भोज इति ॥ यस्य ह स्ता म ल का चा र्य स्य । हृदम्भोजे लसदानन्दमधुरम् । हतद्वन्द्वम् परिहृतशीतोष्णादिद्वन्द्वम् । अत एव अद्वैतम् अखण्डसच्चिद्रूपम् । हस्तामलकसमं स्फुरति । तमाचार्यम् । मस्करिगणैः भिक्षुनिकरैः सेव्यमानम् । निजगुणगणेनाराधित-
15 श्री भ ग व त्पा द म् । ह स्ता म ल कं संसेवे । इत्यन्वयः ॥ ११ ॥

परिव्राट्सूत्रोढो मणिरनुपमाम्नायशिखराऽऽ-
करोद्गीर्णः कीर्णः सुदृढतरशाणे नयमये ।
मनोमञ्जूषायां रहसि गुरुणा यस्य निहित-
स्ततः शीर्णं भूयात् तिमिरमिह ह स्ता म ल क तः ॥ १२ ॥

20 अथ पुनरपि ह स्ता म ल कं प्रार्थयते—परिव्राडिति ॥ परिव्राट्सूत्रोढः परिव्राजो यतय एव सूत्रम्, तेनोढः प्रोतः । मणिः । अनुपमाम्नायशिखराकरोद्गीर्णः अनुपमः अतिकमनीयः, य आम्नायान्त एवाऽऽकरः खनिः, तस्माद् उद्गीर्णः निर्गतः । नयमये भि क्षु सू त्र लक्षणे शाणोपले दृढतरे कीर्णः घृष्टः—परिहृतकलङ्कः । गुरुणा श ङ्क र देशिकेन यस्य ह स्ता म ल क स्य मनोमञ्जूषायाम् हृदयपेटिका-
25 याम् रहसि गुप्ततया निहितः । ततः ह स्ता म ल का त् । इह वार्तिकविरचने । विद्यमानं तमः—अज्ञानम् । लीनं भूयात् । इत्यन्वयः ॥ १२ ॥

[5a]　सदा पू र्णा न न्दा न् सकलयमिनां मानसलस-
त्सरोजे सद्धंसानपि च सदसत्क्षीरपयसोः ।
परानाचार्यार्यान् परचिदमृताम्भोनिधिरस-
स्फुरच्चर्याधुर्यान् स्पृशतु धिषणा ध्यानसरणौ ॥ १३ ॥

5 अथ श्री श ङ्क र भगवत्पादशिष्यप्रवर्तितदशविधसम्प्रदायेषु श्री सु रे-श्व रा चा र्य प्रवर्तितानन्दसरस्वतीसम्प्रदायप्रवर्तकान् स्वकुलगुरून् पू र्णा-न न्दा ननुस्मरति—सदेति ॥ सकलयतिहृदयकमले सद्धंसान् परमहंसान् । सदसदर्थलक्षणक्षीरपयोविषयेऽपि हंसान् विभाजकान्—प्रपञ्चात् पृथक्कृत्या-खण्डविवेचकान् । परान् उत्कृष्टान् । अत एवाचार्याणामप्याचार्यान् । परचिद-10 मृतसमुद्रस्य यो रसः, तेन स्फुरन्ती या चर्या, तत्र धुर्यान् तद्भारसहिष्णून् । पू र्णा न न्दा न् कुलगुरून् ध्यानमार्गे मे धिषणा स्पृशतु स्मरतु सदा । इत्यन्वयः ॥१३॥

निषेवे निध्यातान् निखिलनिगमान्तप्रवचने
निरीहान् निर्व्याजं निजजनसमुद्धारणचणान् ।
15　निरूढज्ञानाढ्यान् नियमितविनेयांश्च पु रु षो-
त्त मा न न्दा न् वन्द्यान् विविधबुधवृन्दैरनुदिनम् ॥१४॥

अथ पू र्णा न न्द शिष्यान् पु रु षो त्त मा न न्दा न् नमस्करोति—निषेव इति ॥ सकलवेदान्तार्थनिरूपणे समर्थान् । निरीहान् । निर्व्याजम् निर्निमित्तम् । स्वीयजनानां संसारादुद्धारेण प्रसिद्धान् । निरूढज्ञानाढ्यान् परिपक्वात्मसाक्षात्कार-20 भाजो मर्यादायां स्थापितस्वशिष्यान् । सकलपण्डितैरपि अनुदिनं वन्द्यान् पु रु षो-त्त मा न न्दा न् निषेवे । इत्यन्वयः ॥१४॥

[5b]　स्फुटं शैषे शैले सुरतरुसुमं नन्दनवनात्
स्फुरद्गन्धोद्गन्धं दिशि दिशि समानीय रभसात् ।
पदाम्भोजे पूजा व्यरचि विधिवद् यैर्मुररिपोः
25　पदद्वन्द्वं चित्ते मम लसतु तेषां मुहुरपि ॥१५॥

अथ पुनरपि पु रु षो त्त मा न न्दा न् गुणविशेषैरनुस्मरति—स्फुटमिति ॥ शैषे शैले शेषसम्बन्धिपर्वते । योगमाहात्म्याद् । नन्दनवनात् इन्द्रोपवनात् । दिशि दिशि सर्वदिक्षु । स्फुरद्गन्धोन्नद्धम् परिमलसम्बद्धम् । सुरतरुसुमम् पारिजात-कुसुमम् । रभसात् वेगेन—अतित्वरितम् । समानीय मुररिपोः पदाम्भोजे पूजा 5 विधिवद् यैर्व्यरचि विरचिताऽभूत् । तेषां पु रु षो त्त मा न न्दा नां पदद्वन्द्वं मम चित्ते मुहुरपि लसतात् । इत्यन्वयः ॥१५॥

पुरः का ञ्ची नाम्न्या विमलमणिदीपायितवपुः
पुरा भोजंभोजं परमपरमान्नं प्रणिहितम् ।
परस्याश्चिच्छक्तेरतुलदयया तुन्दिलतरः
10 पुरस्ताद् मे नित्यं स्फुरतु शि व रा मो यतिपतिः ॥१६॥

अथ पु रु षो त्त मा न न्द विधेयान् शि व रा मा न न्दा ननुस्मरति—पुर इति ॥ का ञ्ची पुर्या मणिदीपायितस्फुरद्रूपः । परस्याश्चिच्छक्तेः का ञ्ची नगर्य-धिष्ठात्र्याः दयया तुन्दिलतरः विशिष्टतुन्दवान् । पुष्ट इति यावत् । प्रणिहितम् निकटे स्थापितं चिच्छक्त्या । परमम् उत्कृष्टम् परमान्नम् । पुरा पूर्वम् । 15 भोजंभोजम् भुक्त्वा भुक्त्वा । तुन्दिलः दयया । परमान्नेनापि तुन्दिलः । शि व-रा मो यतिराजो मे पुरस्ताद् नित्यं स्फुरतु । इत्यन्वयः ॥१६॥

[6a] हृदब्जे गो पा लो निवसतु यतीनामचरमो
निराघाटानन्दः सदयहृदयः सन्ततमपि ।
दयादीर्घापाङ्गैर्दलितमलमायो यमवतां
20 सतां सिद्धं सिद्धाञ्जनमिव विहीनाञ्जनचितिः ॥१७॥

अथ शि व रा मा न न्द विधेयं गो पा ला न न्द मनुचिन्तयति—हृदब्ज इति ॥ हृदयकमले यतीनाम् आद्यो निष्प्रतिबन्धज्ञानवान् सानुकम्पचित्तः सर्वदाऽपि सदयद्वीयोऽपाङ्गैर्यमवतां विनेयानां दलितमलमायः विदारिताविद्या-मायः सिद्धं सिद्धाञ्जनमिव विनेयानां सदर्थप्रदर्शकत्वात् सिद्धम्, सिद्ध-25 पुरुषाणामञ्जनमिव स्थितः विहीनाञ्जनचितिः निर्मलचितिस्वरूपः सततम् अपि गो पा ला नन्दः स्फुरतु । इति गोलार्थः ॥१७॥

स्व यं पूर्वान् सर्वानवितुमखिलाम्नायशिरसां
रसं दोहंदोहं सरसवचनैः साधु ददतः ।
वयं वारंवारं तदधिगमिताद्वैतसरलाः
प्र का शा न न्दा र्या न् हृदयकमलान्तर्विचिनुमः ॥१८॥

5 अथ गो पा ला न न्द शिष्यान् स्व यं प्र का शा न न्दा ननुस्मरति—स्वय-मिति ॥ सर्वान् जनान् अवितुं सर्ववेदान्तानां रसं दुग्ध्वा दुग्ध्वा सरसवचनैः अनुनयोपेतवचनैः साधु सम्यक्—अपरोक्षसाक्षात्कारो यथा भवति तथा ददतः स्व यं पूर्वान् प्र का शा न न्दा र्या न् स्व यं प्र का शा न न्द गुरून् तदधि-गमिताद्वैतसरलाः तैः स्व यं प्र का शा न न्द परमगुरुभिः ज्ञापिताद्वैतेनाखण्डेन 10 सरलाः संसारानाविष्टतया ऋजवः वयं हृदयकमलान्तर्विचिनुमः ध्यायामः । इति गोलार्थः ॥१८॥

[6b] दयाया वृद्धायाः सदृशपरिणत्या सरसया
दृशा पूतः पोतो विगलितमहामोहविभवः ।
चिदानन्दद्योतच्छमरससुधासागरवरान्
15 श्रये चेतोरङ्गे श्रमहरगिरः श्री ध र गु रू न् ॥१९॥

अथ स्वोपदेशगुरुमनुस्मरति—दयाया इति ॥ वृद्धायाः समृद्धाया दयायाः सदृशपरिणत्या समानपरिणामवत्या सरसया आर्द्रया येषां दृशा पोतः डिम्भः —बाल एव पूतः सन् विगलितमहामोहविभवः परिहृताविद्यातद्विलासः अहम-भवम् , तान् चिदानन्दद्योतच्छमरससुधासागरवरान् अखण्डचिदानन्दविलसच्छम-20 रसामृतसागरस्वरूपान् , श्रमहरा गीर्येषां तान् श्री ध र गु रू न् चेतोरङ्गे हृदयरूपनटनस्थाने श्रये । तत्र गुरुमूर्तिर्नृत्यतात् । इति भावः ॥१९॥

मदोन्मत्तद्वैतद्विरददृढकुम्भस्थलवर-
प्रभेदप्रद्योतन्नयनखरविस्फूर्जितवरान् ।

समन्तादुन्मुक्ताविरलवरमुक्तान् मृगपतीन्
सदा ब्रह्मानन्दान् सरलचरितान् साधु कलये ॥२०॥

अथ विद्यागुरून् गौडब्रह्मानन्दाननुस्मरति—मदेति ॥ कुतर्कलक्षण-
मदेनोन्मत्तो यो द्वैतगजः, तस्य दृढं यत् कुम्भस्थलवरम्, तस्य कुम्भस्थलवरस्य
5 प्रभेदेन प्रद्योतन्तो नया एव नखराः, तेषां यत् स्फूर्जितम् मस्तकपाटनशब्दः,
तेन श्रेष्ठान्। समन्तात् परितः। उन्मुक्ताविरलवरमुक्तान् उन्मुक्ताः गृहात् निर्गताः,
अविरलाः बहवः, वराः श्रेष्ठाः, मुक्ताः जीवन्मुक्ता एव। कुम्भपाटनावसरे
उन्मुक्ताः नखास्फालनवेगेनोर्ध्वं मुक्ताः, अविरलाः अधिकाः, वराः श्रेष्ठाः,
मुक्ताः मुक्ताफलानि यैस्ते तादृशाः, तान् ब्रह्मानन्दान्। मृगपतीन् सिंहान्।
10 सरलचरितान्। साधु यथा तथा कलये अनुचिन्तयामि। इत्यन्वयः ॥२०॥

[7a] उपेन्द्रा निस्तन्द्रा मुहुरपि दयासान्द्रहृदया
यतीन्द्राणां चेतःसरसिजवने चण्डघृणयः।
कलामन्दाश्चन्द्राः सकलकलिकासागरवरे-
ष्वमन्दानन्दानामधिवसतयो भान्तु हृदये ॥२१॥

15 अथ कनीयसोऽपि सब्रह्मचारिण उपेन्द्राननुस्मरति महाग्रन्थारम्भे
सुहृदामनुस्मरणस्योचितत्वात्—उपेन्द्रा इति ॥ आलस्यरहिता वाक्यार्थविचारे
दयापूर्णा यतीनां हृदयकमलवनरवयः सकलविद्यासागरेषु कलाभिः पूर्ण-
चन्द्रा आनन्दसमुद्राधिवसतयो मद्धृदये भान्तु। इति गोलार्थः ॥२१॥

यतीन्द्राणामिन्द्रा मम कमलनाभेन्द्रयतिराड्-
20 विनेया विद्यानां विविधतरकेलीगृहभुवः।
सदा देवा वासूत्तरकलितरूपा ननु पुरो
भवन्त्वग्र्यन्यायाकलनकुशलाः सर्वसुहृदः ॥२२॥

अथातिबाल्य एव शास्त्रारम्भकारयितॄन् गुरूननुस्मरति— यतीन्द्राणामिति ॥
पद्मनाभेन्द्रयतिशिष्याः। यतीन्द्राणाम् अपि इन्द्राः नियन्तारः। विद्यानां विविध-

विलासभुवः। अगृधन्यायाकलनकुशलाः आद्यं यद् न्यायाकलनम्, तत्र समर्थाः। प्रथमं न्यायारम्भकर्तार इति यावत्। वा सू त्तरकलितरूपा दे वाः वा सु दे वाः मम पुरो भवन्तु। इति भावः ॥२२॥

[7b] स्व यं पूर्वाः सर्वैरपि यतिभिरासेवितपदाः
5 प्र का शाः सन्त्वग्रे प्रथितयशसस्तीर्थमणयः।
यदीयाभिर्गीर्भिः समभिलषितार्थाभिरभितः
पदं चित्ते दत्तं प्रथममखिलज्यौतिषनयैः ॥२३॥

अथास्मिन् शास्त्रे सर्वविद्यानामपि संनिवेशात् तत्र तत्र तत्तद्विद्यास्फूर्तये तत्तद्विद्यागुरवो नमस्करणीया भवन्तीति ज्योतिःशास्त्रारम्भकर्तॄननुचिन्तयति
10 —स्व य मिति ॥ सर्वयतिसमाश्रितचरणाः स्व यं पूर्वाः प्र का शा स्तीर्थमणयः स्व यं प्र का श तीर्थवर्याः प्रथितकीर्तयो ममाग्रे विषयविशोधनकाले स्फुरन्तु। यदीयाभिर्गीर्भिः सन्दिग्धस्थले समभिलषितः वाञ्छितोऽर्थो यासु ताभिः। अखिलज्यौतिषनयैः सकलज्योतिःशास्त्रसम्बन्धिनयैः। प्रथमम् आदौ। मम चित्ते पदम् स्थानं कृतम्। ते पुरो भवन्तु। इत्यन्वयः ॥२३॥

15 यदीयापाङ्गानामहमभवमत्युद्भटदया-
रसार्द्राणां पात्रं प्रथममखिलध्वान्तमहसाम्।
समुन्मीलद्विद्यापरिकरसमुन्मेषणकृतां
बलाद् बा ला स्ते स्युः स्वयमिह पुरः कृ ष्ण शिरसः ॥२४॥

अथ विद्यासु प्रेरकान् सकलभेदमतनिराकर्तॄनुपदेशगुरुसतीर्थ्यानलङ्कार-
20 वा सु दे व शिष्यान् संस्मरति—यदीयेति ॥ प्रथमम् आदौ। अखिलध्वान्तानाम् अन्धकाराणाम्, महसाम् तेजोरूपाणाम्—तमोनिवर्तकानाम्। अत्युद्भटदया-रसैरार्द्राणां यदीयापाङ्गानाम् समुन्मीलन्ती या विद्या, मम तस्याः परिकरः समारम्भः, तदुन्मेषणकृताम् बलाद् एव विद्योदयसामग्रीसम्पादकानां श्री बा ल कृ ष्ण स र स्वत्यपाङ्गानाम्। अहं पात्रमभवम्। ते कृ ष्ण शिरसो

बा लाः बा ल कृ ष्णा न न्द स र स्व ती नामानः । इह वार्तिकसमारम्भे । स्वयम् एव पुरः स्युः भवन्तु । इत्यर्थः ॥२४॥

[8a] विराजन्तां विद्यासरणिषु विचित्रासु विशदं
चिरं चित्ते चिन्तामणय इव ति प्प न्न म खि नः ।
5 पुराऽऽवाले बाले मयि तरलकेलावकलयन्
कलाङ्कुरान् क्रूरामृतरसभरैर्येऽद्भुतदयाः ॥२५॥

अथ गृहस्थानपि स्वस्य विद्याप्रवर्तकाननुस्मरति चतुर्भिः श्लोकैः—विराजन्तामिति ॥ येऽधिककृपासरलास्ति प्प न्न दी क्षि ताः चपले बाले मय्यावाले सर्वविद्याङ्कुरान् अन्नामृतरूपरसभरैः कृतवन्तः, ते विद्यासरणिषु विचित्रासु
10 चिन्तामणय इव चित्ते चिरं विराजन्ताम् ॥२५॥

पुरस्तादास्तां मे सततमपि सौ न्द र्य शि ख री
दयादृष्ट्या दत्ता दमितहृदयोल्लासितमसा ।
पुरा ज्योतिर्विद्या पुलकितनया फुल्लहृदया
द्विजाग्रण्या येन द्युमणिसमभासा मतिमता ॥२६॥

15 पुरस्तादिति ॥ पुरो मे भूयात् सु न्द र गि रि नामा, येन दयादृशा निराकृतमनस्तमसा द्विजवरेण ज्योतिर्विद्या पुष्कला दत्ता ॥२६॥

यतीनामाज्ञाभिर्यमनियमचर्यापरवशः
शिशोः काव्यालापान् शिशिरतरवाचा व्यरचयत् ।
पुरा पुण्याग्रण्ये सततमपि योऽ ग्नी श्व र पु रे
20 स भूयोऽग्रे भूयाच्चटुलचरितो वे ङ्क ट क विः ॥२७॥

यतीनामिति ॥ वे ङ्क ट क विः अग्रे भूयात्, पूर्वं यश्चो ल दे श स्था ग्नी श्व र-क्षे त्रे काव्यकुशलं मामतनोत् ॥२७॥

वचांसि व्याकुर्वन् व र रु चि गिरां यो विवरणं
विशालं व्यातेने विविधनयविन्यासविमलम् ।

विजानंस्तज्जीनं पुनरपि नवीनं कलयितुं
स ना गे शः श्रीमाञ्जयति जगतामादिमगुरुः ॥२८॥

वचांसीति ॥ यो म हा भा ष्यं स्वीयमेव नवीनं कर्तुमुद्युक्तो जगतां मूलभूतः ना गे श्व रो जयति। इति भावः ॥२८।

5 [8b] क्व वा भाष्याम्भोधिर्नयनिचयगम्भीरहृदयो
विपक्षैराकीर्णस्तरलतरभङ्गैर्भृशमपि ।
कृपैवैका नौका सपदि भगवत्पादविहिता
परं पारं गन्तुं जयति मतिपङ्गोर्मम सदा ॥२९॥

अथ भाष्याम्भोधेरतिगहनस्य वार्तिकलक्षणं सन्तरणं मतिपङ्गोः कथं घटत
10 इत्याशङ्क्य श्री श ङ्क र देशिककृपामयी नौकैव तत्सन्तारणे मुख्यं साधनमित्याह—कृपैवेति ॥ नयनिचयगम्भीरहृदयः न्यायनिकरपूर्णहृदयः। विपक्षैः परवादिकृतपूर्वपक्षैः तरलतरभङ्गैः अतिचपलतरङ्गैः भृशमाकीर्णः। क्व वा भवति मया मनसाऽपि स्मर्तुमशक्यः मतिपङ्गुत्वात्। तथाच तदुपर्युक्तानुक्तदुरुक्तचिन्तनरूपे वार्तिके मम नैवाधिकार इति भावः। तथापि भगवत्पाद-
15 विहिता कृपैवैका नौका मतिपङ्गोर्मम भाष्याब्धिपारं परं गन्तुं सपदि जयति। तथाच श्रीभगवत्पाददयानौकया भाष्याब्धेर्वार्तिकलक्षणं सन्तरणं भवेदेव। इत्याशयः ॥२९॥

अपनयतिमिरावृतायां हृदयगुहायां सदद्वयार्थाप्त्यै ।
श्रीम च्छ ङ्क र यतिवरवाणी मणिदीपिकायिता जयति ॥३०॥

20 अथाखण्डार्थस्फूर्तिर्भाष्यकृद्वचसैव स्वस्य जायेतेति दर्शयति—अपनयेति ॥ हृदयगुहायाम् बुद्धिगुहायाम् अपनयतिमिरावृतायाम् सदद्वयलक्षणार्थप्राप्त्यै श्रीभगवत्पादवाण्येव मणिदीपिकायिता प्रकाशते। इत्यर्थः ॥३०॥

[9a] पुरैव प्राचार्यैर्विशदविवृतं नीतिनिपुणैः
श्रुतिं सूत्रं भाष्यं मुहुरपि समालोच्य सकलम् ।

यति र्बा लो नव्यद्रविडमुनि रा म्ना य न ग रा-
धि भूः कृ ष्णा न न्दः स्वमतिपरिशुद्धिं वितनुते ॥३१॥

अथैतद्वार्तिककरणं न भाष्यविवृतये, न वाऽतीव परेषामुपकाराय, किन्तु स्वस्यैव भाष्यार्थपरिस्फूर्त्यर्थमित्याह—पुरैवेति ॥ नीतिनिपुणैः प्रज्ञैः पुरैव
5 पूर्वमेव विशदं यथा भवति तथा विवृतम्। अनेन न गूढभाष्यविवरणं लोकोपकाराय वार्तिकेन भवेत्, प्राचीनटीकाभिरेव विशदीकरणादिति सूचितम्। प्राचीनैर्विवृतं श्रुतिं सूत्रं भाष्यं सर्वमपि समालोच्य मुहुरपि विचार्य। नव्यद्रविडमुनिः अभिनवद्रविडाचार्यः। आ म्ना य न ग रा-धि भूः श्रु ति न ग रे श नामा। बा लः कृ ष्णा न न्दः बा ल कृ ष्णा न न्दः।
10 वार्तिकेन करिष्यमाणेन स्वमतिपरिशुद्धिं स्वमतेस्तत्तच्छ्रुतितात्पर्यनिर्णयेन स्वबुद्धिदार्ढ्यम्। वितनुते विस्तारयति। इत्यर्थः ॥३१॥

म हा दे वः श्रीमान् समधिगततत्त्वो वटुवरो
महान् कै ला से शः सकलयतिसंसेवनपरः।
विशेषं जानीतां विशदवचनैर्भाष्यवचसा-
15 मितीयं सञ्जाता जगति कृतिरग्र्या विजयताम् ॥३२॥

अथ स्वमतिपरिशुद्धिवत् स्वीयविनेयबुद्धिदार्ढ्यमपि वार्तिकस्यास्य फलमित्याह—म हा दे व इति ॥ वटुवरः ब्रह्मचारी। म हा दे वः श्रीमान् ज्ञानलक्ष्मीयुतः। अत एव समधिगततत्त्वः ज्ञातपरमार्थः। तत्र सन्देहनिवृत्तये सर्वयतिसेवनपरः। महान् तत्त्वाभिज्ञत्वात् स म हा दे वः कै ला से शः भाष्यवचसां
20 विशेषम् तात्पर्यभेदं जानीतामिति हेतोः सञ्जाता कृतिः वार्तिकलक्षणा। अग्र्या श्रेष्ठा। विजयताम्। इत्यर्थः ॥३२॥

[9b] सज्जनमानससरसिजसहस्रकिरणं समस्तमुनिसेव्यम्।
स त्य व ती सु त मनिशं संसेवेऽचरमयोगसंशुद्ध्यै ॥३३॥

अथैतावता प्रबन्धेन भाष्यमात्रविवरणाय स्फूर्त्यै प्रत्यूहनिवृत्तये च गुर्वादि-
25 स्मरणरूपं मङ्गलमाचरितं निबद्धम्। सम्प्रति जिज्ञासासूत्रभावस्फूर्त्यै वे द व्या सं

**प्रणमति**—सज्जनेति ॥ सज्जनमानससरसिजसहस्रकिरणम् **साधुजनमानसकमले सहस्रांशुं विकासकम्** । समस्तमुनिसेव्यम् **सर्वैर्मुनिभिः संसेव्यम्** । स त्य व ती-सु त म् **श्री वे द व्या सं सूत्रकर्तारम्** । अचरमयोगसंशुद्धैय **प्रथमसूत्रसंशुद्धये—प्रथमसूत्रार्थपरिष्काराय** । अनिशम् **सन्ततम्** । अहं संसेवे । **इत्यन्वयः** ॥ ३३ ॥

5 श ङ्क र यतिवरचरणं शरणीकरवाणि शर्मकरणमहम् ।
गहनज्ञेयभरान्तरजिज्ञासाभाष्यभावसंसिद्ध्यै ॥३४॥[1]

**प्रथमं जिज्ञासासूत्रभाष्यभावज्ञानाय भाष्यकृच्चरणावनुस्मरति**—श ङ्क रे ति ॥ अहम् **वार्तिकोद्युक्तः** । शर्मकरणम् **आनन्दहेतुभूतम्** । श ङ्क र यतिवरचरणम् **श ङ्क र भगवत्पादचरणम्** । गहनः **दुर्विज्ञेयो यो ज्ञेयार्थानां** भरः **गौरवम्,**
10 **तदन्तरे यस्य, ईदृशं यद् जिज्ञासासूत्रस्य भाष्यम्, तस्य भावसंसिद्ध्यै** भावः **तात्पर्यम्** तत्संसिद्ध्यै **तज्ज्ञप्त्यै** । शरणीकरवाणि । **इत्यर्थः** । **अनेन श्रीभगवत्पादानुस्मरणमेव भाष्यतात्पर्यज्ञापकमिति भावः** ॥ ३४ ॥

1 एतर्हि वार्तिकैर्दशनामसंप्रदायाः भगवत्पादान्तेवासिप्रवर्तिताः, तेष्वानन्दसरस्वतीसंप्रदायप्रवर्तकाः श्रीसुरेश्वराचार्याः, तत्परम्परायां तु न तीर्थाश्रमवनारण्यगिरिपुरी-
15 पर्वतसागरभारतीनामानः परमहंसाः, श्रीपुरुषोत्तमानन्दशिवरामानन्दगोपालानन्दप्रकाशानन्दसरस्वत्यः श्रीगौडब्रह्मानन्दसरस्वतीपूर्वाचार्याः, अभिनवद्रविडाचार्यश्रीबालकृष्णानन्दसरस्वत्यः श्रीगौडब्रह्मानन्दसरस्वत्यादीनाम्, अन्ये च केचनोपेन्द्राभिधानादयोऽन्तेवासिनः, गौडपादाचार्या अद्वैतसंप्रदायाचार्या एवेति विशदमवगम्यते । एते हि विश्वगुणादर्शचम्पूकर्तॄणां श्रीवेङ्कटकवीनामप्यन्तेवासिनः । एत एव सिद्धान्तसिद्धाञ्जनकाराः ।
20 एतेषामाचार्या अपि बालकृष्णानन्दसरस्वत्यः । एते त्वभिनवद्रविडाचार्यत्वेनापि प्रसिद्धाः । एतेषां दृष्ट्या विश्वरूपाचार्याः सुरेश्वराचार्याश्चैके । सुरेश्वराचार्या हि कुमारिलभट्टजामातरः शोणभद्रातीरवासिनः । नवमश्लोकेऽतिकनिष्ठत्ववर्णनाद् मण्डनमिश्राणामेवाश्रमनाम विश्वरूपाचार्या इत्यप्यवगम्यते, यतः कनिष्ठत्वमाश्रमदृष्ट्यैव न वयोदृष्ट्या । अत्रैव काश्यां दिक्पालावाहनेन सुरनाथस्य विश्वरूपैरेव दर्शनवर्णनाद् आनन्दगिरिशङ्करविजय-
25 प्रामाण्यमिमे मन्यन्ते ॥

## ॥ अथातो ब्रह्मजिज्ञासा ॥ I. 1. 1.

[10a] अथ साधनचतुष्टयसंपत्त्यनन्तरम् अतः उत्कृष्टफलदर्शनात् ब्रह्मजिज्ञासा भवतीति ब्रह्मविचारः कर्तव्य इति वाऽर्थः। यद्वा—ब्रह्मविचारोऽधिक्रियत इत्यर्थः ॥

अत्रेदं विचार्यते—आनन्तर्यपरमथपदमिति पक्षेऽथपदमसङ्गतमेव। पूर्वं कस्मिंश्चिदर्थे प्रस्तुते तदनन्तरमथपदं श्रूयमाणं प्रस्तुतार्थानन्तर्यं गमयेत। प्रकृते चैतस्यैव सूत्रस्यादित्वेनेतः पूर्वम्—"अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे"[1]ति मी मां सा चतुर्थाध्यायगतसूत्रादेः शेषशेषिभावादेरिव कस्यचिदर्थस्याप्रस्तुतत्वेन किमानन्तर्यं गमयेदथपदम्। अतोऽसङ्गतार्थमेव। किञ्चातःपदमप्यसङ्गतमेव ; तस्य सर्वनाम्नः प्रस्तुतस्य कस्यचिद् नियमेनोपस्थानार्हस्याभावेन परामर्शकत्वायोगात्। अपिच "ब्रह्मजिज्ञासे"ति समासोऽनुचितः ; उत्तराधिकरणसूत्रेषु साकाङ्क्षेषूपक्रमसूत्रगतब्रह्मपदानुषङ्गेणैव वाक्यस्य पूरणीयत्वेनासमस्तानुषङ्गस्यैव सरसतरत्वेन समासैकदेशानुषङ्गे विच्छेदविभक्तिविपरिणामादिक्लेशप्रसङ्गेन ब्रह्म जिज्ञास्यमित्येव रचनौचित्यात्। किञ्च ब्रह्मण एव परमपुरुषार्थरूपत्वेन प्रकृतशास्त्रे विवक्षणात् तत्प्राधान्येन प्रथमान्तमेव ब्रह्मपदमुचितम्, न समस्तम् ॥

अथेदं सूत्रं श्रुतिमनपेक्ष्य न विचारकर्तव्यतापरम्, किन्तु श्रुतिव्याख्यापरमेव ; प्रतिज्ञापरताया अदृष्टफलत्वात्, विचारादेः केवलानुवादेऽपि [10b] प्रयोजनाभावात्। विचारकर्तव्यतायाश्च ज्ञानार्थं लोकत एव प्राप्तत्वेन तदनुवादेऽपि प्रयोजनादर्शनादिति पक्षेऽपि शब्दप्रत्यभिज्ञानस्य सूत्रे "तद् ब्रह्म"[2] "तद्विजिज्ञासस्वे"[3]ति ति त्ति रि श्रुतिमवलम्ब्य प्रवृत्तेः, ति त्ति रि वचस्सु च "तद् ब्रह्मे"[4]त्यादिषु साधनचतुष्टयफलयोः सङ्कीर्तनादर्शनेन तद्वाक्यव्याख्यापरेऽप्यस्मिन् सूत्रे साधनचतुष्टयानन्तर्यफलपराथातःपदयोरनौचित्यात्, साधनप्रकरण एव साधननिर्देशौचित्येनेह तज्ज्ञापने प्रयोजनाभावाच्च पूर्ववदेवाथातःपदासाङ्गत्यं भवति ॥

अपिच "अथात" [5]इत्यत्राथपदमानन्तर्यार्थकमिति कथनमेवासङ्गतम् ; शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यतीति नयेन ब्रह्मजिज्ञासाऽधिक्रियत इत्यथशब्दस्या-

धिकारार्थताया एवोचितत्वात्, इतरथाऽनाकाङ्क्षितामानन्तर्यार्थतामभ्युपेत्य ब्रह्मजिज्ञासा कर्तव्येत्यध्याहारेणान्वये आकाङ्क्षितार्थसमर्पणे संभवत्यानाकाङ्क्षितार्थसमर्पणमन्याय्यम्, अनध्याहारेणान्वये संभवत्यध्याहारकल्पनमन्याय्यमिति न्यायद्वयविरोधापत्तेः ॥

किञ्च श्रुतिव्याख्यापरमिदं सूत्रमिति कथनमेवासङ्गतम्; तथात्वे ब्र ह्म व ल्ल्यनन्तरमेव भृ गु व ल्ली प्रवृत्तेः, भृ गु व ल्ल्यामपि "यतो वा इमानी"[1]ति वाक्यानन्तरमेव "तद् ब्रह्म"[2]त्यादिवाक्यप्रवृत्तेः क्रमेणैव सन्दिग्धार्थकवाक्यव्याख्यानसंभवे व्युत्क्रमेण व्याख्यानानौचित्यादादावानन्दमयाधिकरणम्, ततः पश्चाद् जन्माद्यधिकरणम्, ततः परं जिज्ञासासूत्रमित्येव विरचनस्य न्याय्यत्वेन प्रथमं जिज्ञासासूत्रनिर्देशस्यानुचितत्वात्। किञ्च विषयवाक्ये विजिज्ञासस्वेति [11a]मध्यमपुरुषविध्यंशयोर्दर्शनेन सूत्रेऽस्मिंस्तदंशानुपादानमनुचितमेव। विचारांशस्य मुमुक्षुजनमात्रसाधारणत्वेन भृ गु व रु ण संवादेन कथाप्रस्तावात् कथानुरोधेन मध्यमपुरुषोपादानेन तस्यान्यथासिद्धत्वात् तदंशाविवक्षायामपि विध्यंशस्य विचारगतस्याविवक्षायां मानाभावात् तदंशापरिग्रहः सुतरामनुपपन्न एव। एवं च ब्रह्म जिज्ञासितव्यमिति विध्यंशसहितमेव विरचने संभवति तत्परिहारेण ब्रह्मजिज्ञासेति विचारमात्रप्राधान्येन विरचनं यथाश्रुत्यसङ्गतमेव भवति ॥

अपिचाथपदस्याधिकारार्थकत्वेन प्रतिज्ञापरमिदं सूत्रमिति पक्षोऽप्यसङ्गतः। अस्य सूत्रस्य ब्रह्मविचाराधिकारपरत्वे सर्वमपि शास्त्रं ब्रह्मविचारपरमपेक्षितं स्यात्, न तथोपलभ्यते; प ञ्चा ग्नि वि द्या दिपरविचाराणामपि बहुधा दर्शनात् ॥

किञ्च सूत्रगतब्रह्मपदं किं सगुणब्रह्मपरम्, किं वा निर्गुणब्रह्मपरम्, किं वोभयपरम्। निर्गुणपरमिति पक्षेऽपि किमखण्डार्थपरम्, किं वा शोधितेशपरम्, किं वा शोधितजीवपरम्, किं वा सामान्यतो निर्गुणपरमिति निर्धारणाभावादनिर्धारितः शास्त्रार्थः स्यात् ॥

भाष्ये प्रथमतोऽध्यासनिरूपणमसङ्गतम्; "अथात"[3] इति सूत्रे ब्रह्मविचारः कर्तव्य इत्येव विवक्षितत्वेन भ्रमप्रसङ्गाभावात्, सूत्रानारूढभ्रमनिरूपणस्य भ्रान्तप्रतारकवाक्यसाम्यापादकत्वेनानुपादेयत्वप्रसङ्गात् ॥

अथ—ब्रह्म शुद्धं जिज्ञास्यमखण्डपुरुषार्थलाभायेति सूत्रतात्पर्यात् प्रपञ्च-

स्याध्यस्तत्वेन सद्वयत्वापा[11b]दकत्वाभावात् शुद्धाखण्डमेव विचाराधीन-
ज्ञानात् सिद्ध्यतीति ज्ञापयितुं प्रथमतोऽध्यासनिरूपणमिति—चेत्, एवमप्य-
सङ्गतमेव ; प्रपञ्चसामान्याध्यासनिरूपणाभावात्, त्वम्पदार्थाध्यासमात्रस्या-
हमिदमित्यादिना प्रदर्शनात् ॥

5 किञ्चाध्यासप्रत्याख्यानावसरे तमःप्रकाशवद् विरुद्धस्वभावयोः प्रत्यक्पराचोः
परस्पराध्यासो न भवितुमर्हतीति सदृष्टान्तमुक्तम। तत्र दृष्टान्त एवासङ्गतः ;
पेचकादीनां सावित्रादिप्रकाशेऽपि तमस्त्वारोपदर्शनेनात्यन्तविरोधाभावेन
प्रत्यक्पराचोरपि तथाऽध्यासोपपत्तेः ॥

अपिच स्वयं पूर्वमध्यासस्याप्रस्तुतत्वात् "अथात" इति व्याख्येयसूत्रे चाध्या-
10 सापरिग्रहाद् युष्मदस्मदित्यादिनाऽध्यासनिराकरणमकाण्डताण्डववदनुक्तोपालम्भ-
दोषावहमेव भवेत् ॥

किञ्च विषयविषयिणोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतर-
भावानुपपत्तिरित्यत इति प्रतिपाद्यमाना धर्मिणोस्तादात्म्यानुपपत्तिर्धर्माणामित-
रेतरधर्मानुपपत्तिश्च हेतुः किं मिथ्येति भवितुं युक्तमित्यत्रान्वेति, किं वाऽध्या-
15 सेऽन्वेति। नाद्यः ; शुक्तिरजतयोस्तद्धर्मयोश्चेतरेतरभावे वस्तुतः सती-
तरेतरभावज्ञानस्य प्रमात्वाद् इतरेतरभावानुपपत्तौ सत्यामेवेतरेतरभाव-
ज्ञानस्य भ्रमत्वेन भ्रमत्व इतरेतरभावानुपपत्तेर्हेतुतया अध्यासो मिथ्येति
भ्रमत्वप्रत्याख्याने हेतुत्वानौचित्यात्। न द्वितीयः ; अध्यास एवेतरेतर-
भावानुपपत्तेर्हेतुत्वेनान्वये सति अध्यासो मिथ्येतीत्यत्रापरो [12a] हेतुर्नोक्त इति
20 मिथ्येतीति कथं न प्रतिज्ञामात्रमेवेति स्वाभिमतार्थासिद्ध्यापत्तेः, अध्यास
एवेतरेतरभावानुपपत्तेरन्वये तमःप्रकाशवद् विरुद्धस्वभावयोरिति कथनस्य सहा-
नवस्थानादिनियमलक्षणविरोधप्रतिपादनपरस्यानुपयुक्तत्वापत्तेः, शुक्तिरजतयोः
सहावस्थाननियमाभावेऽपीतरेतरभावानुपपत्तेः सिद्धत्वाद् इतरेतरभावानुप-
पत्तिमात्रेण च तदुभयतादात्म्यादिप्रत्ययलक्षणभ्रमसिद्धेः, कौशिकादेः
25 सौरालोकेऽपि वस्तुतो विरुद्धे तमस्त्वारोपाद् रात्रौ ब्रह्माण्डोदरे दर्शान्धकारे
दिवाऽपि गुहासु गाढान्धकारे वस्तुतो विरुद्धे प्रकाशत्वारोपात्, पर्वाञ्जना-
यक्तनयनस्य महाचन्द्रप्रकाशत्वारोपाच्च परस्परविरुद्धत्वस्येतरेतरभावानुपपत्तौ
भ्रमे भ्रमत्वप्रत्याख्याने चानुपयोगात् ॥

अथेतरेतरभावपदमितरेतरभावप्रत्ययलक्षणभ्रमपरम्, तमःप्रकाशवद् विरुद्ध-

स्वभावयोरिति पदमन्यनिवृत्त्यात्मकात्मलाभरूपघात्यघातकभावात् सहानवस्थाननियमसंपन्नत्वेन ज्ञातयोरित्यर्थकम्। एवं च तादृशनाश्यनाशकभावेन प्रमितसहानवस्थाननियमयोरितरेतरभावभ्रमः क्वापि न दृष्ट इति ज्ञातत्वेन ज्ञातघात्यघातकभावो भ्रमानुपपत्तावेव हेतुरिति यदि, तर्हि पूर्वोक्तहेतोरेवेतरेतरभावभ्रमानुपपत्तिः, इत्यतोऽध्यासो मिथ्येत्यन्वयावश्यंभावेनानुपपत्तिरित्यन्तेनैवाध्यासाक्षेपसिद्धेः इत्यतोऽस्मत्प्रत्ययेत्यादिः—भवितुं युक्तमित्यन्तो ग्रन्थः पुनरुक्तकल्प एव भवेत्॥

ननु—"स्वपदानि च वर्ण्यन्त"[1] इति भाष्यलक्षणात् पुनरुक्तिर्न दोषायेति—चेत्, तथा सति अत इति हेतुपरं पदमनर्थकमेव भवेत्; तस्यान्वयाभावात्॥

अपिच चिज्जडयोर्घात्यघातकभावलक्षणविरोधस्य लोकानुभवविरुद्धत्वाद् नीरक्षीरन्यायदर्शनेन तमःप्रकाशन्यायादर्शनाद् भ्रमो घटत एवेति तन्निराकरणमयुक्तमेव॥

किञ्च कौशिकादेः सौरालोके तमस्त्वारोपस्यान्धकारे प्रकाशत्वारोपस्याञ्जनाक्तनयनस्य तमसि प्रकाशत्वारोपस्य च दर्शनेन घात्यघातकयोरितरेतरभावभ्रमः क्वापि न दृष्ट इति कथनमप्यनुपपन्नमेव।

अपिच तमःप्रकाशवद् विरुद्धस्वभावयोरित्यत्र तमोविरुद्धगुणः [12b] प्रकाशः, प्रकाशविरुद्धगुणं तम इति भेदेन प्रतीयमानयोरभेदप्रत्ययानुपपत्तिवद् आत्मनः स्वप्रकाशत्वेन मनोबुद्ध्यादेः प्रकाश्यत्वेन चात्मनः संनिधाने मनआदीनां प्रकाशकभिन्नत्वेनैव भानौचित्यात् चित्संनिधाने विद्यमानस्य प्रकाशावश्यंभावेन मनआदिधर्मिवत् तद्गतचिद्भेदस्यापि सत्त्वेन तद्भानावश्यंभावेनाभेदभ्रमो नैवोपपद्यत इति पूर्वपक्षतात्पर्ये सति तथाऽप्यन्योन्यस्मिन्नित्यादिसिद्धान्तग्रन्थेन चैतन्यं स्वप्रकाशं स्वसंनिहितसर्वपदार्थानां याथातथ्येन स्वरूपप्रकाशकं भवेत्, यदि चैतन्यमिदमविद्यादोषेणानावृतं भवेत् लवणेनेव जलम्, नतु तथा, परन्तु जीवचैतन्यमिदमनाद्यविद्ययाऽऽवृतं सद् जडकल्पमेव॥

"जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः॥"[1]

इति सिद्धान्तेन चैतन्यावरणस्यानादित्वस्वीकाराद् जडकल्पस्य जीवस्य नित्यसुखांशवद् नित्यचैतन्यांशस्याप्यावृतत्वेन स्वप्रकाशत्वपरप्रकाशत्वादेरभावेन, संसारस्यानादित्वेन लिङ्गदेहस्याप्यनादितयाऽविद्यावत्पुरुषाश्रितत्वेन लिङ्गदेह-

गतान्तःकरणाश्रितक्रमपरिपाकवशेन तत्तल्लोकोचितस्थूलदेहपरिग्रहेणेन्द्रिय-
वर्गस्य लब्धपदत्वे सति पदलाभस्य मन्दमध्यमोत्तमत्वादिभेदेनान्तःकरणादि-
वृत्तेरपि तथा तारतम्येन तरतमभावेन लब्धपदकान्तःकरणप्रफुल्लतारतम्येना-
विद्यावरणे तरतमभावेन तिरस्कृते सति चिदंशस्य सर्वांशेऽप्यनभिव्यक्तत्वेन
5 लेशतोऽन्तःकरणतद्वृत्त्यादौ [13a] स्फुरणे सत्यपि चैतन्यान्तःकरणलिङ्गदेहा-
द्यंशे भेदांशास्फुरणे पूर्वपूर्वाभेदवासनाप्राबल्येनावशतोऽभेदाकारान्तःकरण-
वृत्तौ चैतन्यस्फुरणे सति साहजिकोऽहमिदमित्यादिरूपेण व्यवहार इति
तात्पर्यस्फोरणात् कथं पुनरित्यादिद्वितीयाध्यासाक्षेपो नैवोत्तिष्ठति ॥

तथाहि। विषये सति बाह्येन्द्रियविषयाकारवृत्तिद्वारा वा साक्षाद् वाऽन्तः-
10 पदार्थस्थले विषयाकारायां मनोवृत्तौ चैतन्यस्फुरणे सति सा वृत्तिः प्रमेति
व्यवह्रियते। यत्र वल्मीकादौ दूरत्वादिदोषमहिम्ना वल्मीकाद्याकारक-
बाह्येन्द्रियवृत्त्यजनने पुरोवर्तिपदार्थगतसामान्याकारवृत्तौ बाह्येन्द्रियस्य जातायां
तत्सदृशपदार्थान्तरस्य घटादेर्वासनासमुद्बोधात् सदृशपदार्थान्तराकारायां
मनोवृत्तौ पुरोवर्तिपदार्थगतबाह्येन्द्रियवृत्त्यवच्छेदेन जातायां चैतन्यस्फुरणे
15 सति पुरोवर्तिविषयविशेषांशानवगाहित्वे सति घटोऽयमिति भिन्नाकारा-
वगाहित्वाद् भ्रम इति गीयते। एवं केकरयोरक्ष्णोश्चन्द्रमण्डलं प्राग्दिशि
विद्यमानं संस्पृश्य केकरत्वदोषेण मण्डलं विहाय दक्षिणोत्तरयोरक्षिव्यत्ययेन
ब्रह्माण्डतलगतयोश्चन्द्राकारग्राहिणोस्तत्प्रभाद्वारकमनोवृत्तिद्वारा चैतन्यस्फुरणे
सति द्वाविमौ दक्षिणोत्तरगतौ चन्द्राविति व्यवह्रियते। तत्र पूर्वदिक्स्थं
20 चन्द्रं स्पृष्ट्वा तदाकारं गृहीत्वा दक्षिणोत्तरयोश्चन्द्राविति ग्रहणेन प्रसिद्धचन्द्र-
स्थाने ग्रहणाभावाद् द्वित्वभानाच्च भ्रम एवायं [13b] भवति। एवं पीतः शङ्खः
इत्यत्र पित्तद्रव्यशबलचक्षुःप्रभायाः शङ्खसंस्थानपरिणामे सति शङ्खरूपग्रहण-
विषये पित्तद्रव्यसंवलनेन सर्वरूपाकारपरिणामसामर्थ्यसंवलितचाक्षुषशुक्ल-
भास्वररूपस्य प्रतिबन्धात् पित्तद्रव्यगतरूपमेव चक्षुःप्रभाद्वारा बहिर्निर्गतं शङ्खं
25 हरिद्रारसवदावृणोति। ततश्चक्षुःप्रभापरिणाम एव मनोवृत्तिद्वारा चैतन्य-
स्फुरणेन प्रकाशते। रूपांशमपहाय चाक्षुषप्रभाद्वारा शङ्खसंस्थानमपि प्रकाशते।
तत्रेशसृष्टशङ्खजीवनिर्मितशङ्ख्योर्विभिन्नरूपयोरेकत्वग्रहादीशशङ्खरूपविपरीतरूप-
वत्त्वेनेशशङ्खग्रहणादयं भ्रम एवेति व्यवह्रियते। एवमयं घट इति ज्ञानमपि
सर्वलोकैरपि भ्रमत्वेन व्यवह्रियमाणमपीशनिर्मितबाह्यघटे जीवनिर्मितचाक्षुष-

प्रभापरिणामलक्षणघटस्य लेपरूपतया पृथग् विवेकेन कर्तुमशक्यत्वाद् घटयोरैक्यस्याविद्यमानस्य भानादैक्यांशे भ्रमात्मकमेवोचितं भवति। परन्तु यत्र जीवप्रपञ्चेनेशप्रपञ्चोऽविकल्पो व्यवहारपदमधिरोहति, तत्र तज्ज्ञानं प्रमेति गीयते। यत्रेशप्रपञ्चो व्यवहारे विकल्प एव, तत्र तज्ज्ञानं भ्रम एवेत्युच्यत
5 इति विभागः। मनोरथस्तु यत्नपूर्वको वासनामयो मनोमयप्रपञ्चो जैव एव। स्वप्नोऽपि वासनामयो मानस एव प्रपञ्चोऽयत्नपूर्वको नाहार्यः। ईश्वरप्रपञ्चानुरूपं वासनाजन्यं ज्ञानं स्मरणं यथार्थम्। ईशप्रपञ्चाननुरूपं वासनाभवं ज्ञानमयथार्थस्मरणम्। एवमसदर्थाकारपरिणामो मनसश्चैतन्य-स्फुरितो भ्रमोऽन्तर्बाह्यो चेति सिद्धं भवति। एवं च निरुक्तेऽन्तर्बाह्यसाधारणे
10 भ्रमस्वरूपे तथाप्यन्योन्य[14a]स्मिन्निति ग्रन्थेन विवक्षिते सति सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यतीति भ्रममात्रावलम्बेन पूर्वपक्षोत्थापनमसङ्गतम्; आन्तर-भ्रमोपपादनेनैव पूर्वं सिद्धान्तस्य प्रवर्तनीयत्वात्, सत्यानृते मिथुनीकृत्याहमिदम् ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः इत्यक्षराणामान्तरभ्रमोपपादनेनैव निर्वाह्य-त्वात्, युक्तिभिरान्तरभ्रमे स्पष्टंनिरूपिते बाह्यभ्रमसामग्र्यभावात् कथमान्तरो
15 भ्रम इति शङ्कोत्थापनायोगात्, प्रत्यक्षे युक्तिभिर्विभिन्नजातीयत्वेन साधिते सत्यनुमितिसामग्र्यभावात् कथं प्रत्यक्षं भवतीति वक्तुमशक्यत्वात्, असदर्था-कारवृत्तेश्चैतन्यस्फुरणे सति भ्रमत्वमित्येवान्तर्बाह्यसाधारण्येन भ्रमलक्षण-स्यावश्यं तथाऽप्यन्योन्यस्मिन्नित्यादिग्रन्थस्वारस्येनाभ्युपेयत्वात्॥

अपिच न तावदित्यादिद्वितीयपूर्वपक्षादिसमाधानमनिर्वाह्यमेव। न चाय-
20 मेकान्तेनाविषयः; अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरिति किल पठ्यते। तत्रास्मत्प्रत्ययविषयत्वेनात्मनो विषयत्वाद् विषयतद्धर्माणां तत्राध्यासो घटत इति किल तस्यार्थः। तत्र शुद्धस्य चैतन्यस्य स्व-प्रकाशत्वेन शास्त्रसिद्धत्वेऽपि तच्चैतन्यस्य जीवभावार्हस्यानादिकालमारभ्या-विद्यावृतत्वेन कुण्ठितज्ञानसुखरूपत्वेन जडकल्पत्वात्, अविद्यावरणस्याना-
25 दित्वेनाधुना तदावरणस्याप्रसक्तेरविद्यावतश्च मुग्धत्वेनास्मत्प्रत्ययस्यैवानु-दयेन विषयत्वायोगात्, स्थूलशरीरपरिग्रहद्वाराऽभिव्यक्तान्तःकरणतिरस्कृता-विद्यत्वेनैव पूर्ववासनादिवशादभेदावगा[14b]ह्यन्तःकरणवृत्तौ चैतन्य-स्फुरणे सति सान्तःकरणस्यैवाहमिति वृत्तिविषयत्वात् शरीरान्तःकरणादि-संबन्धलक्षणाध्यासानन्तरमेवास्मत्प्रत्ययविषयत्वात् शुद्धस्य चास्मत्प्रत्यय-

विषयत्वायोगात्, अन्तःकरणादिविशिष्टस्यैव तद्विषयत्वस्य युक्तिसिद्धत्वाद-स्मत्प्रत्ययविषयत्वेनाऽऽत्माध्यासनिरूपणमसङ्गतमेव ॥

अपरोक्षत्वाच्चेति कथनमप्यनिर्वाह्यम्; अविद्यावृतस्यैव जीवत्वेन तस्य जडकल्पतया स्वप्रकाशत्वेनापरोक्षताया वक्तुमशक्यत्वात्। यद्यविद्याध्यास 5 आधुनिकः स्यात्, तर्हि स्वप्रकाशत्वेनापरोक्षेऽविद्याध्यास इति वक्तुं शक्यम्; अविद्यावरणस्यानादित्वेनाधुना तदध्यासार्थमपरोक्षत्वकल्पना-योगात्। अन्तःकरणाद्यघटितलिङ्गदेहाध्यासार्थमपि नापरोक्षत्वकथनमपे-क्षितम्; सूक्ष्मरूपेण लिङ्गदेहस्याप्यविद्यावन्तमाश्रित्य नित्यमवस्थानाद् विना मुक्तिं तद्विरहस्य वक्तुमशक्यत्वात्, स्थूलदेहस्यापि लिङ्गदेहगतकर्मणा 10 समार्जनात् स्थूलदेहसिद्ध्यनन्तरमेव पूर्ववासनावशादन्तःकरणादविद्यावत्सं-वलितादविद्यातिरस्कारे सत्यभेदाकारवृत्तौ सत्यामेवात्मनोऽपरोक्षत्वेनापरोक्ष-तोत्तरमध्यासवार्ताया इहाप्रसक्तेः ॥

अपिच न चायमस्ति नियम इत्यादिनाऽऽत्मनः पुरोऽवस्थितत्वविषयत्वा-भावेऽप्यध्यासविषयत्वं भवतीति मनसि निधाय अप्रत्यक्षेऽपि ह्याकाशे बालास्तल-15 मलिनताद्यध्यस्यन्तीति पठितम्, तदेतदसङ्गतमिव। तथाहि—दूरस्थे पर्वते मानुषादिनयनरश्मीनां पर्वतसंस्थानसामान्याकारेणैव परिणामेन दूरत्वदोषेण शिथिलत्वेन घनीभावाभावात् सौरालोकसंपर्के सत्यपि शुक्लभास्वरातिप्रौढ-रूपातिरि[15a]क्तरूपपरिणामसामर्थ्याभावात् तथैव सर्वजनानुभवात् सहजस्वभावतो मलिननीलरूपादिपरिणामे सति जीवपदार्थस्येशपदार्थलेश-20 रूपतया तद्भेदाकारेण वृत्त्यभावे सति तत्पदार्थद्वयाभेदपरिणामे वृत्तेर्नायन-रश्मिद्वारैव मनसो नयनपरिणामानुरूपपरिणामे चैतन्यस्फुरणे सति पर्वतोऽयं मसृणो मलिनः समतल इति प्रतीतिरुपजायते रूपावयवसंस्थानवति पर्वते। एवं नक्षत्रमण्डलादूर्ध्वमेवेन्द्रनीलमणिकटाहवत् सर्वेषामपि जनानां प्रतीतेस्तत्र तलत्वमलिनत्वादिप्रतीतिः सावयवरूपवदण्डावलम्बिनी भवति, 25 न भूताकाशावलम्बिनी, तथा सति नक्षत्रमण्डलाधोऽपि लोकानां प्रतीति-र्जायेत, न तथा जायते। अतोऽण्डकपालावगाहिन्येव सा नीलत्वादि-प्रतीतिः ॥

तथाहि—छान्दोग्ये पञ्चमेऽध्याये "असदेवेदमग्र आसीत्तत् सदासीत्तत् समभवत्तदाण्डं निरवर्तत तत् संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले

रजतं च सुवर्णं चाभवतां तद् यद् रजतं सेयं पृथिवी यत् सुवर्णं सा द्यौरि"[1]ति श्रूयते। **मेरोरुपरि विद्यमानो भागः सुवर्णकपालम्, मेरोरेव भूमेरधो भागो रजतकपालमित्यर्थः। एवं बृहदारण्ये पञ्चमाध्याये** "द्वात्रिंशतं वै देवरथाह्न्यान्ययं लोकस्तं समन्तं पृथिवी द्विस्तावत् पर्येति तां समन्तं पृथिवीं द्विस्तावत् समुद्रः पर्येति तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत् तान् वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नि"[2]**ति समाम्नातम्। अत्र यद्यपि स्पष्टमण्डपदं नास्ति ; तथाऽपि** "तावानन्तरेणाकाश"[3] **इति कपालद्वय-सन्धिनिर्देशेन कपालद्वयमप्युक्तकल्पम् ॥**

"सङ्कर्षणोऽपः सृष्ट्वादौ तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं सर्वमन्तस्तमोवृतम् ॥
तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः ।"[3]

**इति**

"नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥"[4]

**इति च स्मृतिरण्डं गमयति। एवं चाण्ड एव मलिनत्वारोपो नाकाश इति दिक् ॥**

**किञ्च** कथं पुनरित्यादि**द्वितीयपूर्वपक्षसमाधानान्ते** तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः, सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीति **कथितम्। एवं तृतीयपूर्वपक्षस्य** कथं पुनरित्यादेः **समाधाने** देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेरिति न चानध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियत **इति च कथितम्। कथं तावदिदमुपपादनीयम् ; अशनायाद्यतीतात्मतत्त्वं साक्षात्कुर्वतो निरस्तनिखिलदेहान्तःकरणाध्यासस्य जीवन्मुक्तस्य भिक्षाटनशौचात्मोपदेश-क्रियादिषु प्रवृत्तिदर्शनेन प्रमाणादिप्रवृत्तेरहंममाभिमानादिलक्षणाध्यासमूल-कत्वस्य वक्तुमशक्यत्वात्, पामरेष्वपि जातमात्रस्य शिशोः सुप्तोत्थितस्य जनस्य च तदानीं देहाद्यध्यासाभावेऽपि पुरोवर्तीष्टादिज्ञानमात्रादेव प्रवृत्ति-निवृत्त्यादिव्यवहारदर्शनात्, कर्मठस्यापि देहातिरिक्तस्यात्मनः परलोक-गामिनो ज्ञाने सति देहतादात्म्याध्यासाभावेऽपि नित्यकाम्यादौ प्रवृत्तिदर्शनात्,**

**जनकादीनां तत्त्वसाक्षात्कारवतां देहाद्यभिमानशून्यानामाश्रमो[16a]चित-नित्याद्यनुष्ठानप्रवृत्तेश्च ॥**

**एवं** पश्वादिभिश्चाविशेषादि**त्युपक्रम्य** पश्वादीनां च प्रसिद्धोऽविवेकपूर्वकः प्रत्यक्षादि-व्यवहारः, तत्सामान्यदर्शनाद् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारस्तत्काले
5 तत्समान इति निश्चीयत **इत्युक्तम्। तदेतत्पूर्वोत्तरविरुद्धमिव ; पूर्वमध्यासात् प्रत्यक्षादिव्यवहार इत्युक्तम्, इह तु विवेकाभावलक्षणाविवेकादिति स्पष्ट एव विरोधः। अथ—अविवेकपदमविवेकपूर्वकाध्यासपरमिति न विरोध इति—चेत्, तर्हि पूर्वोक्तरीत्या दोषस्तावदनुद्धृत एव। किञ्च पश्वादीनाम-विवेकाधीनाध्यासात् प्रवृत्तिश्चेत्, तत्सामान्याद् व्युत्पत्तिमतामप्यविवेकपूर्वका-**
10 **ध्यासादेव व्यवहार इति पर्यवसानाद् व्युत्पत्तिमतामिति कथनमसङ्गतमेव भवेत्; व्युत्पत्तेः शरीरादिव्यतिरिक्तात्मज्ञानवत्त्वपर्यवसानेन तादृशस्य जनस्य पश्वादितुल्यदेहात्मवादस्य वक्तुमशक्यत्वात् ॥**

**अपिच व्युत्पत्तिमतोऽपि लौकिकव्यवहारे पश्वादितुल्यत्वेन देहाद्यध्यासं स्पष्टं प्रागुक्तरीत्या समाम्नाय पश्चात्** शास्त्रीये तु व्यवहार **इत्यादिना ग्रन्थेन**
15 **कर्मानुष्ठाने देहातिरिक्तात्मज्ञानापेक्षणेऽपि शुद्धात्मज्ञानानुपयोगाद् विशिष्ट-कर्त्रात्मज्ञानात् प्रवृत्तिरिति शास्त्रमविद्यावद्विषयकमेव। अत एव** "ब्राह्मणो यजेत"[1]इत्यादीनि शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थाविशेषाध्यासमाश्रित्य प्रवर्तन्ते ॥

अध्यासो नामातस्मिंस्तद्बुद्धिरिति **कथितम्। तदेतत् कथमिवोपपादनीयम्।**
20 **[16b] शास्त्रीयस्थल इव लोकेऽपि प्रवृत्त्युपपत्तेर्वैलक्षण्येन निर्देशे प्रयोजनाभावात्, व्युत्पन्नस्य देहातिरिक्तात्मविज्ञानस्य शास्त्र इव लोकेऽपि सत्त्वेन बाधकाभावात्, देहातिरिक्तात्मविज्ञानादेव कर्मसु प्रवृत्ति-र्व्युत्पन्नस्येत्युक्त्वा** "ब्राह्मणो यजेत"[2] "जातपुत्रः कृष्णकेशोऽग्नीनादधीते"[3]इत्यादि-शास्त्राण्यात्मनि वर्णाश्रमवयोऽवस्थाविशेषाध्यासमाश्रित्य प्रवर्तन्त इति **कथनस्य च**
25 **विरुद्धत्वात्, देहातिरिक्तात्मज्ञानवत एव व्युत्पत्तिमतः कर्मसु प्रवर्तमानस्य तदानीमेव देहात्मप्रत्ययाध्यासेन कर्मप्रवृत्तेर्वक्तुं शक्यत्वात्। तस्माद-ध्यासाधीनप्रवृत्तिरिति कथनमसङ्गतमिव ॥**

**किञ्च** न वेदान्तवेद्यमात्मतत्त्वमधिकारेऽपेक्ष्यते ; अनुपयोगात्, अधिकारविरोधाच्चेति **कथनमपि कथमुपपादनीयम्। स्वरूपसतस्तत्त्वस्याधिकारविरोधित्वे सर्व-**

साधारणत्वादात्मतत्त्वस्याज्ञानामपि कर्माधिकारो भज्येतेति तत्पुरुषज्ञायमानस्य तत्पुरुषाधिकारविरोधित्वमिति वक्तव्यम्, तदप्यनुपपन्नम्; आत्मतत्त्वं शुद्धं भवतीति ज्ञानवतः साक्षात्काररहितस्य कर्मसु प्रवर्तमानस्याधिकारभङ्गापत्त्या तत्पुरुषकृतकर्मणां निष्फलत्वापत्तेः, ज न का दीनामात्मसाक्षात्कारवतामपि नित्याचरणदर्शनेन शुद्धतत्त्वज्ञानस्याधिकारविरोधित्वादर्शनाच्च। अतोऽनाद्यविद्यासंबन्धनियमितबन्धकदेहद्वयसंबन्ध एव कर्मसहकृतः सर्वत्र प्रवृत्तौ नियामक इत्यभ्युपेयम्। स संबन्धः कर्मनियमितोऽध्यासाभावेऽपि वर्तत एवेति सर्वेषामपि ज न क प्रभृतीनां तत्त्वनिष्ठानां च प्रवृत्तिरुचितोपपद्यते; कर्मनियमितदेहद्वयसंबन्धस्य [17a]यावद्विदेहकैवल्यमवस्थानात् तद्देहद्वयसंबन्धस्यैव प्रमातृतासंपादकत्वेन सकलप्रमाणप्रवृत्त्युपपत्तेः, "भूयश्चान्ते विश्वमायानिवृत्तिरि"[1]ति विदेहकैवल्य एव सर्वपाशनिवृत्तिश्रवणेन तत्पूर्वं पाशलेशानुवृत्त्या कर्मदेहद्वयसंबन्धस्य वक्तुमशक्यत्वात्। नन्—पूर्वपूर्वजनिताध्यासजन्यवासनैव प्रवृत्तिहेतुरस्त्विति—वाच्यम्; तत्त्वनिष्ठानां दृढतराभ्यासवशेन विरुद्धसर्ववासनानां नाशेन शरीरपातपर्यन्तं तत्सत्त्वे मानाभावात्, देहभोगानुनिष्पादककर्मायत्तदेहसंबन्धादेव सर्वनिर्वाहसंभवादिति दिक्॥

यत्तावदथपदार्थनिरूपणावसरे अथशब्दो नाधिकारार्थः; जिज्ञासाया अनधिकार्यत्वादिति कथितम्, जिज्ञासापदविवरणे च ज्ञातुमिच्छा जिज्ञासा, अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्म; फलविषयत्वादिच्छाया इति जिज्ञासापदमिच्छाप्रधानमेवेति निर्दिष्टम्, तदेतत् कथमिव घटनीयम्। सूत्रस्यास्यावतारणे वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्रमित्यत्र वेदान्तविचारपरशास्त्रस्यादिमं सूत्रमिदमिति कथनेन प्रथमसूत्रस्याप्यस्य वेदान्तवाक्यविचारपरत्वावश्यम्भावात्, तत्र "तद् ब्रह्म तद्विजिज्ञासस्वे"[2]ति ति त्ति रि वचसः शब्दार्थप्रत्यभिज्ञाबलेन विषयत्वात् तत्र विजिज्ञासस्वेति विधिविषयत्वदर्शनात् केवलेच्छायां कर्तव्यताया अप्रयोगाद् जिज्ञासापदस्य विचारपरत्वेनैव विधिविभक्तेर्निर्वाह्यत्वात् तद्व्याख्यापरे सूत्रेऽस्मिन्नपि जिज्ञासापदं विचारपरमेव भवतीति विचारस्याधिकार्यत्वेनानधिकार्यत्वादिति योजयितुमशक्यत्वात्, एवमुत्तरत्रातःपदार्थनिरूपणानन्तरम् तस्माद् यथोक्तसाधनसंपत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति निर्देशाद् इच्छायाः कर्तव्यत्वाभावेन विचारस्यैव

कर्तव्यतया जिज्ञासापदस्य विचारपरत्वसूचनात्, शेषषष्ठीविचारावसरे ब्रह्माश्रिताशेषविचारप्रतिज्ञानार्थत्वादिति जिज्ञासापदस्य विचारपरतायाः स्पष्टं निर्देशात्, सूत्रविवरणसमाप्तौ च तस्माद् ब्रह्मजिज्ञासामुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयत इति निर्देशेन ब्रह्मावगतेरि-
5 च्छायाश्चान्तराले व्यापारीभूतविचारे जिज्ञासापदस्य लक्षणायाः सूचनाद् जिज्ञासापदस्य विचारार्थकत्वात् ॥

यद्यप्यथशब्दार्थनिरूपणावसर आनन्तर्यं प्रकृतापेक्षा चेति पक्षद्वयमुपक्षिप्तम्, तदेतत् कथमुपपादनीयम्। प्रकृतापेक्षानन्तर्ययोरभेदात् ॥

यद्यप्यतःपदार्थकथने "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो
10 लोकः क्षीयत"[1] इत्यादिना पुण्यलोकानित्यत्वस्य "ब्रह्मविदाप्नोति पर"[2]मित्यादिना नित्यचरमपरमपुरुषार्थब्रह्मणश्च कथनादिति विवृतम्; तदपि कथं घटनीयम्। नित्यानित्यवस्तुविवेकमध्य एव तत्संनिवेशेनाथपदेनैव तत्परिग्रहादतःपदस्य पृथगर्थानाकलनात् ॥

यदपि ब्रह्मपदार्थनिरूपणे ब्रह्म च वक्ष्यमाणलक्षणं जन्माद्यस्य यत इति
15 कथितम्, तत् कथमुपपादनीयम्; स्वमते जन्मादिसूत्रस्य श्रुतिव्याख्यापरत्वेन लक्षणपरत्वाभावात् ॥

अथापरमपीह विज्ञेयम्; जिज्ञासासूत्रविवरणमिदं भाष्यं नाधिकरणात्मकम्; "विषयो विशयश्चे"[3]ति तल्लक्षणाभावात्, क्वापि विषयविशयादीनां परिग्रहादर्शनात्। किञ्चेदं सूत्रं किं श्रुतिव्याख्यापरम्, किं वा शास्त्रारम्भ-
20 प्रतिज्ञापरम्, उताहो शास्त्रोपोद्घातप्रकरणम्, किञ्चान्यपर[18a]मिदमिति निर्णायकवचसोऽत्रादर्शनात् सकलपक्षावद्योतकवचनानामिह सङ्कलनतो दर्शनेन सन्दिग्धमेव सूत्रतात्पर्यमिति प्रेक्षावत्प्रवृत्तिरेव न स्यात् ॥

अपिचोपक्रम एव युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोर्विरुद्धस्वभावयोरित्येतत् कथमुपपादनीयम्। युष्मत्पदस्य चेतनेऽस्मत्पदवत्प्रयोगदर्शनेन चेतना-
25 चेतनसमुदायपरतया युष्मत्प्रत्ययविषयस्य विषयित्वविनिर्मुक्तकेवलविषयतायां वक्तुमशक्यत्वात्, एवमस्मत्पदस्यापि सङ्घाते प्रयोगदर्शनेन केवलविषयित्वस्य वक्तुमशक्यत्वात्, स्वयमेव प्रथमं युष्मदस्मत्प्रत्ययगोचरयोरित्यस्मत्प्रत्ययविषयत्वनिर्देशात्, उत्तरत्रापि द्वितीयाक्षेपसमाधानावसरे न ताव-

दयमेकान्तेनाविषयः ; अस्मत्प्रत्ययविषयत्वाद् इति विषयिविषयत्वनिरूपणात् । तथाच विषयविषयिणोः परस्परविरुद्धत्वकथनं दुरुपपादमेव ॥

किंच प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरित्यत्रान्तग्रहणमनर्थकम् ; क्रमेणैव सर्वश्रुत्यध्ययनेनाधीतवेदस्येत्यनेनैव वेदान्तस्यापि परिग्रहसंभवेन क्रमेणाध्ययनं 5 परित्यज्य प्रथमत एव वेदान्ताध्ययनं कृतमिति विभ्रमजनकान्तपदग्रहणस्यायुक्तत्वात् ॥

अपिच वक्तरि चिदचित्सङ्घेऽस्मत्पदस्य वक्तृत्वार्हे चिदचित्संवलने चेतनान्तरे युष्मत्पदस्य च लोके प्रसिद्धप्रयोगदर्शनेन केवलजडे प्रत्यक्पदार्थकोटिगते तद्गतत्वेन विवक्षिते युष्मत्पदानर्हे शारीरमनःप्रमुखे तथाचायार्यप्रणीतं 10 न्यायोपबृंहितं सूत्रम् "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग"[1] इति मिथ्याज्ञानापायश्च ब्रह्मात्मैक्यविज्ञानाद् भवतीति समन्वयाधिकरणसमाप्तदुःखेति गौतम गृहीतमिथ्याज्ञानरूपाहमित्यान्तरभ्रमविषयीभूते युष्मत्पदप्रयोगोऽनुचित एव ; पराक्प्रत्यक्प्रत्ययगोचरयोरित्थेव विरचनौचित्यादिति दिक् ॥

15 [18b] वेदशिरसां वचनरत्नमखिलानां
यद्यदनयाद्गहनभावमिह तत्तत् ।
साधु विविधप्रकरणप्रतिनिबद्धं
शास्त्रमतुलं प्रववृते तु विवरीतुम् ॥३५॥

अथानन्तरोक्तदोषानुद्दिधीर्षुः—अथात इत्यादेश्चतुर्लक्षणीशास्त्रस्य प्रयोजनं 20 दर्शयति—वेदशिरसामिति ॥ अतुलम् तुलारहितम्—निरतिशयमुक्तिप्रधानकत्वात् सदृशशास्त्रान्तररहितम् "अथातो ब्रह्मजिज्ञासे"[2]त्यादिलक्षणं शास्त्रं कर्तृ । अखिलानाम् समस्तानाम् । वेदशिरसाम् वेदान्तानाम् । अनयात् न्यायाभावात्—न्यायपरिशीलनाभावात् । गहनभावम् कठिनतात्पर्यकम् । यद्यद् वचनरत्नम् श्रेष्ठं वचनं भवति । इह वेदशिरःसु । विविधप्रकरणप्रतिनिबद्धम् 25 विविधानि यानि प्रकरणानि ज्ञानोपासनाभेदपराणि तेषु प्रतिबद्धं तत्तद्वचनम् । साधु सम्यक् । विवरीतुं तु व्याख्यातुं तु प्रववृते प्रवृत्तं भवति ॥

वेदान्तेषु ज्ञानोपासनापरेषु न्यायपरिश्रमाद् यानि यानि वचनान्यनिर्णीत-तात्पर्यकाणि, तानि सर्वाणि व्याख्यातुमेतच्छास्त्रप्रवृत्तिरिति भावः। तथाच न्यायादिशास्त्रवद् नेदं सूत्रमयं शास्त्रं स्वतन्त्रम्, किन्तु जैमिनि-कृतकर्मकाण्डसूत्रवत् श्रुतिवचनविवरणमेव। इति विवेचनीयम् ॥३५॥

5 सूत्रमिदमादिममथात इति वाक्ये
वेदशिरसः क्वचन नीतिनिचयेन।
अर्थपरिशोधनपरं विवृतिरूपं
पुष्टफलमन्यविषया तु विपरीतम् ॥३६॥

"अथात"[1] इति प्रथमं सूत्रं न शास्त्रप्रतिज्ञादिपरम्, किन्तु श्रुति-
10 शिरोवचनविवरणपरमित्याह—सूत्रमिति ॥ "अथातो ब्रह्मजिज्ञासे"[2]ति परि-दृश्यमानमिदमादिमं सूत्रं वेदशिरसो वेदान्तस्य क्वचनवाक्ये कस्मिं-श्चिद्वचसि नीतिनिचयेन सूच्यमानपूर्वपक्षसिद्धान्तोचितन्यायसमुदायेन अर्थ-परिशोधनपरं सद् अर्थगतदोषदूरीकरणसमर्थं सत् अत एव श्रुतिशिरोवचस-स्तस्य विवरणरूपं सत् पुष्टफलं भवति पूर्णप्रयोजनकं भवति। इत्यर्थः।
15 एवं चास्य सूत्रस्य श्रुतिवचनव्याख्यापरतैवोचिता, न त्वन्यादृशत्वम्। इति भावः ॥३६॥

[19a] शास्त्रमखिलं प्रति खलु प्रथममुक्त्वाऽ-
खण्डपरतां तदनु खण्डकथनेन।
आश्रवपरं प्रथमसूत्रमिति कल्पोऽ-
20 नल्पतरदोषकलुषो भवति नूनम् ॥३७॥

अथ सूत्रस्यास्य प्रतिज्ञापरत्वे दोषाः सन्तीत्याह—शास्त्रमिति ॥ अखिलम् चतुर्लक्षणीलक्षणम्। शास्त्रं प्रति शास्त्रमुद्दिश्य। अखण्डपरताम् शुद्धाद्वैतसच्चिदानन्दपरताम्। प्रथमम् आदौ—"अथातो ब्रह्मजिज्ञासे"[3]ति निर्गुण-

ब्रह्मविचारोऽग्रे समारभ्यत इति निरुच्य पश्चात् तत्र तत्र बहुषु स्थलेषु सगुणविद्यानां प ञ्चा ग्नि वि द्या दीनां च खण्डार्थपराणां कथनेन—प्रतिज्ञातमन्यत्, निरुच्यन्ते चार्थान्तराणीति विरोधोदयेन। "अथात"[1] इति प्रथमसूत्रम्। आश्रवपरम् शास्त्रत्वावच्छेदेन प्रतिज्ञापरम्। इति एवंलक्षणः। कल्पः पक्षः अनल्पतरदोषकलुषः परस्परविरोधलक्षणापरिहार्यदोषमलिनः। नूनम् निश्चयेन भवति। इत्यर्थः। अत्र उक्त्वा कथनेनेत्यत्र "परावरयोगे चे"[2]ति क्त्वाप्रत्ययः ॥३७॥

[19b] ब्रह्मपदमाहतगुणागुणपरं चे-
दस्तु सकलाऽप्यनुगुणा सगुणचर्चा।
सूत्रनिकरेऽत्र कृतसंश्रवविरोधात
पञ्चदमुनःप्रभृतिचिन्तनमचिन्त्यम् ॥३८॥

अथ सूत्रस्थब्रह्मपदं न निर्गुणपरमेव, येनाग्रे सगुणविचारोऽसङ्गतः स्यात्, किन्तु सगुणनिर्गुणोभयपरम्। एवं चाग्रे न सगुणनिर्गुणचर्चाऽसङ्गतेत्याशङ्क्य एवमपि प ञ्चा ग्नि वि द्या दिचर्चाऽसङ्गता स्यादित्याह—ब्रह्मेति ॥ सूत्रगतं ब्रह्मपदं सगुणनिर्गुणपरं चेत् सकलाऽपि शास्त्रगता सगुणचर्चा अनुगुणा प्रतिज्ञानुगुणा भवतु, परन्तु सूत्रनिकरेऽत्र शास्त्रे पञ्चदमुनःप्रभृतिचिन्तनम् प ञ्चा ग्नि-विद्यादिविचारः कृतसंश्रवविरोधात् उपक्रमगतप्रतिज्ञाविरोधात् अचिन्त्यम् मनसाऽप्यचिन्तनीयं स्यात्। इत्यर्थः। अत्र चेदिति निर्देशः सूत्रे ब्रह्मपदं वक्ष्यमाणरीत्या निर्गुणमेव बोधयितुं क्षमम्, न सगुणम्, तथापि परः सन्तुष्टो भवत्वित्यभ्युपगमवादं सूचयति। इति विज्ञेयम् ॥३८॥

[20a] नाधिकृतिमत्र कथयेत्तदथवाणी
मङ्गलपरा श्रुतिवशेन न तु शक्त्या।
कोशवचनं यदिह शक्तिपरमेतद्
भ्रान्तिभवमेव विशदं स्मृतिविरोधात ॥३९॥

अथोक्तरीत्या सूत्रस्यास्य प्रतिज्ञापरत्वाभावे सिद्धे सत्यथपदं प्रतिज्ञानुकूल्येनाधिकारार्थकं न भवतीति विवेचयन्नथपदस्य मङ्गलशक्तत्वमपि न भवतीति विशदयति —नाधिकृतिमिति ॥ यस्मात् कारणात् सूत्रस्य प्रतिज्ञापरत्वमनुपपन्नमिति कथितम्, तत् तस्मात् कारणाद् अथवाणी अथपदलक्षणा
5 भारती अत्र आद्ये सूत्रे अधिकृतिम् अधिकारम्—"अथ योगानुशासनम्"[1] "अथ शब्दानुशासनम्"[2] इत्यादिष्विव न कथयेत्। "अथ योगे"[3]त्यादावन्यत्राविरोधादथपदस्याधिकारार्थत्वेऽपि प्रकृते प्रोक्तरीत्या विरोधादधिकारार्थं न ब्रूयादित्यर्थः ॥ अथवाण्येव

"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
10 कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥"[4]

इत्यनया स्मृत्या श्रुतिवशेन श्रोत्रजन्यज्ञानेन मङ्गलपरा भवति, न तु शक्त्या मङ्गलप्रतिपादिका ॥

अथ "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथे"[5]ति कोशो मङ्गलेऽथशब्दं शक्तमिति ग्राहयेद् यदि, तद्वचनं भ्रममूलकमेव; विशदम् स्पष्टम् निरुक्त-
15 स्मृतिविरोधात्, माङ्गलिकौ मङ्गलप्रयोजनकाविति निर्देशात्, विनिर्यातौ माङ्गलिकाविति निर्देशेन निर्गमनमात्रेण दध्यादिदर्शनवत् श्रवणोच्चारणाभ्यामेव माङ्गलिकावित्यर्थप्रत्ययात् पुरा सकलकार्यादौ मङ्गलाचरणायैव तयोः प्रवृत्तिरिति सर्वन्यायवित्संमतेः, मङ्गलं कर्तव्यमिति स्थानेऽथ कर्तव्यमिति क्वापि प्रयोगादर्शनात् माङ्गलिकपदस्य मङ्गलार्थशक्तत्वेन वक्तुमशक्यत्वात्।
20 इति भावः ॥

अथ—"उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कमध्यस्थितवेदिकोदर"[6] इति श्रीहर्षेणाथपदं मङ्गलार्थकमेव प्रयुक्तम्, मङ्गलभूताः कुम्भीरिति विवक्षणादिति—चेत्, न; पूर्वोपात्तार्थानन्तरं यथाकुलाचारम् कुलाचारमनतिक्रम्य कुलाचारान् विधाय अथ कुलाचारानन्तरमित्येव कवेरभिप्रायेण मङ्गल-
25 प्रतिपादकताया अथशब्देऽसिद्धेः। इति दिक् ॥३६॥

[21a] मङ्गलपुरश्चरणमादरणयोग्यं
मङ्गलपदार्थककथा ननु वृथैव ।

मञ्जुलमतोऽथपद तत्र समुपेयम्
मङ्गलकरं श्रवणतोऽपरनिगूढम् ॥४०॥

अथाथपदस्य मङ्गलार्थशक्तत्वमभ्युपेत्यापि मङ्गलबोधकत्वं प्रकृतानुपयुक्तमिति कथयन् पूर्वसिद्धान्तितां मङ्गलार्थाशक्ततामेव निगमयति - मङ्गलेति ॥ मङ्गल-
5 पुरश्चरणम् मङ्गलस्य पुरः पूर्वम्, ग्रन्थादौ चरणम् अनुष्ठानम् आदरणयोग्यम् आदरणीयं भवति। अथपदस्य मङ्गलरूपार्थकत्वमभ्युपेत्य ब्रह्मजिज्ञासा अतः ब्रह्मणोऽनन्तकल्याणगुणशालित्वाद् हेतोः अथ मङ्गलं भवतीति मङ्गलपदार्थघटिता कथा वृथैव। ननु निश्चयेन भवति। पाकेऽग्नेरेव साधन-तया संपाद्यत्वेनाग्निपदघटिताया अग्निः प्रकाशक इत्यादिलक्षणायाः पाक
10 इव मङ्गलाचरणस्यैव ग्रन्थसमाप्तौ हेतुत्वेन मङ्गलं ब्रह्मजिज्ञासेति कथाया नोपयोगोऽस्तीति भावः। अतो मङ्गलकथावैयर्थ्यादिहेतोरथपदम् अपर-निगूढम् अपरस्मिन् आनन्तार्याद्यर्थे निरूढम् शक्तम्। श्रवणतः श्रवणमात्रेण—दध्यादिदर्शनवद् मङ्गलकरम्। मञ्जुलम् मनोज्ञम्, मनोहारि रमणीयम्, निर्दोषं यथा भवति तथा समुपेयम् अङ्गीकार्यमित्यर्थः। शाब्दं ब्रह्मपदं नाधिकृतमिति।
15 अनेन शाब्दी ह्याकाङ्क्षा शब्देनेति आकाङ्क्षितार्थसमर्पणं संभवतीति च न्यायद्वयानुरोधादथपदमधिकारार्थकमिति प्रागुक्तशङ्का निरस्ता ॥४०॥

[21b] अर्थवचने श्रुतिगते यदि हि सूत्रे
मुख्यविषयो भवति सा श्रुतिरिहास्य।
शब्दमपहाय यदि बोध्यसमता स्याद्
20 गौणविषयो भवति साऽस्य नियमेन ॥४१॥

अथास्य सूत्रस्य मुख्यगौणविधया वाक्यविभागं दर्शयितुं शास्त्रमात्र-गताधिकरणसाधारण्येन गौणमुख्यविषयविभागं दर्शयति—अर्थेति ॥ श्रुतिगते-ऽर्थवचने श्रुतौ सङ्गतेऽर्थपदे यदि सूत्रेऽपि भवतः, तर्हि सा श्रुतिः यस्यां श्रुतौ सूत्रगतार्थाक्षरप्रत्यभिज्ञा वर्तते, सा श्रुतिः अस्य सूत्रस्य प्रत्यभिज्ञातार्थशब्द-
25 वतः सूत्रस्य मुख्यविषयो भवति। इह शास्त्र भि श्रु सू त्र रूपे। यदि

च सूत्रश्रुत्योः शब्दांशमपहायार्थमात्रसाम्यं भवति, तर्हि साऽर्थमात्रसाम्यवती श्रुतिरर्थमात्रसाम्यवतः सूत्रस्य गौणो विषयो भवतीत्यस्मिन् शास्त्रे नियमेन न क्वचिदपि व्यभिचारः । इत्यर्थः ॥४१॥

[22a] ति त्ति रि शिरो ननु वचोऽर्थसमताया
मुख्यविषयोऽन्य इह गौणविधयाऽर्थात् ।
अर्थवचसोरवयवानुगतिभेदा-
दप्युचितमेव किल गौणमपि नाना ॥४२॥

"अथात"[1]इति प्रथमसूत्रस्य विशिष्य मुख्यविषयं सामान्यरूपेण गौणविषयं च दर्शयन् गौणे विषयेऽपि सामान्यरूपेणावान्तरभेदानपि दर्शयति— ति त्ति री ति ॥ ति त्ति रि शिरः तै त्ति री यो प नि ष त् । वचोऽर्थसमतायाः शब्दार्थसाम्यात्—"ब्रह्मजिज्ञासे"ति[2] सूत्रे ब्रह्मजिज्ञासापदयोः श्रवणात् तद्विजिज्ञासस्व तद् ब्रह्मे"[3]ति तै त्ति री येऽपि श्रवणादस्या"थात"[4] इति सूत्रस्य "तद्विजिज्ञासस्व तद् ब्रह्मे"[5]ति श्रुतिर्मुख्यो विषयः, इतोऽन्यः पृथग्भूतः । अर्थात् अर्थमवलम्ब्य साम्याद् गौणविधया विषयः "श्रोतव्यो मन्तव्यो निदिध्यासितव्य"[6] इत्यादिलक्षणः । गौणविधया विषयभेदान् दर्शयति—अर्थवचसोरिति ॥ शब्दार्थयोरवयवानुगतिभेदादेकदेशानुसरणेन गौणमपि विषयवाक्यमुचितमेव नानाविधं भवति । तत्तावद् ईक्षत्यधिकरणा[7]दौ दर्शयिष्यामः ॥४२॥

निर्मलपरापरविचारपरवाक्यं
यद्यदखिलश्रुतिशिरःसु ननु तत्तत् ।
सर्वमपि हि प्रथमसूत्रविषयः स्याद्
विश्वमुखता समुचिता किल सूत्रे ॥४३॥

अथ गौणमुख्यविषयभेदान् सहेतुकं प्रकृतसूत्रे सङ्गृह्योपसंहरति—निर्मलपरापरेति ॥ निखिल वेदान्तेषु निर्मलपरापरविचारपरवाक्यम् निर्मलौ यौ परापरौ

शोधितपरिशुद्धेश्वरजीवौ, तयोर्विचारबोधकं यद्यद्वाक्यम्, तत्तत्सर्वमपि प्रथमसूत्रस्य विषयो भवेदेव। न च—अनेकपरत्वे सूत्रस्य गौरवमिति—वाच्यम्; सूत्रे विश्वमुखता अनेकविषयशोधकता समुचितैव योग्यैव किल; "सारवद् विश्वतोमुखमि"[1]ति तल्लक्षणात् ॥४३॥

5 [22b] वेदशिरसां विवृतये मुनिवरोऽसौ
सूत्रनिकरं विरचयन्नुचितरीतिम्।
अर्थवचसोरननुरूपपरिणामे-
ष्वर्थलसितां लषति मुख्यमतितः स्म ॥४४॥

अथ सकलसूत्रसाधारण्येन गौणविषयमप्युपसंहरति—वेदेति ॥ वेद-
10 शिरसाम् उपनिषदाम् विवरणाय श्री वे द व्या सोऽसौ सूत्रनिकरं चतुरध्यायीलक्षणम् विरचयन् सन् सूत्रगतयोरर्थवचसोः शब्दार्थयोः अननुरूपपरिणामेषु सूत्रलक्षणेषु प्रसक्तेष्वेकश्रुत्यनुरोधेन शब्दार्थावलम्बेन सूत्रविरचने क्रियमाणे तत्सूत्रगतपदेन श्रुत्यन्तरगते पदान्तरबोधिते तस्मिन्नेवार्थे परिगृह्यमाणे सत्यपि श्रुत्यन्तरगतशब्दार्थयोर्द्वयोरपि तस्मिन् सूत्रे विरोधेन परिग्रहायोगे सति
15 शब्दार्थयोः शब्दस्यार्थार्थत्वाद् अर्थस्य च प्राधान्यात् शब्दं गुणभूतमुपसंहारानर्हं परिहृत्योपसंहारार्हमर्थं गौणमुख्ययोर्मुख्यानुग्रहो न्याय्य इत्यर्थगत्याऽर्थलसितां समुचिताम् रीतिम् मर्यादाम् लषति स्म वाञ्छति स्म। इत्यन्वयः। तथाचेदं शास्त्रं गौणमुख्यभेदभिन्नविषयकं सद् विश्वतोमुखम्। इति भावः ॥४४॥

20 [23a] वेदशिरसां विवरणं भवति शास्त्रं
क्लिष्टवचसां खलु न तत्क्रमवशेन।
अर्थघटनासरणिरप्युपनिबद्धा
तन्ननु विचारपरवाग्विवृतिरादौ ॥४५॥

अथ यदीदं शास्त्रं सर्वोपनिषदां विवरणरूपम्, तर्हि एकैकामुपनिषदं क्रमेण
25 व्याख्यायैवापरोपनिषदां व्याख्यानं कर्तुमुचितम्, न तथेहोपलभ्यते, तत्

किंनिबन्धनमिति प्रश्ने निबन्धनं दर्शयति—वेदेति ॥ इदं शास्त्रं सर्वोपनिषदां क्रमेण न व्याख्यापरम् ; तथा सत्यतिगौरवापत्तेः । किन्तर्हि । वेदान्तानां सम्बन्धीनि यानि क्लिष्टवचांसि, तेषामिदं शास्त्रं विवरणम् । तत्रापि नैकस्यां यानि क्लिष्टानि, तानि व्याख्यायापरोपनिषत्क्लिष्टवचसां व्याख्याऽत्र कृता 5 भवति ; तथा सति प्रत्युपनिषत्सूत्रविरचने गौरवापत्तेः, किन्तु एकजातीयानि यानि क्लिष्टवचनानीतस्ततो विप्रकीर्णानि श्रुतिभेदेन, तानि सर्वाण्येकाधिकरण-सूत्रेण व्याख्यायापरजातीयक्लिष्टवचनानां व्याख्यानायापराधिकरणसूत्रप्रवृत्तिः कारिता लाघवाद् भवति । तत्रापि पुनरर्थेषु पौर्वापर्योचितक्रमं पुरस्कृत्य शास्त्रं प्रवर्तितम्, तदेतदाह—खल्वित्यादि ॥ तत् विवरणं क्रमवशेनेह न 10 भवति हि । उपनिषदमेकां क्रमेण व्याख्यायापरोपनिषद्व्याख्यानमित्यादिक्रमो न विवक्षित इति यावत् । यदि क्रमो न विवक्षितः, तर्हि अर्थक्रमोऽपि नादरणीय इत्याशङ्क्य परिहरति—अर्थेति ॥ एकोपनिषद्वाक्यानां क्रमेण व्याख्यानानन्तरमपरोपनिषद्वाक्यानां क्रमव्याख्याने श्लिष्टैकजातीयार्थक-वाक्यानां प्रत्युपनिषद्व्याख्यानेप्यतिगौरवमापतेदित्येकार्थकवाक्यानां बहूनां 15 लघुरीत्या क्रमं परिहृत्य विवरणपरं सूत्रं रचितम् । अर्थानां क्रमे परिगृह्यमाणे तु न गौरवमिति तत्र क्रमो गृहीत एव । तथाचास्मिन् शास्त्रे अर्थघटना-सरणिरपि अर्थानां या घटना पौर्वापर्यसंनिवेशादिलक्षणा, तत्सरणिरपि मार्गोऽपि । अपिनैकजातीयानामर्थानां युगपदेकेन सूत्रेण परिग्रहलक्षणा सरणिः समुच्चीयते । निबद्धा सूत्रैरानद्धा भवति । यस्मात् कारणादर्थक्रम इह 20 परिगृहीतः, तत् तस्मात् कारणाद् विचारपरवाग्विवृतिरादौ निबद्धा ननु विचारपरजिज्ञासासूत्रमादौ निबद्धं निश्चयेन । आदौ विचारे यत्नः, पश्चाद् विचार्यपरिशोधकलक्षणविचार इति क्रमस्य लोकसिद्धत्वात् प्रकृतेऽपि प्रथमं विचारपरवाक्यविवरणम्, तदनु विचार्यार्थब्रह्मलक्षणादिपरवाक्यविवरणमिति क्रमसिद्धिः । इति भावः ॥४५॥

25 [24a] ति त्ति रि शिरो वचनसंश्रितसरण्याऽऽ-
नन्दमयलक्षणविचारपरचर्चाः ।

यदाऽपि निवेष्टुमुचिताः प्रकृतसूत्रे
त्वर्थगतितः खलु तथाऽपि विपरीताः ॥४६॥

अथेहार्थानुरोधेनैव क्रमः, न तूपनिषद्वाक्यानुरोधेनेत्येतदुदाहरणप्रदर्शनेन स्पष्टयति—ति त्ति रीति ॥ अत्र ति त्ति रि शिरो वचनसंश्रितसरण्या तै त्ति री यो-
5 प नि ष द्वाक्यमार्गेण ब्र ह्म व ल्ल्यामादावानन्दमयवाक्यपाठात् तदनन्तरं भृ गु व ल्ल्यां "यतो वा इमानी"[1]ति लक्षणपरवाक्यानन्तरं "तद्विजिज्ञासस्वे"[2]ति पाठेनानन्दमयवाक्यविचारसूत्रम्, तदनु जिज्ञासापरवाक्यविचारपरसूत्रमिति क्रमेणानन्दमयलक्षणविचारपरचर्चा निवेष्टुमिह शास्त्रे यद्यप्युचिता भवन्ति शब्दक्रमानुरोधात ; तथापि अर्थोचितक्रमानुरोधेन ताश्चर्चा विपरीता
10 भवन्ति—प्रथमं विचारवाक्यपरं सूत्रम्, ततो लक्षणवाक्यपरं सूत्रम्, तद-नन्तरमानन्दमयवाक्यपरं सूत्रम्—इति। तथाचेह व्याख्यानपक्षेऽपि सूत्रक्रमः समुचित एवेति भावः। एतेन सूत्राणां श्रुतिविवरणत्वपक्षे तत्तदुप-निषद्वाक्यक्रमानादरणदोषः प्रागुक्तः समुद्धृतो वेदितव्यः ॥४६॥

[24b] कस्यचिदपि स्फुटमथात इति सूत्रात्
15 प्रागकथनात् कथमनन्तरमथार्थः ।
एवमनुयोगविषये विषयवाचोऽ-
नन्तरनिरूपकपुरोऽर्थपरिलाभः ॥४७॥

अथाथशब्दमानन्तर्यार्थकमिति पक्ष आनन्तर्यप्रतियोगित्वं साधनचतुष्टयस्य न संभवति ; "अथात"[3] इति सूत्रात् पूर्वं तत्प्रस्तावादर्शनादिति प्रागुक्तां
20 शङ्कां चतुर्भिः श्लोकैः परिहरति—कस्यचिदित्यादिभिः ॥ तत्रानन्तर्यप्रतियोग्य-लाभमाशङ्क्य परिहरति—कस्येति ॥ "अथातः"[4] इति जिज्ञासासूत्रात् प्राक् कस्यचिदपि पदार्थस्य स्फुटमकथनाद् अनन्तरमित्यर्थः कथमथपदस्यार्थो वाच्यो भवेत् ; आनन्तर्यप्रतियोगिनः पदार्थस्य प्रागकथन आनन्त-र्यस्यैव ज्ञातुमशक्यत्वात्। एवम् इत्थम्। अनुयोगविषये प्रश्नप्रदेशे। सूत्र-
25 पाठक्रमेणानन्तर्यप्रतियोगिनो मुख्यविषयालाभेऽपि विषयवाचः जिज्ञासासूत्रस्य

विषयवाक्यात् अनन्तरनिरूपकपुरोऽर्थपरिलाभः अनन्तरपदार्थस्य निरूपकः पुरोऽर्थः प्रतियोगी, आनन्तर्यप्रतियोगिभूतोऽर्थः, तस्य परिलाभः परितो लाभो भवतीत्यर्थः। तथाच सूत्रपाठस्वारस्येनानन्तर्यप्रतियोग्यलाभेऽपि व्याख्येय-श्रुत्यनुरोधेन व्याख्येयव्याख्यानयोर्व्याख्यानापेक्षितपूरणं व्याख्येयाद् भव-
5 तीति न्यायेनानन्तर्यप्रतियोगिलाभः। इति भावः ॥४७॥

[25a] शा त प थ वागथ तमेतमिति वेदा-
याचरणतो विविदिषां वदति जन्याम्।
तेन तदनन्तरतया भवति वाञ्छा
प्राचि जनुषीद्धमुत कर्म च पराचि ॥४८॥

10 अथ "तद्विजिज्ञासस्वे"[1]ति तै त्ति री यवाक्यात् "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"[2]ति बृ ह दा र ण्य वाचोऽपि विषयत्वेन तत्र विस्पष्टं कर्मानुष्ठानानन्तर्यस्य जिज्ञासायां प्रतीतेः सूत्रेऽप्यथपदं व्याख्येयोक्तकर्मनिरूपितानन्तर्यमेव प्रतिपादयत्विति शङ्कते—शा त प थे ति॥ "तमेतं वेदानुवचनेने[3] त्यादि श त प थै कदेश बृ ह दा र ण्य वाणी वेदायाच-
15 रणतः वेदाध्ययनादिकर्मानुष्ठानाद् विविदिषां जन्यां वदति। तेन कथनेन वाञ्छा विविदिषा तदनन्तरतया कर्मानन्तरत्वेन भवत्येव ज्ञानेच्छा। ज्ञानेच्छासाधनीभूतं कर्म च प्राचि जनुषि प्राग्जनुषि उत अथवा पराचि अर्वाग्जन्मनि विद्यमानजन्मनि इद्धम् दीप्तम् प्रकाशमानम् संपन्नमिति यावत्। तथाच जन्मान्तरभवमेतज्जन्मभवं वा कर्म चित्तशुद्धिद्वारा जिज्ञासाजनकमिति
20 तदानन्तर्यं जिज्ञासायां घटत एव। अव्यवहितानन्तर्यस्याथपदार्थत्वाभावेन जन्मान्तरकर्मादायापि तदानन्तर्यस्य जिज्ञासायामुपपत्तेः। इति भावः ॥४८॥

[25b] कर्म सकलं लसदुपासनमपीदृग्
वेदननिदानमिति चान्धमनुनाऽपि।
मन्त्रशिखरोपनिषदि स्फुटमुपात्तं
25 तेन तदनन्तरतया विविदिषा स्यात् ॥४९॥

अथ ब्राह्मणवदेव मन्त्रेणापि ज्ञानोपयोगित्वेन कर्मानुष्ठानपरिग्रहात् कर्मानन्तर्यं वेदनपूर्वभावीच्छायामुपपद्यत इति युक्त्यन्तरमप्याह—कर्मेति ॥ मन्त्रशिखरोपनिषदि वा ज स ने यि सं हि तान्तःपठिताया मीशावास्यमित्यादिलक्षणायां मन्त्रोपनिषदि । "अन्धं तमः प्रविशन्ती"[1]ति मन्त्रेण "विद्यां चाविद्यां चे"[2]ति मन्त्रोपसंहारवता "संभूतिं चे"[3]ति मन्त्रोपसंहारवता च लसत् प्रकाशमानम् कर्म सकलम् पुण्यलक्षणम् । ईदृक् लसदेव उपासनमपि महाफलं द्वयमपि वेदने निदानम् मूलकारणम् इति स्फुटमुपात्तम् स्पष्टं कथितम् । "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत"[4] इति कर्मणा चित्तमालिन्यमपहृत्य संपादितया विद्ययाऽमृतमश्नुत इति तात्पर्येण कर्मणा इच्छाजननद्वारा विद्याहेतुत्वस्फोरणाद् विद्या"मीशावास्यमि"[5]त्यादिना प्रस्तुत्य संभूत्योपासनेन ज्ञानद्वाराऽमृतमश्नुत इति तात्पर्यान्वयनेनोपासनस्यापि ज्ञानोपयोगप्रदर्शनात् कर्मोपासनानन्तर्यं विविदिषायाः स्यादेव । एवं चाथपदेन कर्मोपासनानन्तर्यं वक्तुं शक्यम् । इति भावः ॥४९॥

[26a] अध्ययनकर्मपरिचर्चनकृतीनां
संश्रयणमेव न भवेद्व्यवहितानाम् ।
संनिहितसाधनसमाकलनसत्त्वे
दूरगतहेतुघटना ह्यनुचितैव ॥५०॥

अथ निरुक्तामाशङ्कां परिहरति अध्ययनेति ॥ अध्ययनकर्मपरिचर्चनकृतीनाम् परिचर्चनं च कृतिश्च परिचर्चनकृती, कर्मणः परिचर्चनकृती कर्मसंबन्धी विचारः कर्मसंबन्ध्यनुष्ठानं च, अध्ययनं च कर्मपरिचर्चनकृती चाध्ययनकर्मपरिचर्चनकृतयः, तासाम् । व्यवहितानाम् आरादुपकारकाणाम्—साधनचतुष्टयसंपादनद्वारा जिज्ञासां संपाद्य वेदनोपकारिणाम् । संश्रयणम् आनन्तर्यप्रतियोगित्वेन परिग्रहः । न भवेदेव । कुतः । हि यस्मात् कारणात् । संनिहितसाधनानां संनिपत्योपकारकाणां चतुर्विधसाधनानामानन्तर्यप्रतियोगित्वेन परिग्रहे संभवति दूरगतहेतुघटना आरादुपकारकस्यानन्तर्यप्रतियोगित्वेन घटनाऽनुचितैव भवति । इत्यर्थः ॥५०॥

संश्रवपरं यदि भवेत् प्रथमसूत्रं
स्यादपि पराकलितकर्मपरचर्चा ।
संनिहितवचननिरूपकशरीरा
नो खलु तथा श्रुतिवचोविवरणत्वात् ॥५१॥

अथ कर्मचर्यानन्तर्येऽथशब्दो न भवतीत्यत्र युक्त्यन्तरं दर्शयति—संश्रवेति ॥ "अथात"[1] इति प्रथमसूत्रं यदि संश्रवपरं भवेत्, तर्हि कर्मपरचर्चा कर्मविचारो जै मि नि कृतः ब्रह्मपरसंनिहितविचारस्य व्या स कृतस्यानन्तर्यनिरूपकशरीरा स्यादपि । अत्र स्यादपीति निर्देशेन न स्यादेव मुख्यमर्यादया, गौणरीत्या कथञ्चिद् भवेदिति सिद्धम् । समानकर्तृकग्रन्थस्थल एवार्थभेदे सत्यथपदप्रयोगो मुख्यो भवति, अत्र तु कर्मकाण्डे जै मि नि र्व्याख्याकर्ता, ब्रह्मकाण्डे व्या सः । यद्यपि व्याख्येयमेकं शास्त्रम्; तथाऽपि कर्तृभेदात् केवलाथपदप्रयोगोऽसङ्गतो भवेत्, परन्तु दे व द त्तः पूर्वार्धं व्याख्यातवान्, अथोत्तरार्धमहं व्याख्यास्यामीत्यादौ भिन्नकर्तृकेऽप्यथपदप्रयोगदर्शनात् प्रकृतेऽपि पूर्वकाण्डं जै मि नि ना व्याख्यातम्, अथ मया ब्रह्मविचारो निरूप्यत इति योजनेन कथञ्चिदथपदं घटेतापीत्याशयः । तथाऽपीदं योजनमनुपपन्नम् ; प्रतिज्ञापरत्व एव सूत्रस्यैतत्पक्षोत्थानात् । प्रतिज्ञापरत्वमेवैतत्सूत्रस्यानुपपन्नम् ; श्रुतिव्याख्यापरत्वस्यैवोचितत्वात्, तदेतदाह— नो खल्विति ॥५१॥

[26b]　साधनभिदा त्वकृतदूरकरणानां
शुद्धमनसां निकटहेतुसहितानाम् ।
आत्मपरतत्त्वमविलम्बमवगन्तुं
वेदशिखरेषु विविधेषु विनिवेशात् ॥५२॥

अथ कर्मणामारादुपकारकत्वम् नित्यानित्यवस्तुविवेकादीनां चतुर्णामन्तरङ्गसाधनतां च विशदयति—साधनेति ॥ इह जन्मनि अकृतदूरकरणानाम्

अस्संपादितकर्मलक्षणारात्करणानाम्। जन्मान्तरकृतकर्मणा शुद्धमनसां संप्रति जन्मनि विवेकादिलक्षणनिकटहेतुभिः सहितानां जनानाम्। आत्मपरतत्त्वम् जीवेशघटिततत्त्वमखण्डस्वरूपम्। अविलम्बम् सत्त्वरम्। अवगन्तुम् ज्ञातुम्। विविधेषु नानाप्रकारेषु। वेदशिखरेषु उपनिषत्सु। विनिवेशात् अभिनिवेशात्।
5 प्रवृत्तेः साधनभिदा तु बहिरङ्गान्तरङ्गसाधनभेदात् सुघटते। इति वर्तुलार्थः ॥५२॥

[27a] स्पष्टमिह साधनचतुष्टयनिरुक्ति-
स्ति त्ति रि शिरोगिरि न दृष्टिपथमेति।
अस्खलनवागखिलसाधननिरूढा
तुर्यवपुषीह हि स न त्सु त गृहीता ॥५३॥

10 अथ विषयवाक्यादानन्तर्यप्रतियोगिभूतान्तरङ्गसाधनलाभ इति प्रागुक्तम्, तत्र मुख्यविषयः तै त्ति यो यो प नि ष त्; "तद्विजिज्ञासस्व तद् ब्रह्मे"[1]ति श्रवणात्। तत्र च क्वापि नानन्तर्यप्रतियोग्यन्तरङ्गसाधनमाम्नातमुपलभ्यत इत्याशङ्कां परिहरति—स्पष्टमिहेति॥ ति त्ति रि शिरोगिरि तै त्ति री यो प नि ष द्वाक्ये क्वापि। साधनचतुष्टयस्य निरुक्तिः कथनं स्पष्टं न दृष्टिपथमेति यद्यपि; तथाऽपि तुर्यवपुषि
15 चतुर्थकोशे विज्ञानमयवाक्ये। अस्खलनवाक् अस्खलनार्थप्रतिपादिका वाक् वाणी "तस्माच्चेन्न प्रमाद्यती"[2]ति वाणी। अखिलसाधननिरूढा निखिलान्तरङ्गसाधनप्रतिपादनक्षमा स न त्सु जा ते न गृहीता। तेन तै त्ति री येऽपि साधनचतुष्टयं परिगृहीतमेव भवतीति भावः। तथाहि—स न त्सु जा ते न—

"न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्।
20 सर्वं हि पश्यः पश्य[27b]ति सर्वमाप्नोति सर्वशः॥"[3]

इति छा न्दो ग्य नवमाध्यायगत स न त्कु मा र प्रवर्तित भू म वि द्या वलम्बेन दशमाध्यायगत द ह र वि द्या न्तर्गते न्द्र वि रो च ना ख्यायिकावलम्बेन च—

"स न त्सु जा ता हमिमं शृणोमि न मृत्युरस्तीति तव प्रवादम्।
देवासुरा ह्याचरन् ब्रह्मचर्यममृत्यवे तत् कतरन्नु सत्यम्॥"[4]

25 इति प्रश्ने प्रवर्तिते—

"प्रमादं वै मृत्युमहं ब्रवीमि सदाऽप्रमादममृतत्वं ब्रवीमि॥"[5]
"प्रमादाद्वा ऽसुराः पराभवन्नप्रमादाद् ब्रह्मभूताः सुराश्च॥"[6]

इत्युत्तरं दत्त्वा—

"पितृलोके राज्यमनुशास्ति देवः शिवः शिवानामशिवोऽशिवानाम् ॥"[1]

इति य मं प्रस्तुत्य—

"अस्यादेशाद् निःसरते नराणां क्रोधः प्रमादो मोहरूपश्च मृत्युः ।"[2]

5 इत्यादिना य मा धिष्ठितक्रोधादिरूपमृत्युं महता प्रबन्धेन निर्दिश्य—

"कामानुशायी पुरुषः कामाननु विनश्यति ।
कामान् विदस्य धुनुते यत्किञ्चित् पुरुषो रजः ॥"[3]

इति कामत्यागादितरदोषपरिहारमुक्त्वा—

"देहोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।
10 गृध्रन्त एव धावन्ति गच्छन्तः श्वभ्रमन्तिकाः ॥
अमूढवृत्तेः पुरुषस्येह कुर्यात् किं वै मृत्युस्तार्ण इवास्य व्याघ्रः ।
सक्रोधलोभो मोहवानन्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः ॥
एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन् न बिभेति मृत्योः ।
विनश्यते विषये तस्य मृत्युर्मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥"[4]

15 इति प्रमादपदगम्यकामक्रोधादिलक्षणमृत्युजयपूर्वकं ज्ञानसंपत्त्या मृत्योः पुनरनुत्थानं निरूपितम् । ततश्च—

"नैव मानं च मौनं च सहिते वसतः सदा ।
अयं मानस्य विषयो ह्यसौ मौनस्य तद्विदुः ॥
श्रीर्हि माना[28a]र्थसंवासात् सा चापि परिपन्थिनी ।
20 ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥"[5]

इत्यनेन सांसारिकसुखविमुक्त्योः परस्परविरोधं नित्यानित्यविवेकादि विना मुक्तिदौर्लभ्यमुक्त्वा —

"सत्यार्जवे ह्रीर्दमशौचविद्याः षण् मानमोहप्रतिबन्धकानि ॥"[6]

इति नित्यानित्यविवेकादिसाधनं सङ्ग्रहेण निरूपितम् । ततश्च मानविरोधि-
25 मौनपदार्थ स्तै त्ति री य ब्र ह्म व ल्ल्या मन्नमयादिपञ्चपर्वसु तृतीयं मनोमयपर्व "तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचनेती"[7] ति श्रूयमाणं परिगृह्य—

"यतो न वेदा मनसा सहैनमनुप्रविशयन्ति ततोऽथ मौनम् ।
यत्रोत्थितो वेदशब्दस्तथाऽयं स तन्मयत्वेन विभाति राजन् ॥"[1]

**इति निरूपितः । अत्र तै त्ति री य एव चतुर्थे पर्वणि** "विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान् समश्नुत"[2] **इति समाम्नातोऽप्रमादः शरीरगतसर्वकामादिपरिहारश्च** "प्रमादं वै मृत्युमहं ब्रवीमि"[3] "देहोऽप्रकाशः"[4] **इत्यादिना परिगृहीतः । ततश्च तमेव मौनपदार्थम्—**

"तस्यैव नामादिविशेषरूपैरिदं जगद् भाति महानुभावम् ।
निर्दिश्य सम्यक् प्रवदन्ति वेदास्तद्विश्ववैरूप्यमुदाहरन्ति ॥"[5]

**इति समुपक्षिप्य—**

"तदर्थमुक्तं तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान् ।
पुण्येन पापं विनिहत्य पश्चात् स ज्ञायते ज्ञानविदीपितात्मा ॥
[28b]ज्ञानेन चात्मानमुपैति विद्वान् न चान्यथा वर्गफलानुकाङ्क्षी ।"[6]

**इति ज्ञानसाधनानि तपआदीन्याम्नाय—**

"ब्राह्मणानां तपस्त्वृद्धमन्येषां तावदेव तत् ॥"[7]

**इति तपसि समृद्धिमादिश्य—**

"निष्कल्मषं तपस्त्वेतत् केवलं परिचक्षते ।
एतत् समृद्धमत्यृद्धं तपो भवति नान्यथा ॥
तपसा वेदविद्वांसः परं त्वमृतमाप्नुयुः ॥"[8]

**इति निष्कल्मषतपोद्वारा वेदनसिद्धामृतत्वमाम्नातम् । ततश्च—**

"कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ॥"[9]

**इति तपोगतकल्मषमुपदीप्य—**

"क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसानि च षट् च सप्त ।
ज्ञानादयो द्वादश चाततानाश्शास्त्रे गुणा ये विदिता द्विजानाम् ॥
क्रोधः कामो लोभमोहौ विभित्साऽकृपाऽसूया मानशोकौ स्पृहा च ।
ईर्ष्या जुगुप्सा च महागुणेन सदा वर्ज्या द्वादशैते नरेण ॥"[10]

**इति क्रोधादिद्वादशकम्—**

"विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत् कोपं चपलो रूक्षणश्च ॥"[11]

**इति षड् नृशंसानि—**

"संभोगसंविद्विषमोऽतिमानी दत्तानुतापी कृपणो बलीयान् ।
वर्गप्रशंसी वनितासु द्वेष्टा एते गुणाः सप्त नृशंसरूपाः ॥"[12]

इति सप्त नृशंसानि वर्ज्यानि निरूप्य—

"ज्ञानं च सत्यं च दमः श्रुतं च
अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
यज्ञश्च दानं च धृतिः शमश्च
5 व्रतानि वै द्वादश ब्राह्मणस्य ॥
त्रिभिर्द्वाभ्यामेकतो वा विमुक्ताः
क्रमाद्विशिष्टा मौनभूता भवन्ति ॥"[1]

इति नित्यानित्यवस्तुविवेकलक्षणज्ञानादिप्रयोज्यतया मौनपदार्थभूतमुक्तिमुपक्षिप्य—

10 "दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् ।
तानि सत्यमुखान्याहुर्ब्राह्मणा ये म[29a]नीषिणः॥"[2]

इति सङ्ग्रहेण मुक्तिसाधनसामान्यं त्रेधोपक्षिप्य दममनेकदोषरहितं महता प्रबन्धेन प्रतिपाद्य—

"श्रेयांस्तु षड्विधस्त्यागः श्रियं प्राप्य न हृष्यति ।
15 अर्हते याचमानाय पुत्रान् वित्तं ददाति यत् ॥"[3]

इति प्रथमं त्यागं निरूप्य—

"इष्टापूर्तं द्वितीयं स्याद् नित्यवैराग्ययोगतः ।
कर्मत्यागश्च राजेन्द्र तृतीय इति विश्रुतः ॥"[4]

इत्यादिना त्यागषड्भेदान् निरूप्य—

20 "अप्रमादो भवेदेतैः स वाप्यष्टगुणो महान् ॥"[5]

इति षड्विधत्यागाप्रमादं विधायाष्टगुणवत्त्वं च त्यागे निरूप्य—

"सत्यं दानं समाधानं शौचं वैराग्यमेव च ।
अस्तेयं ब्रह्मचर्यं च तथाऽसङ्ग्रह एव च ॥"[6]

इत्यष्टगुणान् विशिष्य प्रतिपाद्य—

25 "दोषत्यागोऽप्रमादः स्यात् स चाष्टगुणकः स्मृतः ।
अष्टौ दोषाः प्रमादस्य तान् दोषान् परिवर्जयेत् ॥
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।
अतीतानागतेभ्यश्च मुक्तयुपेतः सुखी भवेत् ॥

सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ।
तांस्तु सत्यमुखान् प्राहुः सत्ये ह्यमृतमाहितम् ॥
निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् ॥
दोषैरेतैर्विमुक्तं तु गुणैरेतैः समन्वितम् ।
5 एतत्समृद्धमत्यृद्धं तपो भवति केवलम् ॥"[1]

इति महता प्रबन्धेन तैत्तिरीयोपनिषद्गताप्रमादं सगुणब्रह्मवाक्यगतमपि शमादिसकलसाधनोपलक्षकत्वेन विवेचितम् ॥५३॥

पूर्वमपनीतिविदितात्मपरतत्त्वः
[29b] प्राप्तुमुपनीतिनियमाद्युपससार ।
10 तेन सहितो भृगुरसौ लसदुपायैः
साधु तप इत्युदितसाधनगिराऽपि ॥५४॥

अथ "शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावान्"[2] इत्यादि श्रुत्यन्तरानुरोधेन साधनचतुष्टयस्याधिकारिविशेषणत्वेन प्रतीतेरिह भृगोर्गुरूपसरणेन साधनचतुष्टयसंपत्तिज्ञानात् तप इति निर्देशाद् भृगुवल्ल्यनुरोधेनापि
15 साधनचतुष्टयं संपन्नमित्याह—पूर्वमिति ॥ भृगुर्ब्रह्मवल्लीं वरुणे नान्यशिष्यार्थं प्रवर्तितां पूर्वमपनीति यथा भवति तथा गुरूपसरणादिनियममन्तरेण विदितात्मपरतत्त्वः ज्ञातजीवेशस्वरूपः सन्। उपनीतिनियमादि उपनयनियमादि। प्राप्तुं गुरुं वरुणमुपससार प्रपन्नः। तेन गुरूपसरणलक्षणहेतुना। "शान्तो दान्त"[3] इति श्रुत्यनुरोधेन साधनचतुष्टयसंपन्नस्यैव
20 तत्त्वविचारेऽधिकारात्। "स तपोऽतप्यत स तपस्तप्त्वे"[4]त्यादि साधनपरगिराऽपि हेतुना। लसदुपायैः उज्ज्वलसाधनचतुष्टयेन। साधु सहितो भृगुर्भवति। अत्र तपःपदार्थः शमदमालोचनादिरिति सनत्सुजात एव स्पष्टम् "निवृत्तेनैव दोषेण तपो व्रतमिहाचरेदि"[5]त्यादिना महता प्रबन्धेन निरूपितम्। एवं च साधनचतुष्टयं तित्तिरिश्रुतिगम्यमेवेत्यथपदेन तदानन्तर्यं बोधयितुं
25 शक्यम्। इति भावः ॥५४॥

[30a] मु ण्ड क मनौ ननु परीक्ष्यपदपूर्वं
साधनसमृद्धिरुदिता विषयरूपे ।
तां हृदि समाकलयताऽथपदमुक्तं
मङ्गलमपि स्फुरयताऽत्र मुनिनादौ ॥५५॥

5 अथ प्रकृतसूत्रेऽन्यत्र च गौणमुख्यभेदेन विषयनानात्वस्य प्राग् व्यवस्थापनात् ति त्ति रि श्रुतिवद् मु ण्ड का दिश्रुतेरपि शब्दार्थोभयप्रत्यभिज्ञानेन मुख्यविषयत्वात् तच्छ्रुत्यनुरोधेनापि साधनचतुष्टयमिहोपस्थितमित्याह — मु ण्ड के ति ॥ विषयरूपे मु ण्ड क मनौ परीक्ष्यपदपूर्वं—

"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
10 तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥
तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥"[1]

इत्येवंलक्षणे । नित्यानित्यवस्तुविवेकादिरूपसाधनसमृद्धिरुदिता भवति । तत्र "परीक्ष्ये"[2]त्यादिना नित्यानित्यवस्तुविवेकः "निर्वेदमायादि"[3]त्यादिने-
15 हामुत्रार्थफलभोगविरागः "शमान्विताये"[4]ति शमादिपरिग्रह उपलक्षणविधया "तद्विज्ञानार्थमि"[5]त्यादिना प्रवृत्ताविच्छाया नियामकत्वाद् जिज्ञासा सूचिता । "ब्रह्मनिष्ठमि"[6]ति निर्देशाद् यस्य यस्मिन् निष्ठा स तदुपदेष्टुं शक्नुयादिति जिज्ञासेयं ब्रह्मविषयिणी । तच्च ब्रह्म "नास्त्यकृतः,"[7] "तद्विज्ञानार्थमि"[8]त्यनेन परिगृहीतम् । "सम्यक् प्रशान्तचित्ताये"[9]त्यनेन समस्तसाधन-
20 परिग्रहोऽत्र सूचितः । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि"[10]त्यनेन सामर्थ्यान्मुमुक्षाऽपीह सूचिता । एवं च मुनिना व्या से न । अत्र प्रथमसूत्रे । ताम् साधनसमृद्धिं मु ण्ड क श्रुतिसंमताम् हृदि समाकलयता जानता । "ओङ्कारश्चाथशब्दश्चे"[11]ति मानानुरोधेन मङ्गलं प्रकाशयताऽथपदमुक्तम् "अथात"[12] इति । एवं च सूत्रेऽस्मिन्नथपदं सङ्गतमेव । इति भावः ॥५५॥

25 [30b] आत्मपरतत्त्वपरचर्चनपराणा-
मादिममिदं विवरणं श्रुतिगिरां यत् ।

तेन निखिलेऽपि यदि नो भवति शास्त्रे
तत्त्वपरचर्चनमथापि नहि हानिः ॥५६॥

अथ या तावद् निर्गुणब्रह्मविचारपरमिदमादिमं सूत्रमिति पक्षे शास्त्रस्य सर्वस्यापि निर्गुणब्रह्मविद्यापरत्वाभावात् सगुण पञ्चा ग्नि वि द्या दीनामपि विचारात् प्रतिज्ञातादन्यदपि निरूप्यत इत्यसाङ्गत्यमिति शङ्का, सा श्रुतिव्याख्यापरमादिमं सूत्रमिति पक्षे प्रादुर्भावं नैवायत इत्याह—आत्मेति। आत्मपरयोः जीवेशयोः तत्त्वम् अखण्डस्वरूपम्, तत्परं यच्चर्चनं विचारः, तत्पराणाम् तत्तात्पर्यकाणाम्। श्रुतिगिराम् वेदान्तवाक्यानाम्। यत यस्मात् कारणात्। इदमादिमं सूत्रं विवरणं जातम्, तेन हेतुना निखिलेऽपि शास्त्रे तत्त्वपरचर्चनम् अखण्डपरचर्चा यदि न भवति, तथाऽपि हानिर्नहि भवति निर्गुणब्रह्मविचारः क्रियत इति प्रतिज्ञापरत्व एव सकलेऽपि शास्त्रे निर्गुणब्रह्मविचारो नियमेनापेक्षितः प्रतिज्ञानिर्वाहाय विचारपरश्रुतिव्याख्यानमिति पक्षे त्वग्रिमसूत्रवदाद्यसूत्रस्यापि श्रुतिविवरणरूपत्वेन सर्वस्मिन्नपि शास्त्रे निर्गुणब्रह्मविचारप्रसङ्ग एव नेति न कापि क्षतिः। इति भावः ॥५६॥

[31a] ग्रन्थवदने नियमतो नियमवाणी
वर्तत इतीह नहि वर्णयति विद्वान्।
गौ त म मुनिप्रमुखसंश्रितकृतौ यद्
नाश्रवपरं वचनमाकलितमास्ते ॥५७॥

अथ प्रतिज्ञापरवाक्यमन्तरा कथं शिष्यावधानम्, कथं वा शास्त्रप्रवृत्तिरित्यनाशङ्क्यमेव ; "अथ योगानुशासनम्",[1] "अथ शब्दानुशासनम्",[2] "अथातो धर्मं व्याख्यास्याम"[3] इत्यादौ प्रतिज्ञापरवचनदर्शनेऽपि गौ त म पञ्चाध्याय्यादिषु "प्रमाणप्रमेये"[4]त्याद्यारम्भेण तत्रेवात्राप्युपपत्तेः, तत्र शिष्यावधानार्थं पृथक् प्रतिज्ञासमुन्नयनेऽत्रापि वेदान्तजिज्ञासेत्येवं प्रतिज्ञोन्नयनसंभवात्, शिष्यावधानस्य तत्राग्रिमविलक्षणसमारम्भेणैव संभवे चेहापि तथैव संभवात्।

तदेतदाह—ग्रन्थवदन इति ॥ नियमवाणी **प्रतिज्ञावाक्यम्** । ग्रन्थवदने **ग्रन्थारम्भे** । नियमतः **नियमेन** । वर्तत इति न हि । विद्वान् **सकलशास्त्रमर्यादाभिज्ञो वर्णयति** । यद् गौ त म मुनिप्रमुखसंश्रितकृतौ **गौ त मा दिकृतग्रन्थे** "प्रमाणप्रमेये"[1]त्यादौ । आश्रवपरम् **प्रतिज्ञापरम्** । वचनमाकलितम् **परिगृहीतम्** । नास्ते **न**
5 **तिष्ठति** । **एवं च ग्रन्थादौ प्रतिज्ञापरं वचनं न नियतमिति भि क्षु सू त्रेऽप्यस्मिन् न प्रतिज्ञावचनमपेक्षितम्** । **इति भावः** ॥५७॥

[31b]　ज्ञानसमकालमखिलागमवचोभि-
ज्ञेयमकलङ्कितमपारसुखरूपम् ।
अद्वयपुमर्थमुपलभ्य रसवाक्येऽ-
10　तःपदमुपात्तमुचितं मुनिवरेण ॥५८॥

**अथ प्रस्तुतेऽर्थे सत्येव तत्परामर्शनाय सर्वनामप्रवर्तनात् प्रकृते प्रस्तुतार्थस्यापरोक्षस्य कस्यचिददर्शनात्** तत्परामर्शपरमतःपदं **सूत्रगतमसङ्गतमिति शङ्कां वारयति**—ज्ञानेति ॥ अखिलागमवचोभिः **समस्तवेदान्तवचनैः** । **तात्पर्यतो** ज्ञेयम् । ज्ञानसमकाल**मेव** अकलङ्कितं **सत् अविद्यादिदोषरहितं सत्** । अपारसुख-
15 रूपम् **अनन्तनिरतिशयसुखस्वरूपम्** । **अत** एवाद्वयपुमर्थम् **जीवेशाभेदलक्षणाखण्डपुरुषार्थम्** । रसवाक्य उपलभ्य "रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति ।"[2] "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवती"[3]त्यादि **वाक्ये**—"असद्वा"[4] [32a] **इति मन्त्रगतं** "स्वयमकुरुते"[5]**ति**
20 **वाक्यभावम्**—अयम् **तद् जीवाभिन्नमीशस्वरूपमात्मानमेव प्रपञ्चरूपेण सुष्ठु** अकुरुत **प्राकटयत्**, "तस्मात् तत् सुकृतमुच्यत"[6] **इति चतुर्थचरणं हृदि निधाय प्रवर्तिते** "यद्वै तत् सुकृतं रसो वै सः" **सारभूतः** । **तं सारं लब्ध्वा** । अयम् **प्रमाता ज्ञानेनाभेदेन** प्राप्यानन्दी भवति **संसारदशायामनानन्दो ज्ञानदशायामानन्दः संपद्यमानो भवति** । एष **अखण्डार्थ एव जीवत्वोपलक्षितोऽन्यानानन्दयति** ।
25 यदैषः **प्रमाता** । एतस्मिन् **शोधिततत्त्वम्पदार्थस्वरूपे** । अभयम् **भयरहितं भेदकृतभयरहितं यथा भवति तथा** । प्रतिष्ठाम् **स्थितिं लभते, तदा** सः **शोधितेशः**

सुकृतमित्युपात्तः अभयं गतः गमयिता भवति। भेदे सत्येव भयसत्त्वेन ज्ञानेनाविद्याविलयतो भेदे नष्टे भेदकाभावादभयप्रापयिता भवति, तस्मादखण्ड एव मुख्यः पुरुषार्थो भवतीत्यर्थके। ज्ञात्वा। मुनिवरेण समुचितम्। अपरोक्षफल-परामर्शक्षमम्। अतः पदम्। सूत्रे विषयवाक्ये। प्रयुक्तं समुपात्तं भवति; सूत्ररीत्या
5 प्रस्तावाभावेऽपि विषयवाक्यपरिपाट्या प्रस्तुतत्वेनातो निरतिशयापरोक्षानन्दा-खण्डलक्षणपुरुषार्थलाभादित्यर्थप्रतिलम्भसंभवात्। एवं च भृगोः साधन-चतुष्टयसंपत्त्यनन्तरं निरतिशयफलज्ञानाद् ब्रह्मविचारो गुरुप्रेरणया भूयात्। अत्र भृग्वादेः कथाभागायत्तत्त्वाद् विवक्षाभावात् कोऽपि जनः साधन-कलापी समुत्कटफलाद् ब्रह्मविचारवान् भवतीत्यर्थः सिद्धो भवति ॥५८॥

10 ब्रह्मपदसंवलितमेव भृगुवल्ल्यां
[32b] तद्वचनमीशसरसं वदति जीवम्।
यत् स्फुटतरं शुभतरं विषयवाक्ये
ब्रह्मपदमत्र तदखण्डपरमेव ॥५९॥

अथ सौत्रं ब्रह्मपदं विषयवाक्यानुरोधेनाखण्डार्थपरमेव, तेन ब्रह्मपदं
15 सगुणपरं निर्गुणपरमित्यादिविकल्पेनानिर्धारित एव शास्त्रार्थः स्यादित्याशङ्का परास्तेत्याह—ब्रह्मपदेति ॥ विषयवाक्ये ब्रह्मवल्ल्यन्तर्गते "तद्विजिज्ञासस्व तद् ब्रह्मेती"[1] त्यादिलक्षणे। तद्वचनं तत्पदघटितं वचनम्। ब्रह्मपदसंवलितमेव विद्यमानं "तद् ब्रह्मे"[2]त्येवंलक्षणम्। यत् यस्मात् कारणात्। स्फुटतरम् स्पष्टतरम्। शुभतरं निरवद्यतया परमपुरुषार्थरूपम्। जीवमीशसरसम् ईशसमरसं त्रिविध-
20 परिच्छेदरहितम्। वदति "यतो वा इमानी"[3]ति वाक्ये यत्पदानां जीवपरत्वात् तत्प्रतिनिर्देशकं तत्पदमपि जीवपरमिति तदिति जीवमुद्दिश्य ब्रह्मेति सामाना-धिकरण्येन ब्रह्मपदार्थविधानेनाखण्डार्थसिद्धेः। वस्तुतो वक्ष्यमाणरीत्या यो ब्राह्मणः पण्डितः, तमानयेत्यत्र तत्पदस्य केवलयत्पदार्थपरामर्शकत्वाभावाद् विधेयादिविशेषणकरञ्जितपरामर्शकत्वादिहापि जीवत्वेशत्वोपलक्षितपरामर्श-
25 कत्वेनाखण्डस्यैव तत्पदेन परामर्शात् तस्मिन्नेव दृष्टब्रह्मत्वस्य ब्रह्मपदेन बोधि-तत्वात्। तत् तस्मात् कारणात्। अत्र प्रथमसूत्रे तदर्थानुवादके। ब्रह्मपदमखण्ड-

परमेव भवेत्। तथाच न पूर्वोक्तविकल्पेनानिर्धारणं शास्त्रार्थस्य स्यादिति दोषः परिहृतो वेदितव्यः ॥५६॥

[33a]　ब्रह्मविषयैकपरिराजदनुयोगे
　　सत्यपि यदुत्तरयुगं प्रतिनिबद्धम्।
5　　अन्नमिति जैवमनुसृत्य यत इत्या-
　　द्येन वचसैशमुदितं च तदखण्डम् ॥६०॥

अथ सूत्रगतं ब्रह्मपदमखण्डार्थपरमित्येतदसङ्गतम्, विषयवाक्ये "तद्विजिज्ञासस्व तद् ब्रह्म"[1]त्यत्र तत्पदस्य जगद्धेतुपरत्वेन जगद्धेतूद्देशेन ब्रह्मपदेनेशाभेदविधानेन तदनुवादके सूत्रेऽपि ब्रह्मपदमीशपरमेव भवितुमर्हतीति
10 नाखण्डपरमिति शङ्कां परिहरति—ब्रह्मेति ॥ ब्रह्मविषयैकपरिराजदनुयोगे सत्यपि ब्रह्मपदार्थलक्षणविषय एवैकस्मिन् परिराजन् प्रकाशमानो योऽनुयोगः "भृगु र्वै वारुणिः। व रु णं पितरमुपससार। अधीहि भगवो ब्रह्मे"[2]ति प्रश्नः, तस्मिन्नेकमात्रविषयके प्रश्ने सत्यपि। "तस्मा एतत् प्रोवाच"[3] "तं होवाचे"[4]त्युत्तरद्वयं यद् यस्मात् प्रतिनिबद्धं दृश्यते। एकस्मिन् प्रश्न एकोत्तरदानस्यैवोचितत्वेनोत्तर-
15 द्वयसामर्थ्यात् पृष्टार्थघटकौ द्वावर्थावपेक्षिताविति "तत्त्वमसि"[5] "अहं ब्रह्मास्मी"[6]त्यादिश्रुत्यनुरोधेन जीवेशोभयघटितोऽयं ब्रह्मपदार्थ इति निर्णयम्। अत एव "अन्नमि"[7]त्यादिना जैवः पदार्थः परिगृहीतः, भूतानि, जायन्ते, जीवन्ति, अभिसंविशन्तीतीशपदार्थश्च परिगृहीतः सङ्गतो भवति। एवम्—"अन्नं प्राणमि"[8]त्यादिनोपात्तं जैवमर्थं यत इति पदेनानुसृत्य "यतो वा इमानी"[9]त्यादि-
20 वाक्येन जैवार्थोद्देशेनैशं रूपं चोदितम् विहितम्। तत तस्मात्। अखण्डं भवति ब्रह्मपदार्थः। इति योजनीयम् ॥६०॥

[33b]　ब्रह्मनिनदोऽयमनुयोगकृतयोगोऽ
　　खण्डपर एव परतोऽन्नमुखगीर्षु।
　　उत्तरयुगं परिकल्प्य परिशोध्या-
25　　नन्दमवलम्ब्य यदवादि पररूपम् ॥६१॥

**प्रश्नगतब्रह्मपदस्याखण्डार्थपरत्वे हेत्वन्तरमप्याह**—ब्रह्मेति ॥ अयमनुयोग-कृतयोगः **प्रश्नवाक्यगतः**। ब्रह्मनिनदः **ब्रह्मशब्दः**। अखण्डपर एव **भवति**। यत **यस्मात्**। "यतो वा इमानी"[1]**त्यादिवाक्यात्**। परतः **अग्रे**। अन्नमुखगोर्षु "अन्नं ब्रह्मे"[2]**त्याद्यन्नप्राणमनोविज्ञानवचनेषु**। "तस्मा एतत् प्रोवाच,"[3] "तं होवाचे"[4]-
5 **त्युत्तरद्वयं परिगृह्य परिशोध्यान्नादीनां ब्रह्मत्वं नोते विवेच्या**नन्दमवलम्ब्य "आनन्दो ब्रह्मेति व्यजानात्"[5] **इत्यादिनाऽऽनन्दोद्देशेन** पररूपम् "ब्रह्मविदाप्नोति परमि"[6]**त्युक्तरूपम्**। अवादि **कथितम्**। **तस्मादखण्डपर एव ब्रह्मशब्दः। इति पूर्वेणान्वयः** ॥६१॥

[34a] ब्रह्मपदषट्कमिह यत् खलु विधेयं
10 तद् भवति सर्वजगदीशपरमेव।
जीववचनैकवचनं सदिदमेका-
खण्डपुरुषार्थसच्चिदवबोधि ॥६२॥

**अथेह भृगुवल्ल्यां प्रश्नगतब्रह्मपदमेकमखण्डपरम्, अन्यानि ब्रह्मपदानि** "तद् ब्रह्मे"[7]**त्यादीनि षडंशपराणि भवन्तीति दर्शयति**—ब्रह्मपदेति ॥ विधेयं
15 यद् ब्रह्मपदषट्कम **तद् ब्रह्म, अन्नं ब्रह्म, प्राणो ब्रह्म, मनो ब्रह्म, विज्ञानं ब्रह्म आनन्दो ब्रह्मेत्येवंलक्षणम्**। तत् सर्वजगदीशपरमेव भवति। जीव-वचनैकवचनं सत् **जीवशब्देन एकवचनम् एकार्थकबोधकम्**—**तत्समानाधिकरणं** सदिदं **सर्व**मेकाखण्डपुरुषार्थसुखसच्चिदवबोधि **परमपुरुषार्थबोधकं भवति। एवं च प्रश्नस्थब्रह्मपदानुरोधेन** "ब्रह्मजिज्ञासे"[8]ति **सूत्रप्रणयनं भवति। अत्र**
20 "भृगुर्वै वारुणिरि"[9]**ति प्रथमवाक्यगतब्रह्मपदमखण्डपरमिति निर्णीतम्**। "तद् ब्रह्म,"[10] "अन्नं ब्रह्मे"[11]**त्यादिषट्कमीशपरमित्युक्तम्** ॥६२॥

[34b] द्वादशकमत्र खलु देशिकविनेया-
दिष्टवचनेषु विनिविष्टमवशिष्टम्।
सर्वमपि पूर्ववचसीव सुखभूमाऽ-
25 द्वैतचिदनन्तसदखण्डपरमेव ॥६३॥

शिष्टानि द्वादशपदानि प्राणवाक्याद्यारम्भेषु "अधीही"[1]त्यादि भृ गु वाक्य-
गतानि चत्वारि, "तपसे"[2]त्यादिगुरुवाक्यगतान्यष्टौ, आहत्य द्वादश ब्रह्म-
पदानि प्रथमप्रश्ने ब्रह्मपदमिवाखण्डपराणीत्याह—द्वादशकमिति ॥ गुरु-
शिष्योक्तवाक्येषु निविष्टं ब्रह्मपदानां द्वादशकम् । शिष्टं सर्वमपि तत् "भृ गु र्वै
5 वारुणिरि"[3]ति प्रथमप्रश्नवचसि ब्रह्मपदमिवाखण्डपरमिति योजनीयम् ।
अथ—अत्र "तद्विजिज्ञासस्वे"[4]ति जिज्ञासावाक्ये यत्पदपरामृष्टजीवस्यैव
तत्पदेन परामर्शेन तस्यैव वाक्ये जिज्ञासाकर्मत्वप्रत्ययाद् ब्रह्मपदबोध्या-
खण्डार्थस्य जिज्ञासाकर्मत्वाश्रयणात् "तद् ब्रह्मे"[5]त्युत्तरवाक्ये जिज्ञासितं
विचारितं जीवस्वरूपम्, तदेव ब्रह्मेति प्रत्ययात् सूत्रे ब्रह्मजिज्ञासेति
10 जिज्ञासाकर्मत्वेन ब्रह्मनिर्देशः किंनिबन्धन इति—चेत्, अत्रोच्यते । उप-
क्रमेऽखण्डार्थजिज्ञासयैवाखण्डं विचारद्वारा साक्षात् कर्तुम्—"अधीहि भगवो
ब्रह्मेती"[6]ति प्रश्नप्रवर्तनात्, अखण्डस्य जीवेशोभयघटितत्वादखण्ड-
जिज्ञासयैव जीवेशजिज्ञासोत्थापनात् साक्षात्कारे व्यापारीभूताखण्डविचारस्यैव
मुख्यत्वात् तदङ्गतयैव जीवेशविचारप्रवृत्तेर्जीवजिज्ञासयाऽखण्डार्थजिज्ञासाया
15 मुख्यत्वेन गम्यतया सैव जिज्ञासा सूत्रे ब्रह्मजिज्ञासेति निबद्धा । यद्वा—यो
ब्राह्मणो विद्वांस्तमानयेत्यादौ पूर्ववाक्ये यत्पदपरामृष्टधर्ममात्रवतो न परामर्श-
स्तत्पदेन, किन्तु यत्पदवाक्ये यद् विधेयभूतम्, तद्रूपविशिष्टमेव यत्पदगम्यं
तत्पदपरामृश्यं भवति ; विदुषो ब्राह्मणस्यैवानयनकर्मत्वप्रत्ययात् । प्रकृते-
ऽपि "यतो वा इमानी"[7]त्यादौ जगदुपादानत्वादिविशिष्टयत्पदार्थस्यैव तत्पदेनापि
20 परामर्शनीयत्वेन तत्रेशधर्मवैशिष्ट्यस्य जीवे वक्तुमशक्यत्वाद् जीवेशोभय-
सामानाधिकरण्यलभ्याखण्डार्थ एव यत्पदवाक्ये परामर्शनीय इति स एव
तत्पदेन परामर्शनीय इति तस्यैव जिज्ञासाकर्मत्वं सिद्धं भवति ॥६३॥

[35a] यद्यपि यतोवचसि जीवपरिचर्चा
तर्ह्यपि न सूत्रगिरि काचिदपि हानिः ।
25 प्रश्नवशतोऽधिगतमेव सदखण्डं
तच्च ननु बोधयितुमग्रिमवचोऽपि ॥६४॥

एवं च तद् ब्रह्म तदखण्डं ब्रह्म "अधीहि भगवो ब्रह्मे"[8]ति प्रश्नगतब्रह्मपद-

गम्यमित्यर्थो विवेचनीयः । तदेतद् द्वाभ्यामाह—यद्यपीति ॥ तत्र प्रथमकल्पं दर्शयति—यदीति । यतोवचसि "यतो वा इमानी"[1]ति वाक्ये "तद् विजिज्ञासस्व । तद् ब्रह्मे"[2]ति वाक्यशिरस्के । "यतो वेत्या"[3]दियत्पदैः पूर्वोपात्तान्नमयादीनां परिग्रहेण जगदुपादानत्वादिनिर्देशानन्तरं "तद्विजिज्ञासस्वे"[4]त्यनेनाम्नाता भवति
5 यद्यपि ; तथाऽपि "अथातो ब्रह्मजिज्ञासे"[5]ति सूत्रगिरि सूत्रवाक्ये न काचिदप्यखण्डार्थपरब्रह्मपदपरिग्रहे हानिर्भवति । कुतः । "अधीहि भगवो ब्रह्मे"[6]ति प्रश्नवशातोऽग्र उत्तरद्वयान्यथानुपपत्त्या जीवेशाभेदलक्षणं सत् कालत्रयाबाध्यमखण्डं स्वरूपं समधिगतमेव ज्ञातमेव । तच्चाखण्डं बोधयितुमग्रिमवचोऽप्युत्तरद्वयात्मकं भवति । एवं चोपक्रमानुरोधेन सूत्रेऽखण्डजिज्ञासैव निबद्धा । इति भावः ॥६४॥

10 [35b] यद्घटितवाक्यगमितं निरवशेषं
तत्पदमुपाश्रयति सन्नयचयेन ।
तेन च यतोवचसि जीवपरतत्त्वं
तत्पदनिषेव्यमिति वा न खलु हानिः ॥६५॥

पक्षान्तरेणापि ब्रह्मपदघटनां सूत्रे दर्शयति—यद्घटितेति ॥ यद्घटितवाक्य-
15 गमितम् यत्पदघटितं यद् वाक्यम्, तेन गमितम् ज्ञापितम् । निरवशेषम् सर्वमपि तत्पदमुपाश्रयति । सन्नयचयेन उत्तमन्यायसमुदायेन परामृशति ; यो विद्वान् ब्राह्मणो भवति तमानयेत्यादौ तथैव दर्शनात् । तेन च लोकमानसिद्धतत्पदस्वाभाव्येन "यतो वे"[7]त्यादिवाक्ये जीवोद्देशेनेशधर्मविधानाद् जीवपरतत्त्वम् जीवेशाभेदलक्षणं तत्त्वम् तत्पदनिषेव्यम् "तद्विजिज्ञासस्व तद् ब्रह्मे"[8]ति
20 तत्पदेन प्रतिपाद्यं भवति । एवं च सूत्रे ब्रह्मपदग्रहणे विषयवाक्ये शब्दत एवाखण्डलाभेन तदर्थालाभप्रयुक्तहानिर्नेति वा समाधानं ज्ञेयम् । इति भावः ॥६५॥

[36a] यद्घटितवाक्य इव पक्षयुगलस्या-
नन्दवचनेऽपि घटना भवति नूनम् ।
मध्यमचतुष्टयवचस्सु पदलाभ-
25 स्तस्य न तथाऽनुपदवाक्यविषयत्वात् ॥६६॥

**अथ यत्पदवाक्यगतब्रह्मपदं शुद्धेशपरम्, जीवेशोभयसामानाधिकरण्य-लभ्याखण्डपरं वेति पक्षद्वयमप्यानन्दवाक्येऽतिदिशन् मध्यमान्नादिवाक्य-चतुष्टये पक्षद्वयेन बोधे जातेऽपि** "तद् विज्ञाय पुनरेवे"[1]ति **बाधनीयार्थकत्वाद् न तयोः पक्षयोस्तत्र स्थिरपदलाभ इत्याह**—यदिति ॥ "यतो वा इमानी"[2]**ति**
5 **वाक्ये यथा निरुक्त**पदयुगलस्य घटना, **तथाऽऽनन्दवाक्येऽपि नूनं घटना भवति। अत्र प्राणमनोविज्ञानवचनेषु** "तद्विज्ञाय पुनरेवे"[3]**त्यादिनाऽनुपदमेव बाधनीयवाक्यार्थत्वादन्नादीनां जडत्वेन तत्र चैतन्यालाभेनाऽखण्डार्थालाभात् तस्य पक्षद्वयस्य** पदलाभः **स्थिरपदसिद्धिः। तथा यद्वाक्यानन्दवाक्ययोरिव न भवति। इत्यन्वयः** ॥६६॥

10 [36b] वेदनलसद्विविदिषाविषयरूपं
जीवपरयोरपि तमेतमिति तत्त्वम्।
शा त प थ मूर्धनि समाश्रितमतोऽखा-
ण्डविषया विविदिषा परिगृहीता ॥६७॥

**एवं बृ ह दा र ण्य के** "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
15 तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"[4]ति **मन्त्रम्**—एतम् **अपरोक्षं जीवम्**। तमसः परस्ताद् **विद्यमानं तदवशम्**। आदित्यवर्णम् **निर्मलं परोक्षमीश-महं जाने। अन्योऽपि जन एतं जीवं** तमेव **परोक्षेशमेव** विदित्वाऽतिमृत्युमेती-**त्यर्थकमनुसृत्य क हो ल ब्रा ह्म णे** "यत्साक्षादपरोक्षाद् ब्रह्म"[5]**त्युपक्रम्य** "एतं वै तमात्मानं विदित्वा ब्राह्मणा"[6] **इति पाठात् तत्रैव** "स वा एष महानज
20 आत्मे"[7]**त्युपक्रम्य** "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"[8]**त्यादिनिदर्शनात् तदेतत्पदाभ्यां परोक्षापरोक्षपराभ्यां जीवेशोभयपरिग्रहेण तत्सामानाधिकरण्यनिर्देशाद् वेदनं विविदिषा वाऽखण्डार्थ-विषयेति स्पष्टप्रत्ययात्**—"अथात"[9] **इति सूत्रेऽप्यखण्डार्थपब्रह्मपदोपादानेन ब्रह्मजिज्ञासेति विरचनं समुचितमेव भवति। तदेतद् दर्शयति**—वेदनेति ॥
25 वेदनलसद्विविदिषाविषयरूपम् **वेदनस्य लसन्त्या विविदिषायाश्च विषयरूपम्**, "एष वै तमात्मानं विदित्वा,"[10] "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"[11]ति

श्रवणात् चेतनत्वाद् जडप्रपञ्चसारभूतौ जीवेशौ तयोरपि जीवपरयोस्तत्त्वं सारभूतमखण्डैकरसं तत्त्वम्पदसामानाधिकरण्यलभ्यं शा त प थ मूर्धनि बृ ह दा र ण्य के तमेतमितिपदाभ्यां समाश्रितं भवति। अतो हेतोरत्र सूत्रेऽखण्डार्थपरब्रह्मोपादानेन जिज्ञासापदग्रहणेन च बृ ह दा र ण्य क श्रुता-
5 विद्याखण्डार्थावगाहिनी विविदिषा जिज्ञासा परिगृहीता भवति। एवं च सूत्रे ब्रह्मजिज्ञासेति निर्देशः समुचित एव। इति भावः ॥६७॥

[37a] ज्ञापदमिदं सनिपरिष्कृतशरीरं
लाक्षणिकतामुपगतं वदति चर्चाम्।
मध्यपुरुषैकवचनेन ननु लोटो
10 यत्कृतिनियम्यमभिजन्यमिह भाति ॥६८॥

अथ जिज्ञासापदस्य श्रुतिसूत्रयोर्विचारलाक्षणिकतां दर्शयति—ज्ञापदमिति ॥ शक्तं पदम्। "ज्ञा अवबोधन"[1] इति बोधे शक्तं ज्ञापदम्। सनिपरिष्कृतशरीरम् सनि सना परिष्कृतं संस्कृतं यस्य "धातोः कर्मण[2]" इति सन्नन्तं ज्ञानेच्छापरमपि लाक्षणिकतामुपगतम् प्राप्तं सत् चर्चाम् विचारं वदति।
15 विचारलाक्षणिकमिति यावत्। विचारलाक्षणिकत्वे हेतुमाह—मध्येति ॥ "विजिज्ञासस्वेति"[3] वाक्ये लोटो मध्यमपुरुषैकवचननिर्देशेन। यत् यस्मात् कारणात्। जिज्ञासापदबोध्यं वस्तु अभिजन्यम् पुरतो जनितम्। कृतिनियम्यम् कृतिविषयीभूतं भाति तस्मात्। इच्छायाश्च कृतिविषयत्वाभावादिच्छोत्तरो विचार इह लक्षणीयः। इति भावः ॥६८॥

20 [37b] ति न्ति रि शिरोगतनियोगगिरि लोटः
प्राप्तसमयोऽर्थ इति नो विधिरितीह।
लोकमितिबोधितविचारकरणत्वात्
केवलसनैव रचितं भवति सूत्रम् ॥६९॥

अथ जिज्ञास्यमिति विध्यंशः प्रेरणालक्षणो लोटा द्योत्यमानः कुतो न

निबद्ध इति शङ्कां वारयति—ति त्ति रीति ॥ ति त्ति रि शिरोगतनियोगगिरि
तै त्ति रो यो प नि ष द्गता या नियोगगोः नियोगपरा गीः, नियोगवाणी—
नियोगवचनं "तद् विजिज्ञासस्वे"[1]ति वाक्यम्, तस्मिन् यो लोड् विजिज्ञासस्वेति,
तस्य न विधिरर्थः, किन्तु 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च", [2] "चकाराद् लोट् चे"[3]ति
5 प्राप्तकालोऽर्थः। इति हेतोः। इह शास्त्रे। प्रथमं सूत्रम् "अथात" [4]इत्येवंलक्षणम्।
लोकमितिबोधितविचारकरणत्वात् लोकप्रमाणेनैव बोधितं ज्ञापितं विचारकरणं
विचारसंपादनं विचारानुष्ठानं येषामधिकारिणाम्, तत्त्वात्। ज्ञानार्थं विचार-
कर्तव्यताया लोकमानेन ज्ञातत्वात्। केवलसनैव विध्यंशरहितसनैव जिज्ञासेति
सूत्रं भवति। इत्यन्वयः। एवं च कर्तव्यताया लोकप्राप्तत्वात् तद्बोधकविध्यंशो
10 नापेक्षित इति सूचनाय केवलसना सूत्रं कृतम्। इति भावः ॥६९॥

[38a] देशिकविनेयकथयाऽऽर्थिकतयोक्ते-
र्मध्यपुरुषैकवचनस्य न विवक्षा।
वेदवचसोऽखिलजनाकलनशक्ते-
रित्युपनिबद्धमवतंसितसनेदम् ॥७०॥

15 अथ विध्यंशाविवक्षणवद् मध्यमपुरुषोऽप्यविवक्षित इत्याह—देशि-
केति ॥ वेदवचसः वेदवाक्यस्य। सर्वजनाकलनशक्तेः सर्वजनानधिकारिणः प्रति
साधारण्येन बोधकत्वशक्तेः। देशिकविनेयकथया गुरुशिष्यावलम्बिन्या कथया।
विजिज्ञासस्वेति मध्यमपुरुषैकवचनस्यार्थिकत्वेन प्रासङ्गिकत्वेनोक्तेरन्यथा-
सिद्धत्वेन। विवक्षा ग्राह्यत्वेन न भवति। इति हेतुना। अवतंसितसना शिरो-
20 भूषणीकृतसनैव। सूत्रम् इदमुपनिबद्धं मध्यमपुरुषादिकं परिहृत्य। इत्यर्थः।
तथा च श्रुत्युपात्तमपि मध्यमपुरुषाद्यन्यथासिद्धेरनादरणीयम्। इति भावः ॥७०॥

[38b] ब्रह्मपदमत्र पुनरुत्तरसमस्तं
न्यस्तमपरत्र नहि नेयमिति बुद्ध्वा।
तत्र विषयस्वरसतो ननु विधेयं
25 न्याय्यमधिगन्तुमिति सूत्रकृदभीप्सा ॥७१॥

अथ ब्रह्मपदस्योत्तरसूत्रेषु प्रायेण वाक्यार्थपरिसमाप्तयेऽनुषञ्जनीयत्वात् समस्तस्य छित्त्वा नयने गौरवाद्समस्तमेव ब्रह्म जिज्ञासनीयमिति वा ब्रह्मणो जिज्ञासेति वा निर्देशौचित्यात् समस्तोऽनुचित इति शङ्कां वारयति—ब्रह्मपदमिति ॥ अत्र "अथात"[1] इति सूत्रे ॥ ब्रह्मपदमुत्तरेण उत्तरपदेन जिज्ञासेत्यनेन।
5 समस्तमेव एकपदीभूतमेव। न्यस्तम् स्थापितम्—"ब्रह्मजिज्ञासे"[2]ति। उत्तरसूत्रेष्वाकाङ्क्षाशान्तयेऽनुषञ्जनीयत्वात् कथं समस्तं न्यस्तमिति शङ्कां वारयति —अपरत्रेति ॥ अपरत्र अग्रिमसूत्रेषु। ब्रह्मपदमेव तत्सूत्रगतं न नेयमिति बुद्धा समस्तमेव ब्रह्मपदं कृतमित्यर्थः। अथ कथमुत्तरसूत्रेषु विधेयाकाङ्क्षाशान्तिरिति, अत आह—तत्रेति ॥ तत्र उत्तरसूत्रेषु। विषयवाक्यस्वारस्यादेव—उप-
10 क्रमोपसंहाराद्यनुरोधेन। विधेयं परमेश्वरस्वरूपम्। अधिगन्तुम् न्याय्यम् समुचितं भवति। ननु निश्चयेन। इति सूत्रकृदभीप्सा श्री वे द व्या स तात्पर्यमित्यर्थः। तथाहि

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥"[3]

इत्यधिकरणलक्षणेन विषयवाक्येषु संशयस्यानेककोटिकस्योद्भावने सत्येव
15 पूर्वपक्षसिद्धान्तप्रवृत्तेस्तत्र [39a] संशयानेककोट्युपस्थापनं विषयवाक्योपक्रमोपसंहारमध्यपरामर्शादिषु परस्परविरुद्धार्थनिर्देशाद् लोकप्रसिद्ध्यादिप्रमाणभेदाच्च भवति, न तु प्रथमसूत्रगतब्रह्मपदमनुरुध्यैव पूर्वपक्षः सिद्धान्तश्चोपस्थितानेककोट्यनुरोधेन लिङ्गाभाससल्लिङ्गाभ्यां भवितुमर्हति ; विषयवाक्यस्वाभाव्येनानेककोटिकसंशये समुद्भूते सति तद्विषयगतेनासल्लिङ्गेन पूर्व-
20 पक्षस्य सल्लिङ्गेन सिद्धान्तस्य च प्रवर्तनाय सूत्राणां विरचनेन प्रथमसूत्राद्यनुरोधेन संशयादीनां वक्तुमशक्यत्वात्। एवं च विषयवाक्यस्वाभाव्यादेव कोटिद्वये समुत्थिते सति विषयगतसल्लिङ्गावलम्बेन च सिद्धान्तसूत्रविरचनात् सूत्रकर्तृप्रभृतीनां पूर्वाचार्याणां सूत्राणि विनैव पूर्वपक्षसिद्धान्तादेर्विषयवाक्यस्वाभाव्यादेव सिद्धेः सूत्राणां च मन्दबुद्धीननुसृत्य पूर्वपक्ष-
25 सिद्धान्तहेतूनां विषयादिगतानां प्रकाशनायैव प्रवर्तनाद् हेतुनिर्देशादेव तदनुकूलकोटिलक्षणविधेयं विषयत एव ज्ञातुं शक्यं भवति। नाह सूत्रेषु कोटिभेदसमुत्थापनं दृश्यते ; विषयेषु योग्यतावशेन समुत्थितासु कोटिषु प्रकाशितहेतुवशेन समुचितकोटेरेव तत्रार्थाद् ज्ञातव्यत्वात्, ब्रह्माब्रह्मकोटिद्वयमध्ये ब्रह्मकोटेरेव सर्वत्र सिद्धान्तविषयत्वमिति प्रकृतशास्त्रप्रसिद्ध्याऽपि

झटिति विषयवाक्ये सिद्धान्तकोटिस्मरणसंभवात्। शास्त्रे ब्रह्मकोटि-
प्रसिद्धिश्च विषयवाक्यस्वाभाव्यानुसन्धानाद् मुक्तिपर भि क्षु सू त्र त्वव्यवहा-
राच्च। अत एव श्रुतिक्रमानुरोधेनादावानन्दमयाधिकरणे समुचितेऽपि तदपहाय
प्रथमतो जिज्ञासासूत्रमेवार्थानुरोधेन शास्त्रेऽस्मिन् ब्रह्मकोटिरेव सिद्धान्ते
5 प्रसिद्धेति शास्त्रप्रसिद्धिमुपोद्बलयितुं ब्रह्मपदघटितं विन्यस्तम् ॥७१॥

[39b]　सूत्रमनुरुध्य विषये न विशयादिः
सूत्रकृत एव विषयस्वरसतो हि।
मन्दमतये नयचयः समुदितोऽत्रा-
मन्दतरकोटिरपि मन्तुमथ योग्या ॥७२॥

10 तदेतदाह—सूत्रमिति ॥ विषये विषयवाक्ये। सूत्रमनुरुध्य प्रथमम् "अथातः"[1]
इति सूत्रमनुरुध्य। विशयादिः संशयपूर्वोत्तरपक्षादिः। प्रवर्तनीयो न भवति।
कुतः। किमन्यान्वेषणेन। सूत्रकृत एवातिप्रसिद्ध्या संशयादिः विषयवाक्य-
स्वारस्यादेव किल भवति, न सूत्रानुरोधेन। तद्वदितरस्यापि विषयमाहात्म्यादेव
संशयादिर्भवत्वित्याशयः। अथ सूत्रे विषयवाक्यादेव संशयादिसंभवे
15 सूत्रविरचनमनर्थकमित्याशङ्क्य परिहरति—मन्देति ॥ अत्र अस्मिन्
शास्त्रे। मन्दमतये नयचयः न्यायसमुदायसिद्धान्तार्थनिर्णयः। समुदितः
विशिष्य निरुक्तः। अथ कार्त्स्न्येन। अमन्दतरकोटिमन्दतरकोट्योर्मन्दतरकोटिः
पूर्वपक्षसंबन्धिनी, सिद्धान्तसंबन्धिनी पुनरमन्दतरकोटिः। मन्तुम् विषय-
वाक्यमाहात्म्यादेव निबद्धन्यायानुरोधेन ज्ञातुं योग्या भवति। इत्यर्थः ॥७२॥

20 [40a]　सूत्रमिति वर्णकभिदाऽपि यदि सिद्ध्येत्
सिद्ध्यतु तथाऽपि नियमोऽपि गुणभावात्।
सन्नपि विचारमथवा वदतु वाञ्छां
मुख्यमिह वेदशिरसो विवरणत्वम् ॥७३॥

अथ—

"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम् ।
अस्तोभ्यमनवद्यं च सूत्रं सूत्रविदो विदुः ॥"[1]

इति सूत्राणां विश्वतोमुखत्वस्य गुणत्वात् "अथात"[2] इति सूत्रस्य वर्णक-
5 भेदेन योजनमुचितमेव। तत्र ब्रह्मपदं वेदान्तार्थोपलक्षणं कृत्वा वेदान्तार्थ-
विचारोऽथाधिक्रियत इति, अथ साधनचतुष्टयसंपत्त्यनन्तरं फलसौन्दर्यज्ञानाद्
ब्रह्मणोऽधिकारिण इच्छा भवतीति, तदिच्छया ब्रह्मविचारो भवतीति वा
कुतो न नीयते, श्रुतिव्याख्यारूपमेवेदं सूत्रमिति कोऽयमाग्रह इति प्रश्ने
परोक्तमभ्युपेत्य तत्र कश्चिद्विशेषं दर्शयति—सूत्रमिति ॥ सूत्रमिति हेतो-
10 र्विश्वतोमुखत्वस्य गुणत्वाद् वर्णकभिदाऽपि यदि सिद्ध्येत, सिद्ध्यतु नाम ;
तथाऽपि नियमोऽपि प्रतिज्ञाऽपि गुणभावात् गौणतयोपकल्पत्वेन भवतु। सन्नपि
जिज्ञासेति सन्नपि। विचारं वदतु विचारपरो भवतु—ब्रह्मविचार इति, अथवा
वाञ्छां वदतु ब्रह्मज्ञानेच्छा भवतीति। परन्तु श्रुतिशिरोव्याख्यापरत्वमस्य
सूत्रस्येति योजनमेव मुख्यम्। इतरत् सर्वं योजनं गौणम्। इति भावः ॥७३॥

15 [40b] जीवपरभेदरहिताद्वयसमुत्थ-
व्योममुखजातसचिदन्नमयपूर्वात् ।
चित्किल पृथक्करणतो निगदिताऽऽस्ते
तेन तदभेदविपरीतमतिसिद्धिः ॥७४॥

अथ भाष्ये युष्मदित्यादिना निरूप्यमाणोऽध्यासः सूत्रासङ्गतः ; सूत्रे
20 भ्रमापरिग्रहात्, इत्याशङ्कामुद्दिधीर्षुः प्रकृतसूत्रविषयभूत तै त्ति री यो-
प नि ष त् तात्पर्यविषयतया भ्रमं निरूपयति – जीवेति ॥ तै त्ति री ये
ब्र ह्म व ल्ल्या म्—"तस्माद् वा एतस्मादात्मन आकाशः संभूत"[3] इत्यारभ्य
"स वा एष पुरुषोऽन्नरसमयः। तस्येदमेवे"[4]त्यादिनाऽन्नमयं निरूप्य तद-
नन्तरम् "तस्माद्वा एतस्मादन्नरसमयात्। अन्योऽन्तर आत्मा प्राणमय"[5] इति
25 प्राणमयम्, तदनु "तस्माद्वा एतस्मात् प्राणमयात्। अन्योऽन्तर आत्मा
मनोमय"[6] इति मनोमयम्, ततः पश्चात् "तस्माद्वा एतस्माद् मनोमयात्।
अन्योऽन्तर आत्मा विज्ञानमय"[7] इति विज्ञानमयं चोक्त्वा तदनु—"तस्माद्वा

एतस्माद् विज्ञानमयात्। अन्योऽन्तर आत्मानन्दमय"[1] इत्यानन्दमयं निरूप्य
"असद् वा"[2] इत्यादिनेशं निरूप्य "रसो वै स" [3]इत्यादिनाऽखण्डं स्वरूपं
निरूपितम्। भृ गु व ल्ल्या मपि "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाच-
मिती"[4]ति प्रक्रम्य "अन्नं ब्रह्मे"[5]ति "प्राणो ब्रह्मे"[6]ति "मनो ब्रह्मे"[7]ति
5 "विज्ञानं ब्रह्मे"[8]ति चतुर्ष्वपि पर्वसु ब्रह्मस्वरूपज्ञानपूर्वकं तद् निराकृत्य
"आनन्दो ब्रह्मे"[9]ति निर्णयवाक्येनाखण्डार्थस्वरूपं निरूपितम्। तत्र "सत्यं
ज्ञानमनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्नि"[10] ति पादाभ्यां
क्रमेणेशस्य जीवस्य च कथनात् तेनैव क्रमेण परोक्षापरोक्षयोरीशजीवयोः
परोक्षापरोक्ष[41a]परपदाभ्यां "तस्माद्वा एतस्मादि"[11]ति तदेतद्रूपाभ्यां समा-
10 नाधिकरणाभ्यामखण्डार्थप्रस्तावेन तदवलम्ब्याकाशवायुतेजोजलान्नान्नमयप्रादु-
र्भावस्य क्रमेण कथनाद् जीवपरयोर्जीवेशयोर्यो भेदो लोकप्रसिद्धः, तद्रहितं
यदद्वयं स्वरूपं "तस्माद्वा एतस्मादि"[12]ति सामानाधिकरण्यलभ्यम्,
तस्मादेव मायोपाधिवशतः समुत्थानि क्रमेण यानि व्योममुखानि आकाश-
वाय्वग्निजलान्नानि, तेभ्य एव क्रमेण जातं यदन्नमयं सचित् चिता चैतन्येन
15 समेतम् "स वा एष पुरुषोऽन्नरसमय"[13] इति स्पष्टमखण्डचैतन्यरूपेण निर्देशात्
तादात्म्यलक्षणसम्बन्धेन चैतन्यसंवलितं तदन्नमयं पूर्वमाद्यं यस्य—अन्नमय-
प्राणमयमनोमयविज्ञानमयानन्दमयवर्गस्य, तस्माद् वर्गात् क्रमेण चित् पृथक्करणतो
निगदिता सती आस्ते किल। भ्र ह्म व ल्ल्यां क्रमतोऽन्नमयात् प्राणमयस्य
प्राणमयाद् मनोमयस्य मनोमयाद् विज्ञानमयस्य विज्ञानमयादानन्दमयस्य
20 पृथक्करणेन "असद् वा"[14] इत्यनेनेशनिरूपणपूर्वकं "रसो वै सः",[15] "यतो
वाच"[16] इत्यादिनाऽखण्डरूपेण, भृ गु व ल्ल्या मपि—"अन्नं ब्रह्मे"[17]-
त्यादिभिः पञ्चभिर्वाक्यैरन्नादिचतुष्टयशोधनपूर्वकं मयडंशं सर्वत्र विकार-
परमपहृत्य समष्ट्यंशं परिगृह्य तत्रापि पूर्वपूर्वान्नादिसमष्ट्यंशपरिहार
एव; "आनन्दो ब्रह्मे"[18]ति निरुपाधिकाखण्डस्वरूपनिरूपणात्। तत्र च
25 जडाजडयोरभेदभ्रमे सत्येवं पृथक्कृत्य कथनसार्थक्यात् श्रुतिगतपृथक्करणा-
न्यथानुपपत्त्याऽन्नमयादिचैतन्ययोरभेदावगाहिनी विपरीतमतिः भ्रमः, तस्याः
सिद्धिः श्रुतितात्पर्यत एव सिद्धिर्भवति। इत्यध्यासस्य श्रुतिसंमतत्वात्
तच्छ्रुतिव्याख्यापरे जिज्ञासासूत्रेऽपि भ्रमस्तात्पर्यविषयीभूत एवेति भाष्येऽ-
ध्यासनिरूपणं समुचितमेव। इति भावः ॥७४॥

[41b] अन्नमयपूर्वतनुपर्वसु विवेच्या-
भेदमवमत्य सदखण्डमुपनद्धम् ।
यत्र विषयोऽयमतिमुख्य इति वक्तुं
भ्रान्तिरुचिता तनुगता निगदिताऽऽदौ ॥७५॥

5 अथ भाष्यस्थाध्यासनिरूपणं श्रुतिसूत्राभ्यां सङ्गमयति—अन्नमयेति ॥ अन्नमयपूर्वतनुपर्वसु अन्नमयं पूर्वं यासां ताश्च तास्तनवश्च, ता एव पर्वाणि ग्रन्थिपरिच्छेद्यस्थानानि, तेषु । विवेच्य विवेचनम् पृथक्करणमन्नमयादिभ्य उत्तरोत्तरमन्यदेव भवतीति विभिन्नं कृत्वा । अभेदमवमत्य अन्नमयादीनां चैतन्यान्तानामभेदं सहजसिद्धमभेदभ्रमं निराकृत्य । सत् कालत्रयाबाध्यम-
10 खण्डस्वरूपम् । यत्र उपनिषदि—तै त्ति री याख्यायाम् । उपनद्धम् निरूपितम् । अयं जिज्ञासासूत्रस्यातिमुख्यविषयः । इति वक्तुम् भाष्यस्यादौ समारम्भे । तनुगता पञ्चविधतनुगता—अन्नमयादिपञ्चकोशगता तदभेदावगाहिनी । भ्रान्तिरुचिता प्रकृतसूत्रतद्विषय तै त्ति री य श्रुतिसमुचिता—तत्तात्पर्यविषयीभूता निगदिता भवति । एवं च भाष्ये प्रथमं भ्रान्तिनिरूपणमसङ्गतमिति पूर्वपक्षो निरस्तो
15 वेदितव्यः ॥७५॥

[42a] अत्र तनुमात्रगतविभ्रमनिरुक्ते-
र्विश्वविषयभ्रमनिरूपणनिरिष्ट्या ।
न्यूनमिति भाष्यमिति दोषकलनैषा
दुर्मतिधृताऽपि ननु दूरमपयाता ॥७६॥

20 अथ शोधिताखण्डस्वरूपस्यैव परमपुरुषार्थरूपत्वादखण्डस्य च जीवेशशोधनेनैव सिद्धेर्जीवेशशोधनस्य चाध्यासनिराकरणपूर्वकत्वात् प्रथममध्यासो भाष्ये समाहृत इत्युक्तेर्जीवार्थाध्यासवदीशार्थप्रपञ्चाध्यासानिरूपणाद् न्यूनतेति शङ्कां परिहरति—अत्रेति ॥ अत्र युष्मदस्मदित्यादिभाष्ये । तनुमात्रगतविभ्रमनिरुक्ते पञ्चविधतनुमात्रविषयकाभेदभ्रमकथनात् । जीवसम्बन्ध्य-
25 ध्यासे निरूपितेऽपीशसम्बन्ध्यध्यासस्य विश्वविषयकस्य निरूपणे भाष्य-

**कारस्य** निरिच्छया **निरिच्छयेच्छराहित्येन—विश्वभ्रमानिरूपणेन।** भाष्यमिदं न्यूनम्; **अपेक्षितांशाभावात्,** इत्येषा दोषकलना **दोषोद्भावना।** दुर्मतिभृताऽपि **कुतर्कप्रख्ढमतिना धृताऽपि। पूर्वोक्तया रीत्या** दूरमपयाता **दूरं गता।** अ ह्ल-व ह्लीसमानार्थिकायां भृ गु व ल्ल्या **मन्त्रप्राणमनोविज्ञानशोधनपूर्वकं**
5 **विकाररहितानन्दांशमुपादाय** "आनन्दो ब्रह्मेति व्यजानादि"[1]**ति निर्देशेन त्वम्पदार्थाध्यासस्यैवानर्थकरत्वेन स्पष्टीकृतत्वेन तत्पदार्थपरिशोधने त्वम्पदार्थस्यैवानादरणेन यथाश्रुति भाष्यकारैरध्यासनिरूपणेन निरुक्तदोषप्रादुर्भावायोगात् श्रुतिसूत्रानुरोधेन प्रवृत्तत्वेन भाष्यकर्तुः परतन्त्रत्वात्।** इति दिक् ॥७६॥

[42b] निर्मलतनोर्निखिलतत्त्वनिलयस्य
10 भ्रान्तिरुचिता न परमेशितुरविद्या।
जीवगत एव किल संसरणहेतु-
र्विभ्रम इति श्रुतिशिरोवचनहार्दम् ॥७७॥

**अथ भाष्यकृतः श्रुतिसूत्रपरतन्त्रत्वात केवलजीवाध्यासमात्रनिरूपणं न दोषमावहतीत्युक्तम्। तत्र श्रुतेरेव जीवाध्यासमात्रतात्पर्ये किं कारणमिति**
15 **प्रश्न उत्तरं दर्शयति**—निर्मलेति ॥ परमेशितुः **परमेश्वरस्य।** **निखिलतत्त्वानां भूरादीनां निलयस्य आश्रयीभूतस्य।** निर्मलतनोः **अविद्यादिकल्मषरहितस्वरूपस्य** "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तप"[2] **इत्याम्नातस्य।** भ्रान्तिरविद्या **अविद्येति व्यवह्रियमाणा भ्रान्तिः।** नोचिता **दोषपारवश्याभावात्।** जीवगतो विभ्रम एव **देहेन्द्रियादितादात्म्याभिमान एव।** संसरणहेतु**र्जीवस्येति**
20 **वेदान्तवचनतात्पर्यम्।** इत्यर्थः ॥७७॥

भ्रान्तिमत एव ननु मोक्षणमपेक्ष्यं
वीक्ष्य जगदीशमपहाय विपरीतम्।
क्लेशमपनेतुमखिलं श्रुतिशिरोवाग्
जीवपरिशोधनमभिश्रयति भूयः ॥७८॥

ईशं परिहृत्य जीवपरिग्रहफलं दर्शयति—भ्रान्तिमत एवेति ॥ ईशस्य भ्रान्तिमत्त्वाभावात् क्लेशादेरभावेन नित्यमुक्तस्य मोक्षणांशवैयर्थ्याद् भ्रान्तिमत एव देहाद्यभिमानवत एव जीववर्गस्य संसाराद् मोक्षणमपेक्ष्यम् वीक्ष्य आलोच्य । विपरीतम् जीवविपरीतं भ्रान्त्यादिदोषरहितं जगदीशं नित्यमुक्तत्वे-
5 नामोचनीयम् अपहाय परिहृत्य । जीवस्य भ्रमादिसकलदोषकलितस्य संसाराद् मोचनीयस्य क्लेशं सर्वमप्यपनेतुम् दूरीकर्तुम् । वेदान्तवाग् भ्रमनिवर्तनाय जीवपरिशोधनम् जीवस्य परितः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयतः, शोधनम् त्वग्विमोचनम् । भूयः मुहुः—ब्र ह्म व ल्ल्यां भृ गु व ल्ल्यां च । अभिश्रयति आश्रयति । यो मोच्यस्तदीय एव संसरणहेतु-
10 र्देहतादात्म्यादिलक्षणस्त्रिविधपरिच्छेदादिलक्षणो भ्रमो मुख्यतया निरूपणीयो भवति । इत्याशयः ॥७८॥

[43a] अ क्ष च र णे न मुनिनाऽपि ननु मिथ्या-
ज्ञानमुदितश्रुतिभवं मनसि भावम् ।
स्थापितवता भवति दुःखमुखसूत्रे
15 साधु निहितं निखिलसंसृतिनिदानम् ॥७९॥

एवमेव तै त्ति री य श्रुतिभावं भगवान् गौ त मः सूत्रेण सङ्गृह्णाति स्मेत्याह—अ क्ष च र णे नेति ॥ अ क्ष च र णे न मुनिना गौ त मे ना पि । उदितश्रुतौ तै त्ति री यो प नि ष दि भवम् संपन्नं भावम्—तात्पर्यं पूर्वश्लोकोपात्तम् । मनसि स्थापितवता । दुःखमुखसूत्रे "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरा-
20 पायादपवर्गः"[1] इत्येवंलक्षणे । निखिलसंसृतिनिदानं मिथ्याज्ञानम् जीवसंबन्धिदेहादितादात्म्याद्यवगाहि भ्रमलक्षणम् । साधु सम्यग् । निहितं भवति । इत्यन्वयः । मिथ्याज्ञानम् जीवसंबन्धिभ्रमविशेषो नात्मन्यात्माभिमानादिलक्षणः । दोषाः "प्रवर्तनालक्षणा दोषाः"[2] इति लक्षिताः । प्रवृत्तिः "वाग्बुद्धिशरीरारम्भः"[3] इति लक्षिता । जन्मदुःखे प्रसिद्धे । इति सूत्रयोजना । तथा
25 चास्मिन् सूत्रे भ्रमनिरूपणं समुचितम् । इति भावः ॥७९॥

[43b] श्रौतशिखराकलितजीवपरवाचां
तद्विवरणाचरमयोगवचसश्च ।

विभ्रमविशेषपरभावमभिजान-
न्नाक्षिपति युष्मदिति देशिकवतंसः ॥८०॥

अथ जिज्ञासासूत्रविषयभूत तै त्ति री य श्रुतेर्जीवसंबन्धिभ्रमविशेषे तात्पर्यमुक्तरीत्याऽवकलय्य, विषयवाक्यसूचितभ्रमस्तावदुक्तप्राय एवेति सिद्ध-
5 वत्कृत्य, स भ्रमो न घटत इत्याक्षेपप्रवृत्तिरिति युष्मदिति भाष्यमवतारयति—श्रौतेति ॥ श्रौतशिखरेषु उपनिषत्सु आकलिताः परिगृहीता याः जीवपरा वाचः अन्नप्राणमनोविज्ञानानन्दपरा वाचः, तासाम्। तद्विवरणाचरमयोगवचसश्च तासां विवरणरूपो योऽचरमयोगः प्रथमसूत्रम्—"अथात"[1] इति, तदीयवचसश्च। विभ्रमविशेषपरभावम् विभ्रमविशेषः काणोऽहम्, गौरोऽहम्, ब्राह्मणोऽहम्, ममेदं
10 स्वमित्यादिलक्षणः, तत्परभावम् तत्तात्पर्यकं भावम्—अभिप्रायम्। अभिजानन् सर्वतः सर्वप्रकारेणापि जानन् सन्। देशिकवतंसः आचार्यवर्यः श्री श ङ्क रा-भिख्यः। युष्मदित्यादिग्रन्थेन श्रुतिसूचितोऽध्यासो न घटत इत्याक्षिपति। इत्यर्थः। एवं च ग्रन्थादावध्यासाक्षेपः सङ्गत एव। इति भावः ॥८०॥

[44a] ति त्ति रि शिरोवचसि शुद्धिरुपनद्धा
15 पञ्चतनुपर्वसु पृथक् पृथगितीह।
अङ्गविधयाऽकुरुत युष्मदितिवाचा
साहजिकविभ्रमनिरूपणमार्यः ॥८१॥

अथाक्षिप्यमाणाध्यासं सङ्गमयन् लोकव्यवहार इत्यन्तभाष्यस्य मुख्यार्थं स्पष्टयति—ति त्ति रीति ॥ ति त्ति रि शिरोवचसि "ब्रह्मविदाप्नोति"[2] "भृ गु र्वै
20 वारुणिरि"[3]त्यादौ। पृथक् पृथक् पञ्चतनुपर्वसु अन्नमयादिषु। शुद्धिरुपनद्धा "तस्माद्वा एतस्मादन्नरसमयात्"[4] "अन्नं ब्रह्मेति व्यजानादि"[5]त्यादौ विवेचनं निबद्धम्। इति हेतोः। इह भाष्यादौ। साहजिकविभ्रमनिरूपणम् स्वाभाविक-देहतादात्म्याद्यध्यासस्य स्वल्पं निरूपणम्। आर्यः भगवान् श्री श ङ्क रः। अङ्गविधया परिशोधनाङ्गत्वेन। अकुरुत अकरोत्। तथाच ग्रन्थादावध्यास-
25 निरूपणं सङ्गतमेव। इति भावः ॥८१॥

[44b] ओड्रकुसुमे स्फटिकवत् तनुषु सक्तेः
संनिधिरुपाधिनियतिश्चिति यतस्तत् ।
भ्रान्तिरियमैक्यविषया सहजसिद्धा
युक्तिभिरियं सुमतिनाऽपहरणीया ॥८२॥

5 अथाहं गौरो ब्राह्मण इत्यादिभ्रमं सोपाधिकमुपपादयन्नुपाधिसंनिधानस्य यावदुपाधिभावित्वाद् युक्त्यैव स निराकरणीयो भवति, न तु दिङ्मोहशुक्तिरजतादिभ्रमवदुपदेशादिजनितविशेषदर्शनसमेतदिक्शुक्त्यादिसाक्षात्कारनिवर्तनीय इति दर्शयति—ओड्रकुसुम इति ॥ ओड्रकुसुमे स्फटिकवत् स्फटिकस्येव । तनुषु पञ्चविधास्वन्नमयादिलक्षणासु । चितोऽखण्डलक्षणायाः । सक्तेः सम्बन्धात् ।
10 उपाधिनियतिश्चिति यः संनिधिः । यतः यस्मात् कारणात् । तत् तस्मात् । भ्रान्तत्वज्ञानं नियतोपाधिसांनिध्यात् । इयम् सर्वलोकानुभवसिद्धा । ऐक्यविषया भ्रान्तिः सहजसिद्धा सुमतिना युक्तिभिरपहरणीया सोपाधिकभ्रमो युक्तिभिर्निवर्तनीयो भवतीत्यर्थः । एवं च जीवस्याविद्याप्रतिरुद्धज्ञानादिरूपस्य जडकल्पस्येन्द्रियवृत्त्याऽविद्यायास्तरतमभावेन तिरस्करणे वृत्तौ तरतमभावेन
15 चैतन्यस्फुरणेन लोकव्यवहार इति जडाजडभेदास्फुरणे तदभेदावगाहिन्यां वृत्तौ चैतन्यस्फुरणेऽनादिभवभववासनाधीने सति साहजिक एव भ्रमः सर्वेषां क्रमेणाभ्यासाद् युक्त्या च निवर्तनीयः । इति भावः ॥८२॥

[45a] विभ्रमपदं न विरुद्धगुणभाजी
प्रत्यगिति चित्सुखमितीतरदितीह ।
20 द्योततिमिरे इव परस्परविरुद्धे
तच्छ्रुतिषु विभ्रमकथा कथमिवाभूत् ॥८३॥

अथ युष्मदस्मदित्याद्याक्षेपभाष्यभावं दर्शयति—विभ्रमेति ॥ युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरित्यत्रास्मत्पदेन प्रत्यक्त्वम्—"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति"[1] "भूमैव सुखमि"[2]त्यादिनाऽ-

स्मत्पदार्थस्य सर्वोच्चतया परमपुरुषार्थरूपत्वेन सुखरूपत्वं च गमितम्। विषयीत्यनेन चिद्रूपत्वं च स्फोरितम्। युष्मदित्यनेन प्रत्यग्भिन्नस्य पराक्त्वं चापुरुषार्थरूपासुखरूपत्वं च। विषय इत्यनेन जडत्वं च ज्ञापितम्। एवं चात्मानात्मवस्तुनी परस्परविरुद्धगुणभाजी तमःप्रकाशयोरिव स्वरूपतोऽपि
5 विरुद्धे कथं परस्परतादात्म्यादिविषयीभूते भवतः, तदेतदाह—द्योततिमिरे इव परस्परविरुद्धे इति। स्वरूपतः प्रत्यग् आत्मेति। चित्सुखमिति ज्ञानस्वरूपं सुखमिति। इतरदिति परागिति, जडमिति, असुखमिति। विरुद्धगुणभाजी आत्मानात्मवस्तुनी। विभ्रमपदम् परस्परतादात्म्याध्यासस्य परस्परधर्माध्यासस्य च पदम् न भवत एव। एवं च तै त्ति री य श्रुतिषु पञ्चकोशशोधने प्रस्तुते
10 सति शोधनप्रतियोगिभूताध्यासकथा कथमिव केन प्रकारेणेव। अभूत। इत्यर्थः। तथाच कथमध्यासनिरूपणं कर्तुं शक्यमात्मानात्मनोः। इति भावः ॥८३॥

[45b] तैजसकरप्रसरतो मलविलोपाद्
वस्तुगतरूपपरिणाममुपयाति।
15 मानवजनादिनयनांशुरतथा चेच्
श्यामलतया परिणतिं तिमिरसंज्ञाम् ॥८४॥

अथ तमःप्रकाशवद् विरुद्धस्वभावयोरिति तादात्म्यभ्रमासंभवे दृष्टान्तः। तत्र तमःप्रकाशवद् विरुद्धस्वभावयोरित्युक्तमयुक्तम्; कौशिकादीनामपि सावित्रप्रकाशादौ तमस्त्वारोपदर्शनादत्यन्तविरोधादर्शनात्, इत्याक्षेपं परिहर्तुं तमः-
20 प्रकाशयोः स्वरूपं निरूपयितुमुपक्रमते—तैजसेत्यादिना॥ तत्र चाक्षुषप्रभामुपादाय तमःस्वरूपं प्रकाशस्वरूपं च निरूपयति—तैजसकरेति॥ अत्रेयं प्रक्रिया—नयनरश्मयः स्वभावत एव सकलवस्तुतदाकृतितद्रूपपरिणामसमर्था भवन्ति। परन्तु मानुषकाकादिषु शुक्रशोणितादिपरिणामविशेषेण मललक्षणेन गोलकादिस्थितेन काचकामलादिनेव प्रतिबद्धशक्तिकाः सन्तः स्वत
25 एव विषयाकृतिरूपाद्याकारपरिणामं ग्रहीतुमसमर्था भवन्ति। बिडालमूषकादीनां तु शुक्रशोणितपरिणामो मललक्षणो नास्त्येव। अत एव चक्षुः-

प्रभाया अनावृतत्वाद् दिनरात्र्योरेकरूपेणैव सकलपदार्थतदाकारतद्रूपपरिणामा भवन्ति। कौशिकादीनान्तु विडालादिवदेव बाह्यतेजोऽनुग्रहं विनैव चक्षुःप्रभा [46a]स्वसामर्थ्यादेव पदार्थाकारेण परिणता भवति। परन्तु शुक्रशोणित-परिणामभेदेन सम्बन्धात् सावित्रादितेजोऽभिभूतशक्तिमती। तत्र च स्वतः
5 शुद्धाया अपि नयनप्रभाया विलक्षणशुक्रशोणितपरिणामादियोगात् सावित्रादि-प्रकाश एव मलत्वेन पर्यवस्यति। तेन दिने कौशिका अन्धाः, रात्रावनन्धा इति विवेकः। तदेतदाह—तैजसेति॥ मानवजनादिनयनांशुः मनुष्यजन-तित्तिरिकाकादिनयनकरः। तैजसकरप्रसरतः तैजसाः तेजस्सम्बन्धिनः सवितृ-दीपादिसम्बन्धिनः, कराः किरणाः, तेषां प्रसारेण विस्तारीभावनेन। मल-
10 विलोपात् शुक्रशोणितादिपरिणामविशेषलक्षणमलस्याभिभवात्। वस्तुनः पुरोवर्त्यादिपदार्थस्य, रूपम् आकृतिर्गुणश्च, तदाकारपरिणामम्। उपयाति प्राप्नोति। अतथा चेत् तैजसकरप्रसरेण मलापाकरणवान् न भवति चेदंशुः, तर्हि श्यामलतया परिणतिं तिमिरसंज्ञाम् अन्धकार इति नामवतीं प्राप्नोति। तथाच मानवादिचक्षुःप्रभा मलेन नित्यसम्बद्धा सवित्राद्यालोकानुग्रहे
15 निर्मला सती वस्तुग्रहणसमर्था। सावित्रादितेजोऽनुग्रहेण मलापनयनाभावे स्वभावतो विलक्षणनीलपरिणामवती तदन्तर्गतान्तःकरणवृत्तिप्रतिफलित-चैतन्यावभास्या तम इति व्यवह्रियमाणा भवति। इति भावः ॥८४॥

[46b] कौशिकदृशः परिणतिस्तिमिररूपा
चण्डकिरणे समुदितेऽभिहतशक्तेः।
20 द्योतविरहे स्फुरितसाहजिकशक्ते-
र्वस्तुगतरूपसममेव परिणामः ॥८५॥

अथ दिवान्धादीनां मानुषादिविपरीतमेव प्रकाशतमोव्यवस्थां दर्शयति—कौशिकेति॥ चण्डकिरणे सवितरि। समुदिते सति। सावित्रतेजसा अभिहत-शक्तेः तिरस्कृतसामर्थ्यस्य। अभिभूतशक्तेरिति यावत्। ईदृश्याः कौशिक-
25 दृशः दिवान्धदृष्टेः। तिमिररूपा विलक्षणनीलपदार्थात्मिका। परिणतिर्भवति। द्योतविरहे मलरूपाभिभावकप्रकाशविरहे सति। स्फुरितसाहजिकशक्तेः प्रति-

बन्धकाभावेन सुस्फुटस्वीयशक्तिमत्याः दृशः। पुरोवर्तिवस्तुगतं यद्रूपम् आकृतिगुणलक्षणम्, तत्सममेव तत्तुल्यमेव परिणामो भवति, न तद्विरुद्धो भवतीत्यर्थः। तथाच मानुषादिविपरीतः कौशिकवल्गुप्रभृतीनां तमःप्रकाश-व्यवहारः। इति भावः ॥८५॥

5 [47a] मानवमुखाक्षिकिरणे मलनिवृत्ति-
स्तैजसमयूखबहलत्वविकलत्वैः।
न्यूनविधयाऽधिकतया च भवति द्राक्
कौशिकदृशोऽभिहतिरप्युदितरीत्या ॥८६॥

अथ शुद्धतमःपरिणामः प्रकाशपरिणामश्च चक्षुःप्रभायाः पृथगभिहितः।
10 संप्रति मन्दान्धकारादिप्रदेशे प्रकाशतमसोरुभयोरपि युगपदेकप्रदेशावच्छेदेन दर्शयितुं तत्र निमित्तं विशदयति—मानवेति॥ मानवमुखाक्षिकिरणे मनुष्य-प्रभृतिनयनांशौ। तैजसमयूखबहलत्वविकलत्वैः सावित्रादितेजःसम्बन्धिकिरण-बाहुल्याबाहुल्यतः। न्यूनविधया स्वल्पप्रकारेण। अधिकविधया बहुप्रकारेण मलनि-वृत्तिर्भवति। द्राक् सत्वरम्। अयमाशयः—यथा यथा तेजोऽधिकम्, तथा
15 तथा चक्षुःप्रभायां मलनिवृत्त्या प्रकाशपरिणामो भवति। एवं च मन्दान्ध-कारादिस्थले प्रकाशाल्पत्वेनाल्पमलनिवृत्त्या प्रकाशतमःपरिणामौ युगपदेक-प्रदेशावच्छेदेन भवतः; मलांशेन तमःपरिणामस्य मलनिवृत्त्यंशेन प्रकाश-परिणामस्य चोचितत्वात्। अत एव मन्दमन्दतरगाढभेदेन तमःपरिणामः सर्वजनीनो भवति। मनुष्यादिस्थले मन्दान्धकारादिस्वरूपं निरूप्य कौशिकादि-
20 स्थले मानुषव्यत्ययेन मन्दान्धकारादि निरूपयति—कौशिकेति॥ दिवान्धादि-दृष्टेस्तेजसो बहुलत्वेऽधिकाभिहतिः, स्वल्पाभिहतिर्भवति। एवं चाधिका-भिहतौ गाढतमःपरिणामः, अल्पाभिहतौ मन्दमन्दतरमन्दतमतमःपरिणामः। तथैवाल्पाभिहतावधिकतरप्रकाशपरिणामः, अधिकाभिहतावत्यल्पप्रकाश-परिणामः। इति विवेकः ॥८६॥

25 [47b] दूरतरदेशमुपयाति नयनांशौ
चण्डकिरणे भवति चण्डकरभाजि।

नाखिलमलापहरणं गिरिषु दूरे
तेन परिभान्ति किल नीलवपुषा ते ॥८७॥

अथ चाक्षुषतेजसां सावित्रप्रकाशसंपर्केण मलापहरणात् प्रकाशाभिव्यक्त्या पुरोवर्त्यादिपदार्थतद्गतरूपाकृत्यादिपरिणामसामर्थ्यमुपपादितम्। संप्रति
5 तादृशप्रकाशसम्बन्धे सत्यपि दूरे चाक्षुषतेजसो न सर्वमलापहरणम्, न वा रूपसकलावयवसंस्थानानुरूपपरिणामसामर्थ्यम्, किन्तु तमःपरिणामस्थल इव पुरोवर्तिपदार्थावलम्बे सत्यपि सामान्याकारपरिणामे सत्यपि न रूपविशेषावयवसंस्थानविशेषपरिणामसामर्थ्यं भवति। नीलरूपलक्षणपरिणामसामर्थ्यं त्वव्याहतमनुभवानुरोधादभ्युपेयमिति मनसि निधायाह—दूरेति॥
10 नयनांशौ चाक्षुषतेजसि। दूरतरदेशमुपयाति सति गतवति सति। चण्डकिरणे सवितरि। चण्डकरभाज्यपि मध्याह्नादिकालभेदेन तीक्ष्णकरयोगवत्यपि। भवति सति। दूरे विद्यमानेषु गिरिषु दूरगिरिप्रदेशावच्छेदेन सर्वमलापहरणं नो खलु भवति। तेन सर्वमलापहरणाभावेन—संस्थानविशेषरूपविशेषपरिणामाभावाद् मलानपहरणेन। ते पर्वताः नीलवपुषो भान्ति। तथाच पर्वतगतसामान्याकृत्या चाक्षुषतेजसो नीलरूपपरिणामो जायते। इत्यर्थः ॥८७॥
15

[48a] अन्तिकविभेदवशतोऽयननिषक्तं
व्यञ्जयति चक्षुरुचितं स्वकरशक्तिम्।
आकृतिविशेषपरिशीलनसमर्था-
मायतिषु नैवमभिरञ्जयदपि स्वम् ॥८८॥

20 अथ दूरे पर्वतादिषु नायनरश्मिसर्वमलानपहरणप्रकारं दर्शयति—अन्तिकेति॥ अयननिषक्तम् अयने तारकारूपस्थाने निषक्तम् सम्बद्धम्। चक्षुः कर्तृ। स्वकरशक्तिम् स्वकराः मयूखाः, तेषां शक्तिः प्रकाशनसामर्थ्यम्। निरवशेषमाकृतिविशेषपरिशीलनसमर्थाम् विषयाकारपरिणामसमर्थाम्। अन्तिकविभेदवशतः समीपभेदानां व्यवहिताव्यवहितभेदभिन्नानामधीनत्वेन। व्यञ्जयति अभि-
25 व्यञ्जयति। आयतिषु दैर्घ्यविभेदेषु। स्वम् स्वीयं स्वरूपम्। अभिरञ्जयदपि

सामान्यरूपेण धर्मिस्वरूपव्यञ्जकमपि निरवशेषं विषयाकृतिरूपपरिणामसमर्थां शक्तिं न व्यञ्जयति। तथाचातिदूरे सावित्राद्यालोकप्राबल्येऽपि चक्षुषो गोलस्थस्य संनिहितस्वीयकरगतप्रकाशकशक्तिव्यञ्जकत्वेऽप्याब्रह्माण्डं स्थूलतत्तद्विषयग्रहणसमर्थस्वांशव्यञ्जकत्वेऽपि स्थूलतेजोभिन्नतत्तद्विषयगताकृतिरूपपरिणामसामर्थ्यं न व्यञ्जयतीति मलानपहरणाद् नीलरूपेण पर्वतादीनां भानं भवेदेव। इति भावः ॥८८॥

[48b] भास्वरसितेन परिलिप्तमितरच्चे-
त्यस्ति विषयद्विविधता तदरुणादि।
भाति न तथा स्फुटतयेति ननु तर्क्यः
श्यामलतयाऽक्षिकिरणस्य परिणामः ॥८९॥

अथोक्तमेवार्थं विशदयति—भास्वरसितेनेति ॥ भास्वरसितेन शुक्लभास्वररूपवता तेजसा। परिलिप्तमलिप्तं चेति विषयद्वैविध्यमस्ति। तत् तत्र। चूर्णलिप्तभित्तेश्चूर्णश्वेतरूपग्रहणद्वारा ग्रहणेऽपि चूर्णलेपरहितभित्तेः स्वरूपेण ग्रहणात् प्रकाशालिप्तपदार्थानां प्रकाशोचितश्वेतवस्तुग्रहणपूर्वकं घटादिग्रहणवत् प्रकाशालिप्तारुणादिपदार्थानामरुणादिरूपद्वारकग्रहणस्यादर्शनादरुणादि स्पष्टतया तथा न भात्येव। इति हेतोर्मलानपहरणाद्। अक्षिकिरणस्य घटादिलेपरूपस्य। श्यामलतया परिणामस्तर्क्यो ननु भवतीत्यर्थः। तथाच पर्वतादिलेपरूपायाश्चक्षुःप्रभाया मलानपाकरणस्योक्तविधया सिद्धत्वात् श्यामात्मना भानमुचितम्। इति भावः ॥८९॥

[49a] दूरतरपर्वतमनेकतरुगुल्म-
प्रस्तरविबन्धुरतरं सकललोकः।
आयतिसमुन्नतिविभेदमपि वेत्ति
श्यामलतया मसृणताकलितयैव ॥९०॥

उक्तमुदाहरणेनानुभवसिद्धेन दर्शयति—दूरतरेति ॥ अनेकतरुगुल्मप्रस्तरविबन्धुरतरम् । अनेके तरवो गुल्माः प्रस्तराश्च, तैर्विबन्धुरतरम् अतिशयेन निम्नोन्नतम् । ईदृशम् दूरतरपर्वतम् अतिदूरस्थितं शिखरिणम् । आयतिसमुन्नतिविभेदमपि दैर्घ्यौन्नत्यादिभेदविशिष्टमतिस्थूलमपि । सामान्यांशेन पर्वतस्वरूपादिभानेऽपि
5 मसृणताकलितया चिक्कणतोपसंसृष्ट्या । श्यामलतया श्यामत्वप्रकारेण । सर्वलोको वेत्ति जानाति । तस्माद् दूरतरे देशे विषये स्थूलतरे तेजोभिन्ने घनीभूतचक्षुःप्रभा विषयं सामान्याकारेण स्फोरयन्ती स्वयं पर्वतादिद्रव्यलेपरूपा नीलात्मना परिणममाना भवति । इत्यर्थः ॥६०॥

[49b] रूपमवदातमिह भास्वरमुपेयं
10 मानवमुखेक्षणमलाभिभवदक्षम् ।
स्वातिशयभेदवशतोऽतिशयभेदा-
धाय्यनवदातमवदातविपरीतम् ॥६१॥

अथ यथा यथा भास्वरशुक्लं सातिशयम्, तथा तथा नयनकरमलापहासो भवति। यथा यथा मलापहासः, तथा तथा विषयगतरूपसंस्थानांशपरिणामो
15 भवति नयनरश्मौ । एवं नीलभास्वरं यथा यथा सातिशयम्, तथा तथा मलानपहासो मलपोषश्च । यथा यथा च मलम्, तथा तथा विषयगताकृतिरूपाद्याकारेण परिणामो नीलपरिणामश्च सातिशय इति हृदि निधायाह—रूपमिति ॥ भास्वरम् प्रकाशात्मकम् । अवदातम् शुक्लम् । मानवादिनयनमलापहरणे दक्षम् । उपेयम् अङ्गीकार्यम् । किञ्च भास्वरशुक्लं स्वोत्कर्षवशेन
20 मलापहरणातिशयभेदाधायि चाभ्युपेयं भवति । एवमनवदातं नीलमवदातभास्वररूपस्य विपरीतमुन्नेयम् । यथा यथा नीलम्, तथा तथा नयनमलपरिपोषणमेव भवतीति वेदितव्यम् । इति भावः ॥६१॥

[50a] सौधसदनेऽल्पतरतेजसि समिद्धः
पञ्चजनपूर्वकशरीरदृगभीशुः ।

भौतिकविकारपरिमेलनविभेदै-
र्नीलमणिनिर्मितगृहे तु विपरीतम् ॥९२॥

उक्तमेवार्थमुदाहरणमुखेन विशदयति—सौधेति ॥ सौधसदने चूर्णादि-
परिष्कृते सदने । अल्पतरतेजसि स्वल्पप्रकाशवत्यपि । पञ्चजनपूर्वकशरीरिदृगभीशुः
5 मानुषादिप्राणिवर्गनयनांशुः । समिद्धः मलनिवृत्त्या प्रदीप्तः—विषयग्रहणसमर्थो
भवति । सौधे पार्थिवगृहे तेजस्यल्पेऽपि गृहान्तराद् विशिष्य विषयभावे
हेतुमाह—तेजसीति ॥ सौधगृहस्थादौ तैजसविकाराणामाधिक्येन सम्बन्धा-
दिभिरल्पेऽपि बाह्यतेजसि विषयग्रहणं भवतीत्यर्थः । असौधे गृहे शुक्ल-
भास्वररूपसमृद्ध्यभावाद् नयनतेजोगतमालिन्यमल्पेन तेजसा न निवर्तत इति
10 दर्शयति—नीलेति ॥ नीलमणिना निर्मिते गृहे तु । नीलमणिरित्युपलक्षणं
नीलपीतादिमात्रस्य । विपरीतम् सौधगृहाद् विपरीतं बोध्यम् । शुक्लभास्वरा-
नाधिक्येनाल्पतेजसा न निर्वाहः, मलापनयने तीव्रं तेज एव तत्र यथायोग-
मपेक्षितम् । इति भावः ॥९२॥

[50b] सातपमनातपमनेकविधभेदं
15 देशमभिसंश्रितवतो नयनरश्मेः ।
वस्त्वपघनाकृतिकरूपरिणामाः
सुस्फुटसमास्फुटसितासितविशेषैः ॥९३॥

अथैवद्रातपमध्यविधातपघनातपनिरातपदेशादिभेदेन नयनप्रभागतरिणाम-
भेदान् दर्शयति—सातपमिति ॥ सातपं देशमनातपं देशं चानेकविधभेदम्
आतपानातपतारतम्येनानेकप्रकारकृतविशेषम् । अभिसंश्रितवतो नयनरश्मेः चाक्षु-
20 षतेजसः । वस्त्वपघनाकृतिकरूपपरिणामाः वस्तुनो घटादेरपघनानाम् अवयवानामा-
कृतीनां संस्थानविशेषाणां च श्वेतादीनां परिणामाश्चाक्षुषतेजःसम्बन्धिनः ।
सुस्फुटाः अतिस्पष्टाः, समाः साधारणाः, अस्फुटाः सामान्यरूपाः, सिताः
श्वेताः, असिताः सितेतराश्च भवन्ति । यथा यथा तेजो न्यूनम्, तथा तथा
श्यामपरिणामो भवति । इति भावः ॥९३॥

तैजसकरप्रसरतद्विरहभेदै-
रीषदिव गाढमिव गाढतरकल्पम् ।
श्यामलमथो तिमिरमन्धतमसं चे-
त्यादिपरिणाममुपयाति नयनांशुः ॥९४॥

5 **पूर्वश्लोकोक्तमेवार्थं स्पष्टयति**—तैजसेति ॥ तैजसकरप्रसरतद्विरहभेदैः **तेजः-सम्बन्धिकिरणानां परस्परविस्तारस्य भेदैः विशेषैः तैजसकरप्रसरविरहभेदैः —ईषदून्यूनाधिकन्यूनाधिकाधिकतरत्वादिभेदैः** । नयनांशुः श्यामलमीषदिव गाढमिव **ईषदुन्यूनगाढतरात्मकं तेजसो बहुतराभावे** तिमिरम् **सर्वथा तेजोविरहेऽ**न्धतमसं चेत्यादि**प्रकारेण** परिणाममुपयाति **प्राप्नोति** । **इत्यर्थः** ॥६४॥

10 [51a] मर्त्यविपरीतनयनांशुपरिणामाः
केचन भवन्ति किल पेचकपुरोगाः ।
आखुपृषदंशकमुखास्तु समनेला-
स्तेन तिमिरं नयनरश्मिपरिणामः ॥९५॥

**अथ मनुष्यादीनां प्रकाशान्धकारादिव्यवस्थामुपपाद्य कौशिकदीनां**
15 **मनुष्यादिविपरीता व्यवस्था, मार्जारादीनान्तु नान्धकारप्रकाशव्यवस्थेति दर्शयति**—मर्त्येति ॥ पेचकपुरोगाः **पेचकः पुरोगः अग्रेसरः—प्रथमो येषां ते कौशिकवल्गवादयः** । केचन **प्राणिनः** । मर्त्यविपरीतनयनांशुपरिणामाः **मनुष्य-विपरीततया चक्षुःपरिणामवन्तो** भवन्ति । **तथाच मनुष्यान्धकारे कौशि-कानां प्रकाशः, मनुष्यादिप्रकाशे कौशिकानामन्धकार इति विभागः । तथाच**
20 **कौशिकादयः स्वत एव निर्मलदृष्टयो विनाऽपि प्रकाशं विषयग्राहकाश्चक्षुः-प्रकाशेनैव, आदित्यादिप्रकाशे तु कुण्ठीभवनहेतुभूतमलयुताः । अत एव कुण्ठीभूतविषयग्रहणशक्तिकनयनप्रभाश्चक्षुर्भापरिणामविशेषलक्षणतमोभाजो भवन्ति** । आखुपृषदंशकमुखास्तु **प्राणिनः मूषकविडालादिलक्षणाः मानुषादि-पेचकादिविलक्षणाः । प्रकाशाप्रकाशयोः** समनेलाः **सर्वदा विषयग्रहणसमर्थ-**

शक्तियुतकरनेत्रयुता भवन्ति, तेषां नान्धकारप्रकाशव्यवस्था। तेनान्धकारो नयनकिरणपरिणाम एव प्रतिजीवं भिद्यते। इति गोलार्थः ॥९५॥

[51b] नायनकरे परिणते हृदयवृत्ति-
स्तत्र विषयः स्फुरति चित्स्फुरणयोगात्।
5 चाक्षुषकरेषु विषयो यदि नचैश-
स्तर्हि परिभाति ननु जीवकृत एव ॥९६॥

अथ नयनपरिणामानामन्धकारघटादिविषयादिलक्षणानां सद्वारं ग्राहकं दर्शयन् ग्राह्यविषयव्यवस्थां दर्शयति—नायनेति ॥ चाक्षुषकरे प्रकाशभेदेन तत्तत्प्राण्यनुरोधेन विषयाकारेण परिणते। हृदयवृत्तिः हृदयस्यान्तःकरणस्य 10 चाक्षुषवृत्त्यनुरोधेन वृत्तिर्भवति। तत्र अन्तःकरणवृत्तौ। चित्स्फुरणयोगात् चैतन्य-स्फुरणघटनातः। विषयः कश्चित् समुचितः स्फुरति। तत्र चाक्षुषकरेषु यदीशसृष्टः पदार्थो विषयः, तर्हि स ईशरूपपदार्थः परम्परया चिद्भास्यो भवति। यदैशः पदार्थो न विषयः, तर्हि जीवकृत एव पदार्थ ईशपदार्थ-विनिर्मुक्तश्चक्षुःप्रभादिपरिणामलक्षणोऽन्धकारादिः स एव। ननु निश्चयेन। 15 परिभाति चिद्योगात् प्रकाशते, नैशः। इत्यर्थः ॥९६॥

[52a] ईक्षणघृणेरसविधे त्वसितवृत्ति-
र्भास्वरसिते महति भास्वरसितत्वम्।
मध्यविषये विषयनीलपरिणामो
मध्यविध एव निखिलानुभवगम्यः ॥९७॥

20 अथ चक्षुःप्रभाणां दूरे विषयभेदेन वृत्तिभेदं दर्शयन् समीपासमीपमध्य-देशेऽपि सकलविषयसाधारण्येन वृत्तिविशेषं दर्शयति—ईक्षणेति ॥ ईक्षणघृणे-रसविधे दूरे पर्वतादौ। असितवृत्तिः श्यामा वृत्तिर्भवति। महति दूरस्थे। भास्वरसिते तेजसि भास्वरसितत्वमेव भवति, तेजोरूपपरिणतिरेव भवति। सविधा-सविधमध्यदेशे तेजोभिन्ने घटादौ विषयनीलपरिणामः पुरोवर्ती घटो वृक्षः

पुरुष इति विषयपरिणामः। प्रकाशसत्त्वादतिदूरदेशसत्त्वाभावाच्च नीलपरिणामः; पुरुषोऽयं श्याम इवाभातीति गौरेऽपि व्यवहारदर्शनात्। नीलादिपरिणामोऽयं सर्वजनानुभवसिद्ध एव भवति। तथाच चक्षुस्तेजःपरिणाम-
5 विशेषस्तमः। इति गोलार्थः॥९७॥

[52b] चाक्षुषकरो विषयवेषमुपयातः
स्वः स्वहृदयस्फुरितचिद्विषय एव।
चन्द्रयुगपीतजलजादिमतिभेदे
स्पष्टतरमेव किल तत्त्वमपि तस्य॥९८॥

10 अथ चक्षुर्वृत्तिस्तमः प्रत्यक्षमिति कथनमसङ्गतम्; सर्वमतेऽपि चक्षुषस्तद्वृत्तेश्चातीन्द्रियत्वेन तमोरूपत्वेन वक्तुमशक्यत्वादित्याशङ्क्य परिहरति—चाक्षुषेति॥ चक्षुस्तावत् सर्वमतेऽपि स्वपरसाधारण्येनातीन्द्रियमेव। अप्रत्यक्षमिति यावत्। चक्षुर्वृत्तिस्तु स्वीया स्वप्रत्यक्षभूता, न परस्य प्रत्यक्षभूता, तदेतदाह—स्व[1]रिति॥ चक्षुःकरो घटादिलक्षणविषयाकारं प्राप्तः स्वः स्वीयः।
15 स्वहृदयस्फुरितचिद्विषय एव स्वान्तःकरणवृत्तिप्रतिफलितचैतन्यस्य विषय एव, नान्यथा। तत्र युक्तिमाह—चन्द्रेति॥ केकराक्षत्वादिना नयनद्वयरश्मीनां चन्द्रसम्बन्धिनां चन्द्राकारग्राहिणां विना विषयं प्रत्यक्षत्वम्। तथाहि—दक्षिणवामनयनकिरणयोः प्रसिद्धचन्द्रमण्डलं विहाय वामदक्षिणदिशोः प्रस्थितयोश्चन्द्राकारेण श्यामलत्वेन भासमानाण्डवलयसक्तयोर्द्वाविमौ चन्द्राविति
20 प्रतीयमानत्वात् तत्र प्रसिद्धचन्द्रबिम्बाभावेन चक्षुःप्रभाया एवान्तःकरणवृत्तिद्वारा चिद्भास्यत्वेन प्रत्यक्षत्वम्। एवं पीतः शङ्ख इत्यत्रान्येषां शङ्खस्य श्वेतत्वेन प्रतीयमानतया तत्पुरुषीयनयनरश्मीनां पीतपित्तद्रव्यसंवलिततया पीतत्वेन तस्यैव शङ्खलेपरूपत्वेन गृह्यमाणतया चक्षुःप्रभाया एव तत्राप्यन्तःकरणद्वारा चिद्भास्यत्वम्। एवं रक्तोपनेत्रद्वारा निर्गतचक्षुःप्रभाणां रक्तद्रव्य-
25 मिश्रितत्वेन सर्वेऽपि पदार्थाः पीतशङ्खवद् रक्तत्वेन प्रतीयमाना इति चाक्षुषप्रभाया एव तत्रापि तदर्थाकारपरिणततया प्रत्यक्षत्वम्। एवं च चन्द्रयुग-

1 MS. reads चक्षुरिति।

पीतजलजादिमतिभेदे चन्द्रद्वयस्य पीतजलजस्य पीतशङ्खस्य। आदिना रक्तोप-
नेत्रस्थलीयरूपपदार्थस्य च मतिभेदे जायमाने। तस्य विषयाकारपरिणतचक्षुः-
करस्य स्वीयस्य। तत्त्वमपि स्वीयप्रत्यक्षवेद्यत्वमपि। स्पष्टतरमेव किल भवती-
त्यर्थः। तथाच विषयाकारपरिणततदीयचक्षुःप्रभायाः सर्वत्र तत्प्रत्यक्षत्व-
5 मव्याहतम्। इति भावः ॥६८॥

[53a]　　तन्नयनरश्मिपरिणाममयतेजो
　　नैव ननु तन्नयनरश्मिजतमोऽपि।
　　द्योतमयमेव न तमोमयमुपेयं
　　नैकविषये किल विरुद्धपरिणामौ ॥९९॥

10 अथ कौशिकानामादित्यप्रभायामपि तमस्त्वारोपदर्शनेन तमःप्रकाशवद्
विरुद्धस्वभावयोरित्युक्तेर्व्यभिचारादात्मानात्मनोरपि काशिकस्थल इव परस्परा-
ध्यासो भवत्वित्याशङ्कां दृष्टान्तव्यभिचारशङ्कोद्धारेण परिहरति--तन्नयनेति॥
तन्नयनरश्मिपरिणाममयतेजः तन्नयनरश्मिजतमोऽपि भवितुं नैवार्हति। ननु
निश्चयः। रात्रौ कौशिकपक्षिणः प्रकाशो जायते, स प्रकाशस्तदीयचक्षुः-
15 परिणाम एव। दिने सावित्रालोके सति तमःपरिणाम एव। एवं च कौशि-
कस्य रात्रिभवप्रकाशो दिनभवतमोरूपो न भवेदेव। दिनभवतमोऽपि
रात्रिभवप्रकाशो न भवति। मनुष्याणामपि सावित्रालोके सति नमनरश्मि-
परिणामलक्षणः प्रकाशो भवति। सावित्राद्यालोकाभावे नायनरश्मीनां तमो
मयः परिणामः। तत्रापि न तमः प्रकाशो भवति, नवा प्रकाशस्तमो भवति।
20 एवं द्योतमयमेव प्रकाशमयमेव। तमोमयं नाभ्युपेयम्। तत्र हेतुमाह--नैकेति॥
एकस्मिन् विषये एकविषयावच्छेदेनैकस्यैकदा विरुद्धौ परिणामौ न भवतः
किल। साङ्ख्यैरप्येकस्यैकदा परिणामद्वयानङ्गीकारादिति विवेचनीयम्। एवं
च तमःप्रकाशवद् विरुद्धस्वभावयोरिति सङ्गतमेव। इति भावः ॥६९॥

[53b]　　नीलमपि रूपमिह तैमिरमनन्ता-
25　　श्यामलविलक्षणमपेक्षितमनेकम्।

द्योतरहितेक्षणमयूखपरिणामाद्
द्योतविरहश्च विरलाविरलरूपः ॥१००॥

अथ तमःप्रकाशवद् विरुद्धस्वभावयोरिति दृष्टान्ते पुनराक्षेपं मनसि निधाय नीलं तम इति प्रतीयमानं तमोनैल्यं पृथिवीनैल्याद् विलक्षणं नानाविधं विवेचयति—नीलमपीति ॥ तैमिरम् तिमिरसंबन्धि । नीलं रूपमपि अनन्ताश्यामलविलक्षणम् पृथिवीश्यामांशविलक्षणम् विजातीयम् । अनेकम् नानाप्रकारम् । अपेक्षितं भवति । तत्र हेतुः—द्योतेति ॥ द्योतरहितेक्षणमयूखपरिणामात् मानुषादीनां प्रकाशरहिता य ईक्षणमयूखाः, तेषां तमोमयपरिणामात् । तत्र प्रकाशविरहोऽपि विरलाविरलरूपः विरलेन प्रकाशेनाविरलेन गाढेन च रूप्यत इति रूपः, ताभ्यां रूप्यमाणः । यद्वा—विरह एव विरलाविरलरूपः ; प्रकाशविशेषाभावसमुदायस्यैव विवक्षितत्वेनाभावानामनेकतया तत्र विरलाविरलत्वसंभवात् । तथाच मनुजानां यथा यथा प्रकाशविरहः, तथा तथा मन्दान्धकारः । अन्धकारो गाढान्धकारश्च विभिन्नविभिन्ननैल्योपेतो भवति । एवं पेचकानामपि यथा यथा प्रकाशविरहः, तथा तथा गाढान्धकारोऽन्धकारो मन्दान्धकारश्च भवन्ति नैल्यभेदेनेत्यर्थः । एवं चैकस्या एव चक्षुःप्रभाया युगपत् प्रकाशतद्विरहांशाभ्यां तमःप्रकाशपरिणामद्वयसत्त्वात् तमःप्रकाशवद् विरुद्धस्वभावयोरित्येतदसङ्गतम् । इति भावः ॥१००॥

[54a] वारितमलं च सदवारितमलं चे-
त्यंशयुगलं भवति नायनमयूखे ।
द्योतविरलत्वमलिनत्वघटनेना-
थाऽपि मलिनं नहि भवेदमलरूपम् ॥१०१॥

अथ निरुक्ताक्षेपपरिहाराय तमःप्रकाशविरोधमेव स्फुटयति—वारितेति ॥ नायनमयूखे चक्षुस्तेजसि । द्योतविरलत्वमलिनत्वघटनेन द्योतस्य साराद्यातपस्य विरलत्वम् व्यवधानेनाल्पत्वम्, मलिनत्वम् धूल्यादिनाऽल्पप्रकाशरूपत्वम्, तयोर्घटनेन । तेजोंशेन वारितमलम् इतरांशेनावारितमलं चेत्यंशुयुगलं भवति ।

तत्राथापि निरुक्तरीत्या युगपत् प्रकाशतमःपरिणामसत्त्वेऽपि यद् मलिनं तमः परिणतम्, तत् प्रकाशरूपं न भवेदेव। एवं चोर्ध्वत्वे साधारणधर्मे सति स्थाणौ पुरुषत्वारोपः, पुरुषे स्थाणुत्वारोपो भवात। प्रकृते च प्रकाशत्वस्य तमस्त्वस्य च साधारणधर्मत्वाभावात् प्रकाशे तमस्त्वारोपः,
5 तमसि प्रकाशत्वारोपश्च न भवति। इति भावः ॥१०१॥

[54b] मन्दतररोचिषि तमः प्रबलमादौ
मन्दतममेव समयक्रमवशेन।
शोचिरधिकं सदभिभावयति यस्माद्
दीपयदपि स्फुटतरं नयनतेजः ॥१०२॥

10 अथ निरुक्तमेवाक्षेपं पुनर्द्रढीकर्तुं तमसो नयनरश्मिविकारत्वमेव विशदयति—मन्दतरेति ॥ प्रबलतरसावित्रालोकाद् गृहे मन्दतरप्रकाशे प्रविष्टस्य जनस्य तमस्तावदादौ प्रबलं गाढमुपलभ्यते। तत्रैव गेहे चिरकालं स्थितवतस्तस्य जनस्य समयक्रमवशेन तत् तमो मन्दतमं भवति, प्रकाशोऽपि तत्र जायते। शोचिरिति ॥ नयनतेजः जलमयतारकासम्बन्धेन मृदुतरं
15 नैजमलेनावृतं मलापसरणेन स्फुटतरम्। दीपयदपि विषयतद्गताकृतिरूपाद्याकारपरिणामसामर्थ्यं कारयदपि सत्। सावित्रं शोचिः ज्योतिः। अधिकम् तीव्रतमं सत्। यस्मात् कारणात्। अभिभावयति अभिव्यक्तामपि शक्तिं तिरस्करोतीत्यर्थः। तथाच प्रौढतेजस्तिरस्कृतशक्तित्वाद् मन्दप्रकाशवति गेहे प्रथमं चक्षुःप्रभागतरूपपरिणामशक्तिकुण्ठीभावादादा तमोरूपेण परिणम-
20 मानं क्रमेण गेहे प्रौढतेजसोऽभावात् शीतलत्वाच्च शक्तितिरस्कारे निवृत्ते रूपादिग्रहणयोग्यत्वात् क्रमेणाधिकमधिकं यथातिरस्कारनिवृत्ति रूपाद्याकारेण प्रकाशरूपेण परिणममानं भवति। इति भावः। एवं चैकप्रदेशावच्छेदेनैकस्य तमःप्रकाशपरिणामसत्त्वात् तमःप्रकाशवदित्यादिकं कथं योजनीयमित्याक्षेपः फलितो विज्ञेयः ॥१०२॥

25 [55a] अन्धतमसं भवतु भूतमिव किञ्चिद्
बन्धुरतराण्डवलयादिनिलयं च।

तैजसकरप्रसरभेदपरिभूतं
किञ्चिदिव गाढमिव कालकमनेकम् ॥१०३॥

अथ चाक्षुषपरिणामो न भवति तमः, किन्तु पृथिव्यादिभूतवत् स्वतन्त्रं पदार्थान्तरमेव भवति ।

"अप एव ससर्जादौ तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं सर्वमन्तस्तमोवृतम् ॥"[1]

इति तमःस्वातन्त्र्यदर्शनादिति शङ्कते—अन्धतमसमिति ॥ पृथिव्यादिभुतमिव किञ्चित् स्वतन्त्रमेव । अन्धतमसं बन्धुरतराण्डवलयादिनिलयम् उच्चावचतरब्रह्माण्डवलयचतुर्दशभुवनादिनिलयं च भवतु । तदेव तैजसकरप्रसरभेदपरिभूतं च सत् सावित्राद्यालोकविस्तारतारतम्येन तन्महत्वस्वल्पत्वादिभेदेनाभिभूतं सत् । किञ्चित्कालकमिव नीलमिव । गाढं नीलमिवानेकम् अनेकप्रकारं चूर्णगैरिकादिभिर्घनविरलतारतम्येन विलिप्तभित्तिवद् मन्दतरमन्दगाढान्धकारसंज्ञाभाग् भवतु । तथाच न चक्षुःकरपरिणामविशेषस्तमः । इति भावः ॥१०३॥

[55b] दीप्ततरतेजसि दिवाकरसमिद्धे
पेचकदृशो भवति मेचकतमं यत् ।
अन्धतमसं तदिह चाक्षुषकराणां
कश्चन तमो भवति नीलपरिणामः ॥१०४॥

यदि तमः स्वतन्त्रं द्रव्यं प्रकाशाभिभूयमानम्, तर्हि मध्याह्नार्कसमुद्दीपिततेजसा सर्वात्मना तमसोऽभिभूतत्वात् कौशिकस्य तमःप्रत्ययो न स्यादिति पूर्वोक्तशङ्कां परिहरति—दीप्तेति ॥ यत् यस्मात् कारणात् । दिवाकरसमिद्धे सूर्योद्दीपिते । दीप्ततरतेजसि अतिविशदप्रकाशे । मेचकतमम् श्यामतमम् । अन्धतमसं कौशिकदृशो भवति, न मनुजदृशः, तत् तस्मात् कारणात् प्राणिदृग्भेदेन तमोभेददर्शनात् प्रकाशेनाभिभूयमानं सकलप्राणिसाधारणं स्वतन्त्रं तमो न भवति ; अनुभवविरोधात् । किन्तर्हि । चाक्षुषकराणां कश्चन नीलवस्तुरूपः परिणामस्तमो नाम भवति । इत्यर्थः ॥१०४॥

[56a]

सौरकिरणैरभिहतं तिमिररूपं
मानुषदृशा न खलु कौशिकदृशेति ।
वक्तुमपि नो भवति शक्यमिह यस्माद्
द्योततमसी न सह कौशिकदृगर्हे ॥१०५॥

5 अथ तमः स्वतन्त्रमेव द्रव्यं भवतु, प्रकाशेन तमोऽभिभवो न पूर्वप्राणिसाधारण्येन, येन प्रकाशेन तमसोऽभिभवात् कौशिकस्य तमःप्रत्ययो न स्यादित्युच्येत । किन्तर्हि । मानुषादिदृशैव तमसः प्रकाशेनाभिभवः, नतु कौशिकादिदृशा । एवं च कौशिकदृशाऽनभिभूततमसो विद्यमानत्वात् दीप्ततमे तेजसि सत्यपि कौशिकस्यान्धकारप्रत्ययो भवतीति शङ्कां परिहरति—सौरेति ॥
10 सौरकिरणैः सवित्रालोकैः । मानुषदृशा तिमिरस्वरूपमपहृतं भवति । न कौशिकदृशेति । मनुजेनान्धकारो न गृह्यते, कौशिकेन तु गृह्यत इति वक्तुमपि शक्यं न भवति । इह अस्मिन् विषये । यस्माद् द्योततमसी प्रकाशतमसी युगपत् कौशिकदृगर्हे न भवतः, तस्माद् वक्तुमशक्यमिति पूर्वेणान्वयः । कौशिकदृशाऽनभिभूततमसो द्योतस्य च सत्त्वाद् युगपदुभयविषयप्रत्यक्षं स्यात् ।
15 इत्यर्थः ॥१०५॥

ध्वान्तमभिभावयति रोचिरभिरूपं
कौशिकदृशा नरदृशा तु विपरीतम् ।
इत्यपि न वक्तुमुचितं भवति राता-
वन्धतमसं न खलु पेचकदृगर्हम् ॥१०६॥

20 अथ कौशिकदृशा प्रकाशस्तमसाऽभिभूयते, मानुषदृशा पुनस्तमः प्रकाशेनाभिभूयते । एवं च दिने कौशिको न प्रकाशं गृह्णाति, मनुष्योऽपि न तमो गृह्णाति ; तमःप्रकाशाभ्यां प्रकाशतमसोरभिभवात् । एवं च कौशिकस्य तम इव प्रकाशोऽपि दृगर्हः स्यादिति दोषो नैवावतरेदिति शङ्कां परिहरति—ध्वान्तमिति ॥ अयमत्राशयः—तमःप्रकाशयोः परस्परमभिभाव्याभिभाव-

कृतेत्येकः पक्षः ; दृशाऽभिभूयत इति विशेषणात् । तमःप्रकाशयोः परस्परं नाभिभावकता वस्तुतो भवति, किन्तु दृकृत एवेति सूचनात् कौशिकनयने दिने प्रकाशग्राहकशक्तिस्तमसा तिरस्क्रियते, मनुजनयनेऽपि तमोग्राहकशक्तिः प्रकाशेन तिरस्क्रियत इति परः कल्पः । एवं च कल्पद्वयेऽपि रात्रौ कौशिकादीनां तमोग्राहकशक्तिप्रतिबन्धाभावाद् मनुजवदेव तमोग्रहणं स्यादिति । कौशिकदृशा ध्वान्तं कर्तृ । अभिरूपं रोचिः अमलिनं प्रकृष्टरूपं ज्योतिः अभिभावयति तिरस्करोति । नरदृशा तु विपरीतं भवति । प्रकाशस्तमस्तिरस्करोतीति यावत् । इत्यपि ईदृगपि । अपिना पूर्वश्लोकार्थसमुच्चयः । उक्तरीत्यापि वक्तुमुचितं न भवति । इत्यन्वयः । तत्र हेतुः—रात्राविति ॥ रात्रौ तमोऽनभिभूतमिति तमोग्राहकशक्तिरपि नयनगताऽनभिभूतेति कौशिकदृशास्तमोविषयोऽपेक्षितं भवति, न खलु रात्रावन्धतमसं कौशिकदृगर्हं भवति । तस्माद् ध्वान्तमित्याद्युक्तिरसङ्गता । इति भावः ॥१०६॥

[56b] ओतुनयनावकलिते दिननिशोः स्तां
द्योततिमिरे सकलवस्तुपरिलिप्ते ।
तव घनमेष्टुमुचितं यदि तमिस्रं
चित्रमिव भूगतमदृश्यमखिलं स्यात् ॥१०७॥

अत्रैव दोषान्तरमप्याह—ओतुनयनेति ॥ यदि प्रकाशवत् तमोऽपि द्रव्यान्तरं पृथिव्यादिवदण्डव्यापि भवेत्, तर्हि द्योततिमिरे प्रकाशतमिस्रे सकलवस्तुपरिलिप्ते भित्त्यादावालिप्तचूर्णगैरिकहरितालादिवद् बिडालनेत्रपरिगृहीते स्ताम् स्याताम् । अत्र प्रकाशग्रहणं दृष्टान्तार्थम् । प्रकाशवत् तमोऽपि दिननिशोर्बिडालचक्षुर्गृहीतं स्यात्, न तथा गृह्यते । तस्मात् तमो नोक्तरीत्या पृथिव्यादिवद् द्रव्यान्तरम् । अथ तमो भूतवद् घनीभूतं द्रव्यमदृश्यमभ्युपेतव्यम्, न तु लेपात्मकम् ; तमसाऽऽवृतौ घटादीनां भूगर्भगतनिधिवद् दर्शनाभावात् । लेपरूपत्वे चूर्णगैरिकादिलिप्तघटपटादिवद् स्वाभाविकरूपतिरोधानेऽप्याकृतेरवयवसंस्थानलक्षणायास्तिरोधानाभावाद् लेपे तदाकारसङ्क्रमाद् घटपटादीनामाकृत्यादिग्रहणं स्यात्, न च तद्ग्रहणं भवति । तस्मात्

घनीभूतं तमः सकलवस्तुच्छादकमपेक्षितमितिशङ्कां परिहरति—तत्रेति-॥ तमिस्रं घनम् दृढमेष्टुम् अङ्गीकर्तुं यद्युचितम्, तर्हि गवाक्षजालादेर्भूगतं बिलमिव सकलमप्यदृश्यं स्यात्; तमसा घनपदार्थेनावृतत्वात्। तस्मात् तमो न लेप-रूपम्, नवा घनीभूतमेष्टव्यम्। इति भावः ॥१०७॥

5　　रूपपरिमाणपरिणामकरशक्ति

[57a]　　व्यष्टिनयनं ननु समष्टिनयनस्य ।

व्यञ्जयति संनिहितदूरतरभेदात्

पुष्कलमपुष्कलमिति प्रचुरभेदम् ॥१०८॥

अथ पूर्वं "दूरदेशमन्तिकविभेदवशात्"[1] इत्यादौ चक्षुषः स्वकरेषु सामीप्य-
10 दूरत्वतारतम्येनाधिकाल्पशक्तिव्यञ्जकत्वं निरूपितम्। तत्र चक्षुःकराणां बहिर्निर्गमने क्रिया, क्रियातो विभागः, विभागात् पूर्वदेशसंयोगनाशः, उत्तरदेशसंयोगोत्पत्तिरिति क्रमेण नयनगोलस्थानात् सवितृमण्डलादिविषय-संलग्नो रश्मिः प्रतीयत इत्येवं रश्मिभिर्गमनमुपपादनीयमिति प्रश्ने न कराणां बहिर्निर्गमनम्, येनोक्तदोषः स्यात्, किन्तु नयनं द्विविधं समष्टिव्यष्टिभेदेन,
15 तत्र समष्ट्यंशोऽनभिव्यक्तशक्तिको ब्रह्माण्डव्यापी, व्यष्ट्यंशस्तु तत्तत्पुरुष-संबन्धी, स तावदभिव्यक्तशक्तिक एव। एवं च स तावदुन्मेषे जाते न समकालमेव संमुखस्थसमष्टिनयनं सामीप्यदूरत्वतारतम्येन व्यञ्जयत् तद्गत-शक्तिं तारतम्येन व्यञ्जयति। व्यक्तं नयनमेवांशुरिति गीयते, नतु गोलकस्थानाद् निःसृत्य विषयं कराः स्पृशन्ति, अतो न कोऽपि दोष इति मनसि निधायाह—
20 रूपेति ॥ ब्रह्माण्डान्तर्गतस्य समष्टिनयनस्य रूपपरिमाणपरिणामकरशक्ति-रूपस्य शुक्लादेः परिमाणस्य चावयवसंस्थानविशेषनियतस्य परिणामं कुर्वतीं शक्तिम् सामर्थ्यम्। व्यष्टिनयनम् गोलाभिव्यक्तं चक्षुः। संनिहितदूरतरदेशभेदेन पुष्कलम् पूर्णम्। अपुष्कलम् अपूर्णम्। इति प्रचुरभेदम् अधिकतरभेदं यथा भवति तथा व्यञ्जयति। ननु निश्चयेन। व्यक्तं करोति। एवं च रश्मिनिर्गमनादि-
25 दोषो नोन्मिषति। इति भावः ॥१०८॥

[57b] अण्डलसदस्फुटसमष्टिमयतेजो
व्यञ्जयति नूनमरविन्दकरबिम्बम् ।
दीपमणिभामृतकरप्रभृति चैवं
प्रोन्मिषितशक्तिनिचयावचितरूपम् ॥१०९॥

5 उक्तेऽर्थे दृष्टान्तं दर्शयति—अण्डेति ॥ अण्डे लसत् प्रकाशमानम् अस्फुटम् अनभिव्यक्तं यत् समष्टिमयं तेजः । प्रोन्मिषितशक्तिनिचयावचितरूपम् अभिव्यक्तानां शक्तीनां निचयेनावचितं संगृहीतं स्वरूपं यस्येदृशं तेजः संमुखमरविन्दकरबिम्बं व्यञ्जयति । नूनम् निश्चयेन । एवं दीपमणिभामृतकरप्रभृति च दीपः प्रसिद्धः, मणिः पद्मरागादि, भम् नक्षत्रम्, अमृतकरश्च, एतत्प्रभृति
10 तेजोऽपि संमुखसमष्टितेजोव्यञ्जकम् । इति गोलार्थः ॥१०९॥

स्थूलतमवस्तुनि दवीयसि निमज्ज-
न्नप्यनवशेषपरिणाहपरिणामम् ।
याति न दृगंशुरभिवृद्धमलयोगात्
तेन च न वस्तुपरिमाणमनुभाति ॥११०॥

15 अथ समीपे शक्तिं पुष्कलं व्यञ्जयति, दूरे त्वपुष्कलमित्युक्तम्, तत्फलं विशदयति—स्थूलतमेति ॥ दृगंशु चक्षुःकरः । दवीयसि दूरतरे । स्थूलतमवस्तुनि निमज्जन्नपि सर्वावयवावच्छेदेन सङ्क्रामन्नपि । अनवशेषपरिणाहपरिणामम् निरवशेषोऽन्यूनो यः परिणाहो विशालता, तत्परिणामम् तदाकारेणावस्थानम् । अभिवृद्धमलयोगाद् दवीयोदेशे शक्तेरल्पाल्पमेवाभिव्यक्त्या प्रतिबन्धकमल-
20 स्योत्तरोत्तरमभिवृद्धतया स्थितत्वात् । न याति न प्राप्नोति । येन कारणेन वस्तुगतवास्तवपरिमाणाकारोंऽशुरनभिव्यक्तशक्तिकल्पाद्दूरे न भवति, तेन कारणेन वस्तुपरिमाणम् वस्तुगतवास्तवपरिमाणम् नानुभाति न प्रकाशते । तथाच मलप्रतिबन्धेन शक्त्युन्मेषस्य विकलतया वास्तवपरिमाणं न भवति । इति भावः ॥११०॥

[ 58a] रूपसकलावयवरूपपरिणामे
दूरतरवस्तुनि निरीक्षणकराणाम् ।
उन्मिषति शक्तिरखिला निरवशेषं
व्यञ्जकविशेषविरहादिति विवेच्यम् ॥१११॥

5 अथ नयनांशुर्दूरे वस्तुपरिणाहपरिमाणं मलयोगाद् न गृह्णातीत्युक्तम्, तद् विशदयति—रूपेति ॥ दूरवस्तुनि नयनांशूनां रूपसकलावयवरूपपरिणामे शुक्लादिरूपस्य सकलावयवानां च यद् रूपं स्वरूपं तत्परिणामे । अखिला समस्ता । शक्तिः पर्याप्ता नोन्मिषति । तत्र हेतुः—निरवशेषमिति ॥ शेषरहितं यथा भवति, यथा व्यञ्जकविशेषस्य दूरप्रदेशे विरहात् चक्षुर्गोलस्थतेजसः
10 संनिधान एव पुष्कलम् ; व्यञ्जकत्वात्, दूरे तथा व्यञ्जकतासामर्थ्याभावात्, सवितृमण्डलदीपकलिकादेरपि संनिधान इव दूरे पूर्णव्यञ्जकत्वादर्शनादिति विवेचनीयम् । इत्यर्थः ॥१११॥

वस्तुनि दवीयसि समस्तलववेषा-
न्नैव नयनांशुरतनोदिति विहाय ।
15 आशु गलितावयवभेदमितरेंऽशाः
सन्धिरहिता इव समेतपरिणामाः ॥११२॥

अथ दूरतरवस्तुगतवास्तवपरिमाणं परिहाय लघुपरिमाणग्रहणे निमित्तं दर्शयति—वस्तुनीति ॥ दवीयसि दूरतरे । वस्तुनि नयनांशुः समस्तलववेषान् वस्तुगतसमस्तांशुरूपाणि । नैवातनोत् । इति हेतोः । गलितावयवभेदम् गलिता-
20 श्चक्षुःपरिणामशून्या येऽवयवाः, तेषां भेदम् विशेषम् । आशु विहाय सत्वरं परित्यज्य । इतरेंऽशाः गलितातिरिक्तांशाः दूरवस्तुगताश्चक्षुःकरपरिगृहीताः वस्तुतो वस्तुन्यवयवपरिहारात् सन्धिसत्त्वेऽपि सन्धिरहिता इव समेतपरिणामाः संश्लिष्टेतरांशाकारपरिणामवन्तो भवन्ति । तेन बहूनामवयवानां परिहारेण शिष्टावयवाकारपरिणामानां संहतत्वात् चक्षुःप्रभा दूरे घनीभूताद्यल्पपरिमाणा
25 भवन्ति । इत्यर्थः ॥११२॥

[58b] आतपवशादजिनमार्द्रमिव तेज-
श्चाक्षुषमनुद्गमितसूद्गमितशक्ति ।
सङ्कुचितरूपयुतमूनपरिमाणं
सर्वजनसंमतमसद्विषयकल्पम् ॥११३॥

5 अथ स्थूलपरिमाणवद्दूरस्थवस्त्वाश्रितचाक्षुषकराणां न्यूनपरिमाणवत्त्वेऽनुरूपं दृष्टान्तं दर्शयन् न्यूनपरिमाणवत्तां समुपसंहरति—आतपेति ॥ चाक्षुषं तेजः अनुद्गमितसूद्गमितशक्ति गोलगतमूलतेजसा दूरत्वदोषेणानभिव्यञ्जिताः काश्चन शक्तयः, स्वसामर्थ्याद् व्यञ्जिताः काश्चन शक्तय इत्यनभिव्यञ्जितसुव्यञ्जितशक्तियुतं सत् । आतपवशादार्द्रं. चर्मेव सङ्कुचितस्वरूपेण युक्तं च 10 सत् । ऊनपरिमाणम् स्वल्पपरिमाणम् । अत एवासद्विषयकल्पम् सद् विषयो यस्य सद्विषयम्, तद्विपरीतमसद्विषयम्, ईषद् न्यूनासद्विषयम् असद्विषयकल्पम् । वस्त्वंशाकारसत्त्वेऽपि परिमाणांशस्य वस्तुगतस्यानाश्रयणादसद्विषयकल्पम् । सर्वजनसंमतम् सर्वजनानुभवसिद्धम् । इत्यर्थः । एवं च सङ्कुचितपरिमाणवत्ता समुचितैव दूरे । इति भावः ॥११३॥

15 [59a] अक्षिकिरणाः परिणतिप्रवणशीला-
श्चित्स्फुरणभासुरतराखिलविशेषाः ।
श्लिष्टघटनाचटुलपुष्टवपुरिद्धाः
स्पष्टपरिमाणधिषणाविषयवेषाः ॥११४॥

अथ समीपदेशे नायनकरगतसर्वशक्त्युन्मेषात् सर्वाकारेण परिणामात् 20 सद्विषया एव नयनरश्मय इत्याह—अक्षीति ॥ वस्तुनि सन्निहितेन परिणतिप्रवणशीलाः परिणामनम्रस्वभावाः नयनकराः सामीप्येन सकलावयवविशेषावलम्बेन परिणतत्वात् चित्स्फुरणभासुरतराखिलविशेषाः अन्तःकरणवृत्तिद्वारा चैतन्यप्रतिफलनेनात्यन्तभासुरसमस्तवस्त्ववयवविशेषाः सन्तः श्लिष्टघटनाचटुलपुष्टवपुरिद्धाः श्लिष्टा या वस्तुगता घटना विसन्धिकघटना संस्थानभेदः, तत्र

चटुलम् समर्थम्, पुष्टम् अवयवलेशस्याप्यपरित्यागेन पुष्टम्, यद् वपुः शरीरम्, तेनेद्धा दीप्ताः । स्पष्टपरिमाणधिषणाविषयवेषा भवन्ति स्पष्टं यत् परिमाणं विषयगतपरिमाणसमानपरिमाणम्, तस्य या धिषणा प्रतिफलितचैतन्यान्तःकरणवृत्तिः, तद्विषयो यो वेषः रूपम् आकारो येषां त ईदृशा भवन्ति । इत्यर्थः ।
5 तथाच समीपे वस्तुगतपरिमाणान्यूनानतिरेकेण नयनकराणां परिणामात् तत्र सर्वांशेनापि भानं घटत एव । इति भावः ॥११४॥

[58b] शक्तिविकलाः परिहृताङ्गजविशेषाः
स्थूलपरिणामशबला नयनभासः ।
अल्पपरिणामपरिकल्पितघनाभाः
10 स्वल्पपरिमाणयुज एव ननु दूरे ॥११५॥

अथ पूर्वं सङ्ग्रहेण दूरे नेत्रकराणामल्पपरिमाणं निरुक्तं बुद्धिवैशद्याय विवेचयति—शक्तिविकला इति ॥ दूरे नयनभासो गोलगतमूलतेजसः समीपदेशे सम्यग् व्यञ्जकतयाऽन्यत्र तथाऽभावात् शक्तिविकलाः सत्यः अभिव्यक्तशक्तिपौष्कल्यरहिताः सत्यः । अत एव परिहृताङ्गजविशेषाः ऐशपदार्थावयवजनित-
15 विशेषरहिताः । अत एव च सूक्ष्मांशाकारपरिणामाभावात् स्थूलपरिणामशबलाः विषयगतस्थूलांशमात्रपरिणामेन शबलाः संमिश्राः । अत एवाल्पपरिणामपरिकल्पितघनाभाः सूक्ष्मांशत्यागात् स्थूलांशमात्रपरिग्रहादल्पपरिणामैः परिकल्पिता संपादिता घना निबिडाऽऽभा यासां ताः, तादृश्यः सत्यः शिथिलानां परिणामानां घनीभावेन पुञ्जीभावाद् स्वल्पपरिमाणयुज एव भवन्ति ;
20 प्रशिथिलावयवतूलपिण्डस्य घनीभावेऽल्पपरिमाणस्यैवोपलम्भात् । इति भावः ॥११५॥

[60a] अर्थमवमत्य परिणत्यभिसमिद्धोऽ-
निर्व्यथनतो निबिडभावमुपपन्नः ।
न्यूनपरिमाण इति लोकविदितार्थाद्
25 भाति नयनांशुनिकरोऽखिलजनानाम् ॥११६॥

अथ "शक्तिविकला"[1] इत्युक्तमेवार्थं भङ्गयन्तरेण दर्शयति—अर्थमिति ॥ नयनांशुनिकरः । अर्थमवमत्य दूरत्वदोषेणार्थगतानंशविशेषानवगणय्य तदंश-परिणाममपहाय । अंशान्तराणां स्थूलानां या परिणतिः परिणामः, तद्भिः तया दीप्तः । दूरे दूरे परिणामान् शिथिलावयवोऽपि शक्तिस्वभावात् अनिर्व्यर्थनतः
5 अच्छिद्रभावेनाशिथिलतया । निबिडभावम् घनीभावम् । उपपन्नः उपपादितः । लोकविदितार्थात् ऐशसकलजनसाधारणार्थात् । न्यूनपरिमाणः अल्पपरिमाणः । इति सर्वजनानां भाति । तथाच सर्वजनानुभवानुसारेण वस्तुस्थितिरादरणीया । इति भावः ॥११६॥

[60b] काचमणिभेदरचितोपनयनं यत्
10 तद् बहुपथा गुणकृन्नयनरश्मौ ।
स्थूलसमदूरसमसन्निहितशोणा-
न्तर्हितविवेचकमुखत्वकरणत्वात् ॥११७॥

अथ नयनांशुषु शक्त्यभिव्यक्त्यनभिव्यक्ती नानाविधे भवतः, तेन समीप-दूरदेशतारतम्येन परिणामतारतम्याद् भानतारतम्यं घटत इति प्रकटयितु-
15 मुपाधिवशतः सर्वलोकविदितं नायनरश्मौ शक्तिविजृम्भणभेदं स्पष्टयति—काचेति ॥ काचविशेषेण स्फटिकादिमणिविशेषेण च रचितं यदुपनयनम् उपनेत्रम्, तन्नयनरश्मौ बहुपथा भवति । तथा विचित्रगुणकृद् भवति । तत्र हेतुमाह—स्थूलेति ॥ स्थूलत्वं बाह्यपदार्थात्मना परिणते नयनरश्मौ विषय-स्थौल्यादधिकं स्थौल्यम् । समत्वं बाह्यविषयसमपरिणामवत्त्वम् । दूर-
20 समत्वं बाह्यपदार्थस्य दूरस्थितस्यावलम्बेन परिणामेऽल्पपरिमाणत्वं सर्व-लोकसिद्धम् । तदपहाय वस्तुगतपरिमाणसमपरिमाणवत्त्वं संनिहितत्वम् । दूरस्थवस्त्वाकारपरिणामे वस्तुगतदूरत्वविशेषपरिणामोऽपि जायते, तमपहत्य संनिहितत्वपरिणामात् परिणामे सांनिध्यं श्वेतादौ बाह्येऽर्थे यथावस्तु श्वेतादि-परिणामो भवति, तदपहाय सर्वेष्वपि वस्तुषु नयनांशोः शोणत्वाकारादिः ।
25 अन्तर्हितविवेचकत्वम् जलादिनिमग्नपदार्थाकारपरिणत्या तद्विवेचकत्वम् । एतन्मुखत्वम् एतत्प्रभृति नानाविधरूपता । तेषु तत्तत्काचादिविशेषणस्य

नयनरश्मिगतनानाविधशक्त्यभिव्यञ्जनद्वारा हेतुत्वादित्यर्थः। तथाचोप-
नेत्रभेदात् नानाप्रकारेण नयनरश्मिपरिणामाद् नायनरश्मौ शक्त्यभिव्यक्त्य-
नभिव्यक्ती अनुभवानुरोधेनेष्टव्ये। इति भावः ॥११७॥

[61a] पुष्टिरपि नेत्रकिरणे सदुपनेत्राद्
5 वस्तुपरिमाणपरिणामवति चित्रम्।
शक्तिपृथुलत्वकरणाद् ननु पदार्था-
च्चाक्षुषलसद्द्युतिबहिःप्रसरणेन ॥११८॥

अथ बाह्यवस्तुपरिमाणसमपरिमाणपरिणामश्चक्षुःप्रभायां सहजसिद्ध एव।
यत्तावदुपनेत्रविशेषाद् बाह्यार्थपरिमाणादधिकपरिमाणात्मना परिणामः, तत्र
10 यथा तूलेऽवयवशैथिल्यात् पूर्वपरिमाणादन्यदेवाधिकपरिमाणमुत्पद्यते, न तथा
नयनरश्मिस्थौल्यं भवति, किन्तु शक्तिसमृद्धिकृतमेव स्थौल्यमित्याह—पुष्टिर-
पीति ॥ वस्तुपरिमाणपरिणामवति बाह्यवस्तुगतपरिमाणसमपरिणामस्वभाव-
वति नेत्रकिरणे। सदुपनेत्रात् उत्तमोपनेत्रतः। चित्रम् विचित्रं नानाविधं यथा
भवति तथा। पुष्टिरपि शक्तिपृथुलत्वकरणात् नेत्ररश्मौ शक्तिस्थौल्यकारणादेव
15 भवति, न तु ग्राह्यपदार्थात्। चाक्षुषी लसन्ती या द्युतिः प्रभा, तस्या बहिः-
प्रसरणेन न भवति। तूलस्य प्रशिथिलत्वकारणेन बहिर्देशव्यापित्व-
कारणेन परिमाणान्तरवद् नेह भवति। इति भावः ॥११८॥

[61b] उक्तविधया यदि न तर्हि लिपियुक्त-
स्थूलतमपत्रहृदयाकलितकाचात्।
20 अक्षरचतुष्टयमतीव पृथुलं सद्
भाति परितो लघुषु सत्सु कुत एतत् ॥११९॥

अथ शक्तिपृथुलत्वमेव स्थौल्यम्, न तु शक्त्याश्रयीभूतनयनरश्मिसमृद्ध्या
बहुदेशव्यापित्वलक्षणमित्यत्र विपर्यये दोषमाह—उक्तेति ॥ उक्तविधया शक्ति-
समृद्धिविधया स्थौल्यं यदि न भवति, तर्हि लिपियुक्तस्थूलतमपत्रहृदयाकलित-

काचात् अक्षरचतुष्टयमतीव स्थूलपत्रमध्यनिहितोपनेत्रादुपनेत्रमध्यगताक्षर-चतुष्टयमेवात्यन्तं पृथुलं भाति। अत्राक्षरचतुष्टयमित्येतदेकाद्यक्षराणामुप-लक्षणम्। अथ तत्र नयनप्रभायाः स्थौल्यादेवाक्षरपरिमाणतायाः स्थौल्य-भावेन भानमिति शङ्कां परिहरति—परित इति ॥ परितः उपनेत्रवलयात्
5 परितो लघुषु अक्षरेषु भासमानेषु सत्सूपनेत्रवलयाद् बहिरुपनेत्रवलया-न्तर्गताक्षरपरिणतप्रभाया निर्गमने बाह्यलघ्वक्षराच्छादनापत्तेर्बहिःप्रभानिःसरणं न भवत्येव। एवं च शक्तिजृम्भणकृतमेव स्थौल्यम्। यद्येवं न भवेत्, कुत एतत्साक्षरपत्रनिहितोपनेत्रवलयान्तरेव स्थूलाक्षरभानम्। इत्यर्थः ॥११९॥

[62a] शक्तिपरिजृम्भणज एव परिणाहो
10 ज्ञानविषयोऽर्थकलितो न हि विहीनः।
शक्तिविकलत्वकृतमेव परिमाणं
वेद्यमतिहीनमधिकं न हि पदार्थे ॥१२०॥

अथ प्रागुक्तरीत्या बाह्यपदार्थगतं परिमाणं न संविद्वेद्यम्, किन्तु नयन-करशक्तिविजृम्भणेनान्तःकरणवृत्तिगतमेव परिमाणं चित्संवेद्यमित्याह—
15 शक्तीति ॥ शक्तिविजृम्भणज एव परिणाहः नयनरश्मिवूपनेत्रादिकृतं यच्छक्ति-जृम्भणम् समृद्धिः, तेन जृम्भणेन सञ्जातो यः परिणाहः, अर्थादन्तःकरण-वृत्तिपरिगृहीतः, स एव ज्ञानविषयो भवति। बाह्यार्थगतोऽतिहीनो अल्प-तरः परिणाहो विषयो न भवति; चैतन्यस्यान्तःकरणवृत्तावेव स्फुरणेन विषये स्फुरणाभावात्। काचाद्युपाध्यधीननायनप्रभाद्वारकान्तःकरणवृत्ति-
20 गतस्थौल्यस्य चिद्भास्यतामुक्त्वा दूरत्वदोषस्थले विषयविपरीतपरिणामस्य बुद्धिवृत्तौ जननात् तदेव चिद्वेद्यम्, न विषयगतस्थूलपरिमाणमित्याह—शक्तीति ॥ दूरत्वदोषेणोक्तरीत्या यत् शक्तिविकलत्वम् शक्तिह्रासः, तत्कृतं यद् बुद्धिवृत्तिगतं परिमाणम्, तदेवातिहीनमपि वेद्यं भवति, नार्थगतमधिकं स्थूलं परिमाणम्। इत्यर्थः ॥१२०॥

25 [62b] उन्मिषितशक्तिषु विचित्रपरिणाहाः
स्वप्नकमनोरथमुखेषु ननु वेद्याः।

अण्डवलयादिकमशेषमपि देहे
माति किल कण्ठनयनादिगतखण्डे ॥१२१॥

अथोपनेत्रविशेषमाहात्म्यादुपनेत्रवलयावच्छेदेन सूक्ष्ममप्यक्षरं शक्तिजृम्भणेन स्थूलं भातीत्युक्तम्। तत्र शक्तिजृम्भणमुपनेत्रवलयावच्छेदेनैव केन हेतुना भवति ; 5 जृम्भणे बहिःप्रसरणौचित्यादिति शङ्कामनुरूपनानाविधविषयोपन्यासेन निराकरोति—उन्मिषितेति ॥ स्वप्नकमनोरथमुखेषु स्वप्ने मनोरथे चान्तःकरणेऽभिव्यक्तनानाविधवासनामयशक्तिकयोर्नयनप्रभाद्वारकान्तःकरणवृत्तौ चादर्शतलादिषु विचित्राः परिणाहाः स्थूलस्थूलतरस्थूलतमसूक्ष्मादिपरिणाहाः सूक्ष्मप्रदेशावच्छेदेन जायमानाश्चितो वेद्या ननु भवन्ति। तमेव विचित्रपरिणाहं सूक्ष्म-10 प्रदेशावच्छेदेन दर्शयति—अण्डेति ॥ ब्रह्माण्डवलयगिरिनदीनगरादिकं सकलमपि देहे शरीरे कण्ठनयनादिगतखण्डे स्वप्ने कण्ठगते खण्डे स्थलविशेषे मनोरथे नेत्रगते देशेऽतिसूक्ष्मे। आदिपदेन नयनकण्ठान्तरालदेशे। माति किल। एवंच सूक्ष्मप्रदेशावच्छेदेन ब्रह्माण्डादीनां भानात् शक्तेरेवेदं माहात्म्यम्। इति भावः ॥१२१॥

15 [63a] आदिमपदे स्फुटतरा भवति शक्तिः
प्रान्तनिलयेऽस्फुटतमा सततमेषा।
मध्यमपदेषु गदितद्विविधरूपा
प्राक् प्रथमरीतिरधिका तदितराग्रे ॥१२२॥

अथ पूर्वं नयनरश्मिषु शक्तिविकलत्वाविकलत्वे परिगृहीते, तत्र रश्मीनां 20 क्व विकलता शक्तेः, क्व चाविकलतेति प्रश्ने तूत्तरमाह—आदिमेति ॥ अत्र नयनरश्मीनामंशत्रयम्—आदिभागो मध्यभागोऽन्तभागश्चेति। तत्रादिमपदे चक्षुर्गोलकसंनिहितप्रदेशे चक्षुर्गोलकस्थव्यष्टितेजसो यावद्देहमभिव्यक्तत्वेन व्यञ्जकसंनिधानात् किरणगता शक्तिः स्फुटतरा भवति सम्यगभिव्यक्ता भवति। प्रान्तनिलये चक्षुःकरप्रान्तभागे ब्रह्माण्डवलयप्रदेशावच्छेदेन धर्मिणः

करस्याभिव्यक्तत्वेऽपि तद्गतशक्तिरेषा व्यञ्जकादतिव्यवधानाद् अस्फुटतमा रूपाकारपरिणामविशेषे नैव समर्था भवति। मध्यमपदेषु मध्यमप्रदेशेषु करगतशक्तिर्गदितद्विविधरूपा भवति शक्तिव्यञ्जकसांनिध्यव्यवधानसाम्यादंशभेदेन व्यक्ताव्यक्तरूपा भवति। तत्रापि पूर्वार्धे शक्तेरभिव्यक्तिरधिकाधिका भवति; व्यञ्जकसांनिध्यतारतम्यात्। अग्रे उत्तरार्धे व्यञ्जकव्यवधानतारतम्यादेवेतरानभिव्यक्तिरधिकाधिका भवति। इत्यर्थः। एवं च निकटे निकटेऽधिकाधिकाभिव्यक्तिरग्रेऽग्रे न्यूना न्यूना। इति भावः ॥१२२॥

[63b] अभ्रगमनानुकृतिसंस्कृतदृगंशोः
शुभ्रकिरणाकृतिमयादहतशक्तेः।
ऊर्ध्वमवधानशबलादनवधाना-
दम्बुमुचि चन्द्रविपरीतगतिभानम् ॥१२३॥

अथाभ्रेषु गच्छत्सु चन्द्रस्याभ्रगमनमनुभूयमानं चक्षुःप्रभापरिणामद्वारकान्तःकरणपरिणामकृतमित्याह—अभ्रेति ॥ अभ्रगमनानुकृतिसंस्कृतदृगंशोः अभ्रं च गमनं च, अर्थादभ्रस्यैव गमनम्, अभ्रगमनयोर्याऽनुकृतिः अनुकरणम्, तदाकारग्रहणम्, तत्परिणामः, तेन संस्कृतः वासनापर्यन्तं संपन्नो यो दृगंशुः नयनरश्मिः, तस्मिन् मेघमण्डलादूर्ध्वम्। अहतशक्तेः चन्द्रप्रभाभिरप्रतिहतस्वभावशक्तेः। शुभ्रकिरणाकृतिमयात् चन्द्राकारग्राहिणस्तद्रूपात्। ऊर्ध्वमवधानशबलात् अवधानलक्षणैकचित्रत्वयुतात्। अधस्तादम्बुमुचि मेघेऽवधानरहितात् ऐकाग्र्यविहीनात्। चन्द्रविपरीतगतिभानम् चन्द्रे विपरीतगतेः अभ्रगतिविपरीतगतेर्भानम् प्रतीतिर्भवतीत्यर्थः। अत्राहतशक्तेरूर्ध्वमवधानादिति निर्देशात् चन्द्रमसि सर्वमिदमुपपन्नम्; शीतलकरत्वात्। चण्डकरे सवितरि तु वलदभ्राकारेण परिणता नयनप्रभा तदाकारेण सहोपरि गत्वा चन्द्रकिरणबिम्बाकारेण विस्पष्टं परिणमितुमसमर्थैव; तीक्ष्णकरैश्चक्षुःप्रभाकरशक्तेरभिहितत्वेनाभ्राकारानुकृतेः सवितृमण्डलपर्यन्तं गमनाभावेन सवितृमण्डलेऽभ्रगतिविपरीतगतिप्रतीतेरयोगात्, अभ्रगमनसवितृबिम्बपरिणामयोरेकप्रदेशावच्छेदेन सत्त्व एव तादृशप्रतीतेरुदयात्। यदि चन्द्रबिम्बसदृशं सवितृ-

बिम्बमतीक्ष्णप्रभं हिममिङ्कायुपाधिसंनिधानात्, तर्हि चन्द्रवदेव सवितर्यप्यभ्रविपरीतगतिभानं भवति। इति भावः ॥१२३॥

[64a] चन्द्रसमसूत्रगतविस्तृतशरीरे
शाम्बरमुचि प्रचलतीक्षणमयूखे।
5 अम्बुदविभागशशिबिम्बपरिणत्योः
संहतिवशात् स्फुरति धावति शशीति ॥१२४॥

अथ चन्द्रेऽभ्रविपरीतगमनमुक्तमेव बुद्ध्युपारोहाय विशदयति—चन्द्रेति ॥ चन्द्रसमं यत् सूत्रम् रेखा, तद्गतं विस्तृतं शरीरं यस्य, तस्मिन् शाम्बरमुचि जलमुचि, मेघे। प्रचलति गच्छति। अत्राम्बुदस्य विस्तृतशरीरत्वाभावेऽतिस्वल्पत्वादभ्रचलनाच्चन्द्रे विपरीतगमनभानमेव न भवतीति ध्वनितम्। ईदृशेऽभ्रे चलति सति। ईक्षणमयूखे नयनरश्मौ। अम्बुदविभागशशिबिम्बपरिणत्योः चन्द्रसमसूत्रे योऽम्बुदः, तस्माद् विभागः पूर्वापरीभावो यश्चन्द्रस्य, स च शशिबिम्बं च, तयोर्ये परिणती परिणामौ नयनरश्मिद्वारकान्तःकरणपरिणामौ, तयोः। संहतिवशात् संसर्गवशात्। मेघमण्डलावच्छेदेन पौर्वापर्येण मेघचन्द्रविभागाकारेण परिणामो जायमान ऊर्ध्वं गतचक्षुःप्रभायाश्चन्द्राकारपरिणामस्थलावच्छेदेनापि सङ्क्रामति। तेन परिणामद्वयस्य चन्द्रावच्छेदेन संहतेर्हेतोः शशी धावतीति स्फुरतीति। अत्रातिदवीयःसवितृमण्डलस्यातिदूर एवानुभूयमानस्य तथैव हृदये निरवशेषावयवयोगेन सर्वेषामपि प्राणिनां भानात् सवितृमण्डलावच्छेदेन जातश्चक्षुःप्रभाद्वारकान्तःकरणपरिणामो यावद्धृदयप्रदेशं चक्षुःपरिणामेन सह सङ्क्रामति। काचमयोपनेत्रादिसंवलनेन चक्षुःप्रभापरिणामं रक्तपीतादिलक्षणं परिगृह्य छायाघनीभूतचक्षुःप्रभायाः श्वेतं परिणामं परिगृह्य चाब्रह्माण्डकटाहपर्यन्तमन्तःकरणस्य रक्तपीतपरिणामस्य छायापुरुषसम्बन्धिधवलाद्याकारपरिणामस्य वा सर्वानुभवसिद्धतयाऽन्तःकरणपरिणामः पुरुषसविधे जातश्चक्षुःप्रभया सह ब्रह्माण्डपर्यन्तविततचक्षुःप्रभाद्वारकान्तःकरणदवीयःस्वरूपे सङ्क्रामत्येव; अनुभवसिद्धस्य पर्यनुयोगायोगात्। एवं च मेघावच्छेदेन सञ्जातचक्षुःप्रभान्तःकरणपरिणामयोश्चन्द्रा-

कारपरिणामप्रदेशपर्यन्तं सङ्क्रमणं संभवतीति परिणामद्वयस्यैकप्रदेशावच्छेदेन संहतिसंभवात् चन्द्राकारपरिणामे मेघविभागपरिणामायोगेन तस्य चन्द्रास्य-तया शशी धावतीति स्फुरणं समुचितं भवति। इति भावः ॥१२४॥

[64b] चन्द्रमसि यद्यनवधानमवधानं
5 त्वम्बुमुचि तर्हि मुदिरः स्फुरति धावन्।
यत्र विषये हृदयवृत्तिरवधानो-
द्भासिततनुर्लसति तत्र चिददभ्रम् ॥१२५॥

अथ निरूपाधिकचक्षुःपरिणामस्थले संनिहितपरिणामस्य दूरतरपरिणाम-प्रदेशपर्यन्तं सङ्क्रमणासङ्क्रमणे अवधानानवधानाभ्यां विभज्य दर्शयति—
10 चन्द्रमसीति॥ अन्तःकरणस्य चन्द्रमसि यद्यनवधानम् अवधानाख्ययत्नविरहः, अम्बुमुचि मेघे त्ववधानं च भवति, तर्हि तत्रान्तःकरणस्य चक्षुःप्रभानियमन-विशेषद्वाराऽवधानं मेघ एव न चन्द्र इति चन्द्रपरिणामप्रदेशावच्छेदपर्यन्तं मेघचन्द्रविभागपरिणामो न सङ्क्रामति, मेघव्यवधानेन प्रतिबन्धादिति। मुदिरो मेघो धावन् स्फुरति, नतु चन्द्रः। यत्र निरुपाधिकत्वाद् हृदये विषयस्यान्तः-
15 करणवृत्तिरवधानोद्भासिततनुः अवधानप्रयत्नस्फुरितदेहो भवेत्, तत्र चिदन्तः-करणवृत्तौ तद्विषयावच्छेदेनादभ्रं स्फीतं यथा भवति तथा, सकलविषयविशेषा-वभासनाय लसति स्फुरति। तथाऽधस्तनावधानादूर्ध्वमनवधानादधस्तनपरि-णामस्योर्ध्वमसङ्क्रमणम्। इति भावः ॥१२५॥

[65a] अक्षिसमुदञ्चितरुचौ हि निरुपाधौ
20 सेयमवधानविषया भवति चिन्ता।
नावतरतीयमितरत्र सुसमिद्धो-
पाधिपरिबन्धननिबन्धनवशेन ॥१२६॥

अथावधानानवधानाभ्यां प्रतीतिव्यवस्था तावद् निरुपाधिकस्थल एव, उपाधिसमवधानस्थले तूपाधिबलेनाधस्तादेवावधानेन परिणामावस्थानमिति च

नियमः ; उपाधिबलेनाधस्ताद् ज्ञातपरिणामस्योर्ध्वमपि सङ्क्रमणदर्शनादित्याह—अक्ष्णीति ॥ अक्ष्णः सकाशादुदिततेजसि निरुपाधिके सति हि । सेयम् पूर्वश्लोकोपात्ता । अवधानविषया चिन्ता भवति अवधाने सत्यर्वागेव परिणामस्तिष्ठति, नोर्ध्वदेशमुपसर्पतीति चिन्ता घटते । इति गोलार्थः । इतरत्र
5 निरुपाधिकादन्यत्र सोपाधिकस्थले—उपनेत्राद्युपाधिप्रदेशे । इयम् अनवधानचिन्ता । सुसमिद्धोपाधिपरिबन्धननिबन्धनवशेन सुष्ठु समिद्धोपाधेर्यत् परिबन्धनमेव निबन्धनम् नियामकम्, तद्वशेन तदधीनतया । अवधानस्योपाधिप्रतिबद्धत्वेनाधस्तनरक्तपीतादिपरिणामस्योर्ध्वमपि सङ्क्रमणं संभवतीति । नावतरति न प्रादुर्भवति । तथाचोपाधिरहितस्थल एवावधानानवधानकृतविशेषः ।
10 इति भावः ॥१२६॥

[65b] काचमणिनायननलोन्मिषितशक्ति-
दूरतरवस्तुविविधाकृतिविशेषान् ।
आत्मनि निधाय नयनांशुरधिचित्तं
सञ्जयति संनिहितमेव विकचाङ्गान् ॥१२७॥

15 अथोपाधिवशादधस्तनपरिणामस्य रक्तपीतोपनेत्रमाहात्म्यादूर्ध्वगमनवत् क्वचिदुपाधिभेदेनाग्रेऽतिदूरपरिणामस्यातिसंनिधानेऽपि समागमनं भवतीति दर्शयति—काचेति ॥ नयनांशुः चक्षुस्तेजः । काचमणिनायननलोन्मिषितशक्तिः काचविशेषेण मणिविशेषेण वा नियमितो यो नायननलः नयनसंनिधाने स्थापनार्हो नलः, तेन समुन्मिषितशक्तिः समुद्बोधितसामर्थ्यः सन् । दूरतरवस्तु-
20 विविधाकृतिविशेषान् अतिदूरगतवस्तूनां ये नानाविधाकारविशेषाः, तान् । अतिस्पष्टतयाऽऽत्मनि निधाय स्वस्वरूपे निधाय, तदाकारेण परिणामं विधाय । अधिचित्तम् स्वावच्छिन्नान्तःकरणवृत्तौ । पुरुषस्य संनिहितं यथा भवति तथा । नानेव परिणामभेदान् स्वस्य प्रफुल्लशक्तित्वात् विकचाङ्गान् स्थूलावयवान् । सञ्जयति सङ्क्तान् करोति । तथाच ते चिदवभास्याः सन्तोऽतिनिकट एव भान्ति । इत्यर्थः ॥१२७॥

[66a] विस्तृततरेषु विविधेषु विषयाणां
विग्रहविशेषखचितेषु विचलन्त्याम् ।
नावि नयनांशुषु चलत्सु विपरीतं
सङ्क्रमति सन्ततमथानुकृतिरादौ ॥१२८॥

5 अथ चलन्नौकागतपुरुषदृष्ट्या तीरतद्गतवृक्षादेर्विपरीतगमनं प्रतीयमानं दृक्प्रभापन्नमिति विवेचयति— विस्तृतेति ॥ नयनांशुषु विविधेषु उपनेत्रकाचादिभेदेन दीप्ततरमध्यमन्दादिशक्तियुतेषु विस्तृततरेषु दिङ्मण्डलेषु देशव्यापिषु तत्र तत्र नानाविधानां विषयाणां सत्त्वात् तत्सम्बन्धात् तेषां विषयाणां विग्रहविशेषैः आकारभेदैः खचितेषु निबद्धेषु तत्तदाकारग्राहिषु । जलगतायां नावि
10 विचलन्त्याम् धावन्त्यां सत्याम् । नावीत्युपलक्षणं शकटादेरपि । नावि चलन्त्यां चलत्सु । इत्यन्वयः । एवं च नयनकरेष्वग्रे धावत्सु सत्सु विततपनकरगतविषयाकारानुकृतिः परिणामः । आदौ पृष्ठभागे । सन्ततम् अविच्छिन्नधारम् । विपरीतम् पुरुषगमनदिग्विपरीतम् । अथ नौचलनसमारम्भोत्तरम् । संसृजति सम्बध्नाति ॥१२८॥

15 पोतगतमर्त्यदृगभीशुषु चलत्सु
स्पष्टवपुषाऽनुकरणेषु गतिमत्सु ।
तीरतरवो द्रुतमुपेतनिजदेशा
यान्ति विपरीतमिति साधु परिभान्ति ॥१२९॥

अथ तीरतद्गतवृक्षादीनां विपरीतगतिं विवेचयति—पोतेति ॥ अग्र चलत्सु
20 नौकागतमनुष्यनयनकिरणेष्वधिकरणेषु । स्पष्टवपुषा विस्पष्टाकारेण । अनुकरणेषु तत्तद्विषयपरिणामेषु । पुरुषगमनदिग्विपरीतदिशि गतिमत्सु सत्सु सङ्क्रममाणेषु सत्सु । द्रुतम् सत्वरम् । तीरतरव उपेतनिजदेशाः निजदेशयुताः । विपरीतं यान्ति गच्छन्ति । इति साधु सम्यगेव । परिभान्ति प्रकाशन्ते । इत्यर्थः । तथाच चक्षुःप्रभापरिणामद्वारकान्तःकरणपरिणामा एव नानागुणभाजश्चिदवभास्याः । इति
25 भावः ॥१२९॥

[66b] दर्पणतलात् प्रतिहतो नयनरश्मिः
प्रत्यगपि तिर्यगपि किञ्चिदिव साचि ।
विश्वविषयानुकृतिकृन्मुकुरगर्भे
निर्गतवपुर्विषयलेपमनुभूय ॥१३०॥

5 अथ प्रतिबिम्बमपि नायनप्रभापरिणामद्वारकान्तःकरणपरिणामविशेष एवेति विवेचयति—दर्पणेति ॥ नयनरश्मिर्दर्पणतलात दर्पणपदं जलादीनामुपलक्षकम्, दर्पणादितलात् । प्रतिहतः अभिहतः सन् । प्रत्यगपि प्रतिमुखमपि । किञ्चित् साचीव तिर्यगपि न तु विस्पष्टमेव तिर्यगपि—कोणगत्या तिर्यगपि । प्रथमदर्पणादितलाद् बहिर्निर्गतवपुर्विषयलेपम् विषयाकारव्याप्तिम् । अनुभूय ।
10 मुकुरगर्भे विश्वविषयानुकृतिकृत् प्रतिमुखसमस्तविषयाकारपरिणामकृद् भवति । एवं चातिदूरे विषयाकारपरिणामो जातोऽपि मुकुरोदरपर्यन्तं सङ्क्रामत्येव ; स्वभावात् पूर्वावयवानामन्त्यपरिणामोद्ग्राहित्वस्य स्वीकरणीयत्वात् । इति भावः ॥१३०॥

[67a] मूलमुकुरान्मुकुरमन्यमपरं चास्मा-
15 दपि ततोऽपि परमित्यधिगतं सत् ।
सर्वमुकुरानुकृतिमल्लघु लघूच्च-
द्रोचिरुचितं भवति मूलमुकुरान्तः ॥१३१॥

अथ नयनचित्तवृत्त्योर्वैलक्षण्यं गमयितुं नयनप्रभायाः स्वभावान् सावित्रादितेजःसाधारणान् दर्शयति—मूलेति ॥ मूलमुकुरात् प्रथमं संबद्धा-
20 दादर्शात् । तत्र प्रतिहतं सत् चाक्षुषं तेजो मुकुरमन्यमधिगतं भवति । अस्मात द्वितीयमुकुरात् । अपरं मुकुरम्, ततोऽपि परं मुकुरम्, इति एवंप्रकारेण तत्र तत्र प्रतिहतं ततस्ततो निर्गतमन्यमन्यं मुकुरं यावदभिव्यञ्जनसामर्थ्यं तत्तद्दर्पणोदरमधिगतं प्राप्तं सत् । मूलमुकुरान्तः प्रथममुकुरमध्ये । उत्तरोत्तरमुचितम् योग्यं यथा भवति । लघु लघु स्वल्पं स्वल्पम् । चाक्षुषमेव तेज

उद्यद्रोचिः सत् अभिव्यक्ततेजस्कं सत्। सर्वमुकुरानुकृतिमत् लघु लघु सर्व-मुकुरानुकरणयुक्तं सर्वानुभवसिद्धं भवति। इत्यर्थः ॥१३१॥

[67b] ज्योतिरखिलं क्रमत एव ननु मूला-
दर्शतलतो लघु लघूनमितरेषु।
5 सर्वमनुबिम्बमिह सूक्ष्ममतिसूक्ष्मं
तस्य हृदि तस्य हृदि तत्तदितिरीत्या ॥१३२॥

अथ सावित्रादिज्योतिष्यपि दर्पणाद् दर्पणान्तरसङ्क्रमणं यावद्बलं निरूपयन् प्रतिबिम्बे नायनरश्मिभवे पुनरन्यत् प्रतिबिम्बम्, तत्राप्यन्यदिति सावित्रज्योतिषो वैलक्षण्यं नायनज्योतिषि चित्तचैतन्यसंवलनतो दर्शयति – ज्योति-
10 रखिलमिति ॥ सर्वमपि सावित्रादिज्योतिरुज्ज्वलं मूलदर्पणतलादितरेषु दर्पणेषु लघु लघु स्वल्पं स्वल्पं क्रमत एव। ऊनं भवति प्रथमादर्शाद् द्वितीयादर्शे, तस्मादप्यन्यत्रेति रीत्या भवति। अनुबिम्बम् प्रतिबिम्बम्। सर्वमिह प्रथमादर्शतल एकं प्रतिबिम्बम्, तस्य हृदि तत्प्रतिबिम्बस्य हृदि। तत् प्रतिबिम्बम्। तस्य हृदि पुनरतिसूक्ष्मं प्रतिबिम्बमिति रीत्या प्रतिबिम्बात्
15 प्रतिबिम्बान्तरमित्येवं भवति। तथाच सावित्रादिज्योतिषः सकाशाद् महद् वैलक्षण्यम्। इति भावः ॥१३२॥

[68a] दर्पणतलाभिवदनैव मतिवृत्ति-
र्दृक्परिणतीः क्रमचिता अनुकरोति।
संनिहितदूरतरवस्तुपरिणामान्
20 भासयति चिन्मतिगतान् क्रमनिरूढान् ॥१३३॥

अथ नयनकरेभ्योऽन्तःकरणवैलक्षण्यं विवेचयति—दर्पणेति ॥ मतिवृत्तिः अन्तःकरणवृत्तिः। दर्पणतलाभिवदनैव सती मुकुराभिमुखैव सती। क्रमचिताः अनुक्रमेण सङ्गृहीताः—दर्पणतलात् पराग् गत्वा तत्तद्विषयख्यापनेन ज्ञाताः। दृक्परिणतीः दृशः क्रमेण जातान् मेघसवितृमण्डलब्रह्माण्डकपालादिपरिणामान्

व्यत्ययेन दर्पणाभिमुख्येनानुकरोति। तथाच दर्पणात् पराग्भूता अपि क्रमिकदृक्परिणामा अन्तःकरणेनानुकृता दर्पणप्रत्यग्भूता भवन्तीति सिद्धं भवति। अथ तेषां परिणामानां दर्पणप्रत्यग्रूपतया भानमुपपादयति— संनिहितेति ॥ मतिगतान्। बुद्धिगतान् क्रमेण निरूढान् दर्पणाभिमुखतया
5 सञ्जातान्। संनिहितदूरतरवस्तुपरिणामान् निकटदूरवर्तिपदार्थपरिणतीः। चिद् भासयति। इत्यन्वयः। तथाच दर्पणाभिमुखमतिगतपरिणामा एव चिद्भास्याः, न दर्पणपराग्भूतदृक्परिणामाः। इति भावः ॥१३३॥

[68b]　　स्वल्पभुवि संनिहितदूरतरवस्तु
　　प्रस्फुरति शक्तिपरिजृम्भणत एव।
10　　अण्डमखिलं द्युमणिबिम्बसमवेतं
　　छिद्रमिव दर्पणतलं च ननु भाति ॥१३४॥

अथ दर्पणतलात् पराग्दूरापातिदूरतरसवितृमण्डलब्रह्माण्डादिपरिणामा अतिमहान्तोऽन्तःकरणवृत्तिरूपा अपि दर्पणाभिमुख्येन स्वल्पतरे दर्पणतले कथं भान्तीति शङ्कां परिहरति—स्वल्पेति ॥ स्वल्पभुवि सूक्ष्मदेशे। संनिहितदूरतर-
15 वस्तु संनिहितत्वदूरतरत्वादिविशिष्टतया तत्तद्वस्तुपरिणामः। शक्तिपरि- जृम्भणत एव अन्तःकरणगतवासनारूपसामर्थ्यप्रफुल्लावस्थात एव। प्रस्फुरति स्पष्टं प्रकाशते। तदेव विषयविशेषदर्शनेन द्रढयति—अण्डमिति ॥ दर्पणतलेऽल्पीयसि द्युमणिबिम्बसमवेतम् सवितृमण्डलयुतम्। अखिलमण्डं भाति ननु। दर्पणतलं च छिद्रमिव भाति ननु। तस्मात् स्वल्पदेशावच्छेदेन
20 शक्तिरेव स्वाभाव्यात् प्रफुल्ला सती महापरिमाणवत्पदार्थात्मना भाति। इति भावः ॥१३४॥

[69a]　　लोचनमयूखशबलं विषयदेशं
　　नैव मुकुराद्धृदयवृत्तिरुपयाति।
　　आद्यमधिगच्छति हि पर्व सदृगेषा
25　　नान्यदपि तेज इव शक्तिविकलत्वात् ॥१३५॥

अथ चक्षुःप्रभा दर्पणतलात् पराग्विषयदेशे यथा गच्छति, तथा तदन्तर्गतान्तःकरणमपि तस्माद् दर्पणतलाद् पराग्विषयदेशं यात्विति शङ्कां श्लोकाभ्यां परिहरति—लोचनेति ॥ चित्तमिति ॥ अन्तःकरणस्य नयनतेजसा सह दर्पणतलात् पराग् गमनं सामर्थ्याभावाद् न भवतीति विवेचयति। —लोचनेति ॥ लोचनमयूखशबलं विषयदेशं नयनकरैरादर्शतलात् पराग तैर्युक्तं विषयप्रदेशम्। नयनकरैः सह मुकुरात् पराग्। हृदयवृत्तिः बुद्धिवृत्तिः। नैवोपयाति। तदेवोपपादयति—आद्यमिति ॥ आद्यम् प्रथमम्। पर्व आदर्शादिलक्षणम्। एषा बुद्धिवृत्तिः। सदक् सती। अधिगच्छति हि प्राप्नोति किल। हीति प्रसिद्धौ। सर्वानुभवसिद्धमेतदित्याशयः। तेजः सावित्रनायनादिलक्षणम्। यथाऽऽदर्शादेकस्मादादर्शान्तरम्, तस्मादप्यन्यम्, तस्मादप्यन्यं याति, न तथाऽन्यदप्यादर्शतलं हृदयशक्तिविकलत्वादधिगच्छति। नायनं तेजः शक्तत्वादादर्शान्तरादि याति, न हृदयवृत्तिः; सामर्थ्याभावात्, सामर्थ्यस्य च फलबलपरिकल्प्यत्वात्, इह तादृशबलाभावात्। इति भावः ॥१३५॥

[69b] चित्तमुपयाति सह चाक्षुषकरेणा-<br>
दर्शतलतो विषयदेशमिति तर्हि।<br>
चिच्छबलिताद् विषयभानमपि तव<br>
स्यान्नतु पुरो मुकुर एव विपरीतम् ॥१३६॥

अथ यदि नायनरश्मिभिः सहान्तःकरणमपि मुकुरादितलात् पराग् यायात्, तर्ह्यतिप्रसज्येतेत्याह—चित्तमिति ॥ चित्तम् अन्तःकरणम्। चाक्षुषकरेण सह विषयदेशमादर्शतलात् पराग्भूयोपयातीति यदि, तर्हि चिच्छबलितात् चित्ताद् विषयदेशस्थितादादर्शपराग्देशावच्छेदेन विषयभानमपि स्यात्। चित्प्रतिफलनयोग्यचित्तवृत्तेर्विषयदेशावच्छेदेन सत्त्वाद् मुकुरप्रत्यग्रूपतया विपरीतं मुकुरपराग्विपरीतं पुरः अग्रे पुरुषाग्रे दर्पणतले भानं न स्यात्। सर्वत्र विषयप्रदेशावच्छेदेनैव प्रकाशदर्शनेन विषयपुरुषान्तरालदेशे विषयभानादर्शनेनान्तरालदेशेऽन्तःकरणवृत्तेस्तदवच्छेदकनायनरश्मेश्चातिविरलत्वेन चित्प्रतिफलनानर्हत्वकल्पनेन नयनकिरणाग्रभागावच्छेदेनव घनीभावस्वीकारेणान्तः-

करणवृत्तेरप्यग्रभागावच्छेदेनैव घनीभावाभ्युपगमेन तत्रैव चिदभिव्यक्तेः। इति दिक् ॥१३६॥

[70a] काचमणिभेदद्दगुपाधिगतशक्ते-
श्चाक्षुषमयूखनिजशक्तिपरिजृम्भात्।
5 दूरतरवस्तुविषयानुकृतिरर्वाग्
भाति मनसो विषयदेशगतिरोधात् ॥१३७॥

अथ विषयदेशे बाहेन्द्रियपरिणामे तत्र चित्तवृत्तौ सत्यां तत्र चित्स्फुरणेन तद्देश एव विषयभानमपेक्षितम्। एवं चादर्शतलात् पराग्देशावच्छेदेनान्तःकरणगमने तत्रैव विषयभानमपेक्षितमित्युक्तम्, तदयुक्तम्; अतिदूरस्थिते
10 वस्तुनि तदाकारे दृक्परिणामे काचमणिविशेषमयोपनेत्रलक्षणनलद्वारा जाते सति तत्रान्तःकरणगमनेन तद्वृत्तौ जातायामपि तत्प्रदेशावच्छेदेन सान्तःकरणवृत्तिश्चक्षुर्वृत्तिसमेता न चिद्भास्या, किन्तर्हि। विषयदेशादर्वागेव चिद्भास्या सर्वानुभवसिद्धोपाधिरूपनलमहिम्ना। एवमादर्शतलात् परागन्तःकरणगमनेन विषयदेशावच्छेदेन वृत्तौ जातायामपि न विषयप्रदेशावच्छेदेन
15 भानमपेक्षितम्, आदर्शोपाधिमाहात्म्येन काचनलस्थल इव विषयदेशावच्छिन्नपरिणामविशेषस्यादर्शतल एवोपसंहारेणादर्शतल एव भानसंभवादिति शङ्कां परिहरति—काचेति ॥ काचमणिभेदद्दगुपाधिगतशक्तेः काचभेदलक्षणो मणिभेदलक्षणश्च यो दृगुपाधिः नयनोपाधिर्नलादिः, तद्गता या शक्तिः, तस्या हेतोः। चाक्षुषमयूखनिजशक्तिपरिजृम्भात् नयनसम्बन्धिकिरणस्य स्वाभाविकी या शक्तिः,
20 तस्याः समुज्जृम्भणात् अधिकाभिव्यक्तेः। दूरतरवस्तुविषयानुकृतिः अतिदूरे विद्यमानं यद् वस्तु, तद्विषयानुकृतिः तदनुकरणम्, तदाकारपरिणामो भवति। नलगतशक्तेरेव चक्षुःप्रभाया विषयपर्यन्तगमनेऽपि तदवच्छिन्नान्तःकरणस्य विषयदेशपर्यन्तगमनप्रतिरोधाद् विषयदेशादर्वागेव बहुदूरेऽन्तःकरणवृत्तेरवस्थानात् सानुकृतिः परिणामोऽर्वागेव भवति। तथाच नयनोपाधि-
25 बलशक्तिश्चक्षुःप्रभाशक्तिमुन्मीलयति। तदुन्मीलनानुरोधेनान्तःकरणस्य विषयदेशगमनं रुणद्धि। इति विवेकः ॥१३७॥

[70b] वीक्षणरुचां विकृतयो विषयरूपा-
स्तं विषयदेशमतिलङ्घ्य हृदयेद्धाः ।
नैकसदनोपनयनाक्षिभवदोषै-
र्दृष्टिशिथिलीभवनतश्चिदभिवेद्याः ॥१३८॥

5 अथ विषयदेशादर्वागेव विषयाकारपरिणामभानवत् विषयदेशमुल्लङ्घ्यापि विद्यमानानां विषयस्यैकस्यानेकपरिणामानां दोषभेदादुपाधिभेदाद्वा ग्रहणं भवतीत्याह—वीक्षणेति ॥ काचमणिलक्षणोपनयनैर्नैकसदनैरनेकसदनसंयुक्तै-श्चतुरश्चवर्तुललक्षणोच्चरेखाभेदलक्षणानेकस्थानविशेषयुतैरक्षिभवदोषैश्च दृष्टि-शिथिलीभवनतः दृष्टेर्नयनरश्मेः शिथिलीभवनतः पृथक्करणतः । वीक्षणरुचाम्
10 नयनतेजसाम् । एकविषयरूपा विकृतयोऽनेकपरिणामाः । तं विषयदेशमतिलङ्घ्य इतस्ततो विद्यमानाः । हृदयेद्धाः विषयदेशातिलङ्घनेनैवान्तःकरणवृत्तिभिः समिद्धाः दीप्ताः । द्वारभूतान्तःकरणवृत्तिसत्त्वात् चिता बुद्ध्याऽन्तर्वर्तिन्या अभिवेद्याः प्रकाशमाना भवन्ति । इत्यर्थः । तथाचान्तःकरणवृत्त्यग्रभागे विद्यमानविषयपरिणामा एव प्रमातृचैतन्यवेद्याः । इति भावः ॥ ३८॥

15 [71a] सौरकिरणा मरकतादिमणीना-
मंशशबला इव दृशो द्युतिविशेषाः ।
पित्तमयपीतनिचयोपचितवेषाः
कम्बुरिह हाटकसदृक्ष इति भान्ति ॥१३९॥

अथ पीतः शङ्ख इत्यादिभानमपि पित्तद्रव्यसंवलितनयनप्रभापन्नमिति
20 सदृष्टान्तमाह—सौरेति ॥ दृशो द्युतिविशेषाः तेजोभेदाः । सौरकिरणा मरकत-पद्मरागमण्यादिसम्बन्धात् तदंशैर्नीलरक्तादिभिः शबला इव । पित्तमयपीत-निचयोपचितवेषाः पित्तद्रव्यमयो यः पीतद्रव्यसमुदायः, तेनोपचिताः समृद्धाः सन्तः शङ्खसंलग्नाः । कम्बुः शङ्खः । हाटकसदृक्षः सुवर्णसदृशः । इति भान्ति प्रकाशन्ते । तथाच पीतः शङ्ख इत्यादिज्ञानमपि पद्मरागादिसंपर्कवशसौर-

किरणयोगात् गृह्यमिदं रक्तमित्यादिज्ञानवत् पित्तद्रव्यसंवलितनयनकरवशाद् भवति। इति भावः ॥१३९॥

[71b] तीव्रतररोचिरखिलं विशदरूपे
नीलकुरुविन्दककुसुम्भवसनादौ।
5 व्यञ्जयति सक्तमनुरूपमनुरूपं
व्याप्यधवलारुणमुखानि निखिलानि ॥१४०॥

अथ तेजसः स्वसंपृक्तनीलपीतारुणादिपदार्थांशग्राहित्वं चक्षुषः पित्तद्रव्यसंवलितस्य दृष्टान्तत्वेनोपात्तं विशदयति—तीव्रेति॥ तीव्रतररोचिः स्पष्टतमं तेजः सावित्रादि सकलमपि। विशदरूपे निर्मलस्पष्टतरवर्णवति। नीलकुरु-
10 विन्दककुसुम्भवसनादौ नीलमणौ पद्मरागे कुसुम्भरञ्जितवस्त्रे, एवमन्येष्वपि मण्यादिषु। सक्तम् लग्नं सत्। अनुरूपमनुरूपम् योग्यं योग्यं यथा भवति तथा। निखिलानि समस्तानि। व्याप्यधवलारुणमुखानि अधवलम् नीलम्, अरुणमेतन्मुखानि वस्तूनि नानाविधवर्णानि व्यापीनि ब्रह्माण्डव्यापकान्यव्यक्तानि नीलादिवस्तूनि। व्यञ्जयति व्यक्तानि करोति। एवंच ब्रह्माण्ड-
15 व्यापीनि समष्टिभूतान्यव्यक्तानि पृथिव्यादीनि भूतानि, इन्द्रियादीनि च व्यष्टिरूपाणि तत्तज्जातीयानि व्यक्तानि तत्र तत्र स्वाभिमुखानि तानि व्यञ्जयेयुः। तथाच सवितृमण्डलं स्वाभिमुखं ब्रह्माण्डगतं तेजो व्यञ्जयति। चक्षुरपि स्वसंमुखं चक्षुरभिव्यञ्जयति। मण्यादिसक्तं तेजो मण्यादिरूपवदंशेन सहाभिव्यक्तं सत् स्वसम्मुखं तेजो व्यञ्जयद् नीलपीतारुणादिसंवलितमेव
20 व्यञ्जयति; स्वस्य तादृग्रूपत्वादिति विवेचनीयम्। इदं चाग्रे प्रतिकर्मव्यवस्थायां स्पष्टमुपपादयिष्यामः, तत एव सर्वमनुसन्धेयम् ॥१४०॥

[72a] दीधितिरनातपघना नयनजाता
श्यामलतमाण्डवलयाभिमुखयाता।
यादृगभवन्निबिडभावदृढरूपा
25 तादृगनुभात्युपरि सा धवलरूपा ॥१४१॥

अथ चक्षुःप्रभा स्वान्तःकरणवृत्तिद्वारा स्वप्रमातृसंवेद्या, नतु परसंवेद्यापि। पीतशङ्खस्थल एकस्य पित्तजुष्टनयनस्य शङ्खः पीतः, अपरस्य श्वेत एवानुभूयमान इति दर्शनादित्यर्थं विस्पष्टोदाहरणेन द्रढयति—दीधितिरिति॥ नयनजाता दीधितिः। अनातपे छायायां घना निबिडा सती। श्यामलतमाण्डवलया-
5 भिमुखयाता ब्रह्माण्डाभिमुखतेजोमण्डलविपरीतदिशि गता सती छायायामधस्ताद् यादृङ् मनुष्यस्तम्भादिरूपा निबिडभावदृढरूपा निबिडत्वेन अशिथिलत्वेन दृढरूपा भवति, तादृगेव मनुष्यस्तम्भादिरूपा। उपरि तेजोमण्डलविपरीतब्रह्माण्डादिरूपा दीधितिर्धवलरूपा श्वेतवर्णा भाति, नयनरश्मीनां पित्तद्रव्यसंवलने सति पीताऽपि भाति। एवं च स्वचक्षुःप्रभा स्वान्तःकरणवृत्तिद्वारा
10 स्वप्रमातृसंवेद्या। इति भावः ॥१४१॥

[72b] सप्तसु विभक्तिषु परेषु च पदेषु
स्पष्टयितुमाशु च परस्परविरोधम्।
युष्मदिति चास्मदिति चात्र समुपात्तं
सर्वमपि तत्पदविभेदमुपनेतुम् ॥१४२॥

15 एतावता प्रबन्धेन लोकसिद्धभ्रमस्वरूपमाक्षिप्यमाणसमाधीयमानाध्यासज्ञप्तये प्रायेण निरूपितम्। संप्रति युष्मदस्मत्प्रत्ययगोचरयोरित्यत्र युस्मदस्मत्पदसामान्यजन्यप्रत्यययोः परस्परविरोधस्फूर्तये परिग्रहाय युष्मदस्मच्छब्दानुकरणं कृतमित्याह—सप्तस्विति॥ प्रथमादिसप्तविभक्तिषु वचनभेदेनैकविंशतिविधासु वचनत्रयपुरस्कारेण क्रियमाणसमासतद्धितवृत्त्याचारा-
20 दिप्रत्ययान्तभेदभिन्नेषु परस्परविरोधमाशु स्पष्टयितुं भाष्ये युष्मदित्यस्मदिति शब्दानुकरणं कृतं युष्मदस्मच्छब्दविभेदान् सर्वानपि परिग्रहीतुम्। इत्यर्थः ॥१४२॥

[73a] वृत्तिफलयुग्मयुतिरत्र विषयत्वं
तद्युगयुतेर्विरह एव विषयित्वम्।

मुख्यविधया तु विषयत्वविषयित्वे
साधु जडता नजडता च कथनीये ॥१४३॥

अथेह—

"अपरोक्षचेतनपरागस्मत्प्रतियोगिनि भवेद् युष्मत् ।
अपरोक्षपराक्प्रत्यक्चेतनवृत्तिर्भवेदस्मत् ॥
अपरोक्षपराक्चेतनवृत्तिर्भवेद् भवच्छब्दः ।
प्रत्यक्त्वप्राधान्यादुत्तमपुरुषार्हमस्मत् स्यात् ॥
प्रत्यक्त्वतिरस्कारे नास्मच्छब्दः प्रयोक्तुमर्होऽपि ।
अपरोक्षपराक्त्वस्य प्राधान्ये युष्मदो वृत्तिः ॥
अपरोक्षपरोक्षपराग्भावप्राधान्यतो भवेद् भवच्छब्दः ।
प्रत्यक्त्वविवक्षातः पराक्त्वसञ्छादने भवेदस्मत् ॥"[1]

इति सकलन्यायवित्संमत्यनुरोधेन लोके युष्मत्पदमपरोक्षे चेतने पराचि चास्मदर्थप्रतिद्वन्द्विनि पराक्त्वप्राधान्येन बोधकं भवति—त्वया हि तुभ्यं दत्तमिति। अस्मत्पदं तु पुनरपरोक्षचेतने परागर्थसंवलिते प्रतीचि प्रत्यक्त्वप्राधान्येन बोधकं भवति—अहं बली भवामि, मयैव कर्तव्यमिति। युष्मदर्थ एवापरोक्षे तावदपरोक्षत्वोपमर्देन विवक्षिते परोक्षत्वे भवत्पदप्रवृत्तिः—भवान् नयज्ञः, भवता निर्णयमिति। तत्र प्रत्यक्त्वप्राधान्येन कृत्वोत्तमपुरुषार्हमहं करोमीत्युत्तमपुरुषार्हमस्मत्पदं यथायोगं प्रथमां विनाऽपि विभक्त्यन्तरेण प्रयोगार्हं भवति—मया कृतं मह्यं देयमिति। एवमस्मत्पदे प्रयोक्तुमर्हेऽपि प्रत्यक्त्वस्य विद्यमानस्यापि तिरस्कारे सति अयं जनः करोतीत्येव प्रयोगो भवेत्, नत्वस्मत्पदस्य प्रयोगः—अहं करोमीति। अपरोक्षे पराचि युष्मत्पदप्रयोगः—त्वं करोषि त्वया कृतमिति। वस्तुतोऽपरोक्षस्यैव परोक्षत्वपरिकल्पनेनापरोक्षत्वसमानाधिकरणे परोक्षत्वे सति पराक्त्वप्राधान्येन भवत्पदप्रवृत्तिः। अस्मदर्थभिन्नस्यापि पराक्त्वाविवक्षापूर्वकं प्रत्यक्त्वविवक्षायामस्मत्प[73b]दप्रयोग एव —एते वयम्, अस्माभिः कृतमिति। एवं चैवं लोके युष्मदस्मत्पदमर्यादा यद्यपि प्रसिद्धा ; तथाऽपि प्रकृते—युष्मदस्मत्प्रत्ययगोचरयोरित्यादेः इत्यतोऽस्मत्प्रत्ययगोचर इत्यादेश्च ग्रन्थस्य पुनरुक्त्यात्माश्रयादिदोषपरिहाराय पूर्वं युष्मदस्मदित्यादिवाक्यं व्याप्तिग्राहकोदाहरणपरम्, इत्यत इत्याद्युत्तरवाक्यमुपनयनिगमनपरम् ;

उदाहरणादिवाक्यत्रयेणाप्यनुमितिसिद्धेर्वाद्यन्तरसंमतत्वात्, युष्मदित्यादेर्ग्रन्थस्योदाहरणपरत्वात्। युष्मत्पदं चैतन्यांशमपहाय केवलपराक्त्वपरत्वेन विवक्षितार्थपरम्। अस्मत्पदं च प्रत्यक्त्वेन विवक्षितजडाजडपरम्। प्रत्ययगोचरत्वं च चैतन्ये फलव्याप्यत्वबाधाद् विषयविषय्युभयसाधारण्येन
5 वृत्तिव्याप्यत्वमेव लाघवाद् भवत्विति वक्तुमशक्यम्; सर्वत्रान्तःकरणवृत्तौ वृत्तिव्याप्यताया वक्तुमशक्यत्वात्, सर्वत्र वृत्तिगोचरवृत्तेरभ्युपगन्तुमशक्यत्वात्, अनवस्थापत्तेः, वृत्तेः केवलचैतन्यभास्यत्वेनाप्यनुव्यवसायादिकार्योपपत्तेः। न वा वृत्तिफलोभयव्याप्यत्वं गोचरत्वं विवक्षितुं शक्यम्; उभयव्याप्यत्वाङ्गीकारे गौरवात्, चैतन्ये फलव्याप्यताविरहादन्तःकरणवृत्ति-
10 विशेषे च वृत्त्यन्तरागोचरे फलव्याप्यतामात्रसत्त्वेनोभयव्याप्यताया बाधात्। अतो वृत्तिफलान्यतरव्याप्यत्वमेव गोचरत्वं विवक्षणीयम्। एवं च चैतन्ये वृत्तिव्याप्यत्वमेव, वृत्तिविशेषे च फलव्याप्यत्वमेव। अन्यत्र घटादावुभयव्याप्यत्वसत्त्वेऽप्येकव्याप्यतयैव वृत्तिचैतन्यस्थलवदुपपत्तेरुभयव्याप्यतालक्षणगुरुभूतगोचरत्वाङ्गीकारे नैव किञ्चित् प्रयोजनमिति दिक्॥

15 एवं विषयविषयिणोरित्यत्र विषय[74a]त्वं तावद् वृत्तिफलोभयव्याप्यत्वरूपम्, विषयित्वमपि तदुभयव्याप्यत्वविरहरूपम्। तत्रोदाहरणे वृत्तिविषयवृत्तिविशेषे तदुभयव्याप्यत्वविरहो निर्बाध एवेति विषयित्वं तत्र घटत एव। अत्र यद्यपि क्वचित् क्वचित् वृत्तिगोचराऽपि वृत्तिर्भवतीति तत्र तदुभयव्याप्यत्वसत्त्वेन तद्विरहो वक्तुं न शक्यः; तथाऽपि प्रकृते न काऽपि
25 हानिः; वृत्तिविषयवृत्तीनां घटादिवदुभयव्याप्यत्वाद् विषयत्वम्, वृत्त्यविषयवृत्तेस्तु तदुभयाव्याप्यत्वेन विषयित्वमिति तामेवोदाहरणभूतां वृत्तिमुपादाय यद्यद् विषयिविषयेभ्यो विविक्ततया परिगृह्यमाणं तत्र न विषयतादात्म्यादिभ्रमः, यथा वृत्त्यविषयभूता विषयतादात्म्यादिभ्रमानास्कन्दितेति व्याप्तिग्रहोपपत्तेः॥

30 अत्र तदुभयव्याप्यत्वमेव विषयत्वमेष्टव्यम्, नान्यतरव्याप्यत्वम्; चैतन्ये वृत्तिव्याप्यतासत्त्वेन विषयतापत्तेः, वृत्त्यविषयवृत्तिविशेषे च व्यभिचारग्रहस्थानभूतोदाहरणे फलव्याप्यतासत्त्वेन विषयतात्वापत्त्या विषयत्वविषयित्वयोः परस्परविरोधोक्तेरसाङ्गत्यापत्तेः। विषयित्वमपि न वृत्तिव्याप्यत्वविरहरूपम्; वृत्तिव्याप्यत्वविरहस्य वृत्त्यविषयवृत्तिविशेषे सत्त्वेऽपि

चैतन्येऽभावाद् वृत्तिविषयत्वाभावापत्तेः। नापि फलव्याप्यत्वविरहात्मकम्; फलव्याप्यत्वविरहस्य च विषयित्वस्य चैतन्ये सत्त्वेऽपि वृत्त्यविषयवृत्ति-विशेष उदाहरणभूते फलव्याप्यत्वविरहाभावेन व्याप्तिग्रह एव न स्यादित्यनु-मानपरत्वाभावादस्य ग्रन्थस्य प्रोक्तपुनरुक्त्यादीनामनुद्धारापत्तेः। अत उदा-
5 हरण[74b]वचसि तदुभयव्याप्यत्वमेव विषयत्वम्, तदुभयव्याप्यत्वविरह एव विषयित्वमिति समादृतकल्प एव रमणीय इति दिक्॥

इत्यतोऽस्मत्प्रत्ययगोचर इत्यादौ तु चैतन्यमेवैकमजडत्वाद् विषयि, जड-सामान्यं विषय इति विभजनीयम्। एवं चोदाहरणवाक्ये युष्मदित्यादावन्तः-करणवृत्तिविशेषे वृत्त्यन्तराविषये फलव्याप्यत्वमात्रस्य चैतन्ये वृत्तिव्याप्यत्व-
10 मात्रस्य च सत्त्वेऽपि वृत्तिव्याप्यत्वफलव्याप्यत्वयोर्द्वयोरप्यभावेनोभयाभाव-प्रयुक्तं विषयित्वं चैतन्यवृत्त्यविषयान्तःकरणवृत्तिविशेषसाधारणं भवति। तत्रान्तःकरणवृत्तिविशेषस्य जडभूतस्यापि पराचः प्रत्यक्त्वं चैतन्यसंवलने-नोदाहरणसिद्धये गौणं विवक्षितम्। एवं वृत्तिफलोभयव्याप्यत्वलक्षणं विषयत्वं घटदेहबाह्येन्द्रियादाववितथमेव। तथाच यत्र यत्र विषयविषयि-
15 भावश्चैतन्यविशिष्टवृत्त्यन्तराविषयान्तःकरणवृत्तौ घटपटादौ च, तत्र तत्र विरुद्धधर्माक्रान्ततया स्पष्टं प्रतीयमानत्वेन न तादात्म्यादिभ्रम इति व्याप्ति-ग्रहात् चैतन्येऽजडे विषयिणि विषयाणां जडानां परस्परविरुद्धधर्मवत्त्वेन प्रतीयमानानामन्तःकरणादीनां तादात्म्याद्यध्यासोऽनुपपन्न एवेत्यनुमीयत इति प्रघट्टकयुष्मदित्यादेर्भाव इति न पुनरुक्त्यादिरिति वक्ष्यमाणत्वात्।
20 तत्रोदाहरणवाक्ये युष्मदित्यादावुपनयनिगमनवाक्ये च इत्यतोऽस्मत्प्रत्ययगोचर इत्यादौ विषयविषयिभावभेदं विवक्षितं दर्शयति—वृत्तीति॥ अत्र उदाहरणपरे युष्मदित्यादौ। वृत्तिफलयुग्मयुतिः वृत्तिफलोभयव्याप्यत्वं विषयत्वं विवक्षितम्। तद्युगयुतेः वृत्तिफलोभयव्याप्यत्वस्य। विरह एव अभाव एव। विषयित्वं विवक्षितम्। तथाच घटादीनामुभयव्याप्यत्वसत्त्वाद् विषयत्वम्। इदं चोभय-
25 व्याप्यत्वं न वृत्त्यविषयान्तःकरणवृत्तौ, न वा चैतन्ये; तद्वृत्तौ केवलफल-व्याप्यतायाश्चैतन्ये केवलवृत्तिव्याप्यतायाश्च दर्शनात्। एवं च निरुक्त-वृत्तिविशेषे चैतन्ये चान्यतरव्याप्यत्वसत्त्वेऽप्युभयव्याप्यत्वाभावाद् विषयित्व-मेव। एवं च विषयविषयिणोर्द्वयोरपि युष्मदस्मत्प्रत्ययविषयत्वसत्त्वेऽपि निरुक्तरीत्या वैवक्षिकविषयविषयिविभागे न काऽप्यनुपपत्तिरिति भावः।

मुख्येति ॥ इत्यतः इत्यादिवाक्य उपनयनिगमनपरे मुख्यविषयता तु न वैवक्षिकरीत्या । विषयत्वविषयित्वे जडता नजडता च साधु कथनीये । नजडतेति नसमासः । अजडतेति यावत् । तथा चोपनयादिवाक्ये विषयत्वविषयित्वे जडत्वाजडत्वलक्षणे मुख्ये विद्यमाने तु कथनीये, न वैवक्षिके । इत्यर्थः ॥१४३॥

5 [75a] चेतनपराक् कथयिता हि कथनीयो
युष्मदिति विश्रुतगिरा निखिललोकैः ।
अस्मदिति शब्दपरिबोध्य इह वक्ता
प्रत्यगपि चेतन इति स्फुटमुपेतम् ॥१४४॥

अथोदाहरणवाचि युष्मदस्मदर्थौ लोकविलक्षणावेवेति वक्तुं लोकप्रसिद्धौ 10 युष्मदस्मदर्थौ विशदयति—चेतनेति ॥ निखिललोकैर्युष्मदिति प्रसिद्धपदेन चेतनपराक् प्रतियुगपरोक्षं वस्तूक्तं भवति । चेतनं सत् पराक्प्रतियुक् अस्मच्छब्दार्थप्रतियोगिभूतमपरोक्षं वस्तु निगदितं भवति ; "अपरोक्षचेतनपरागस्मत्प्रतियोगिनि भवेद् युष्मदि"[1]ति न्यायविदामभ्युपगमात् । एवमपरोक्षमपि प्रत्यगपि चेतनमपि वस्तु अस्मदितिपदेन गम्यं लोकैः समुपेतम् 15 अङ्गीकृतम् ; "अपरोक्षपराक्चेतनवृत्तिर्भवेदस्मदि"[2]ति वृद्धसंमतेः ॥१४४॥

[75b] अत्र तु परागिति विवक्षितमुपेयं
युष्मदभिधेयमथवाऽस्मदभिधेयम् ।
प्रत्यगिति लिखितमिति प्रकृतभाष्ये
भाष्यमुचितान्वयसमर्थनसमर्थैः ॥१४५॥

20 अथ लोकप्रसिद्धयुष्मदस्मदर्थविलक्षणावेव युष्मदित्यादिप्रकारेण विवक्षिताविति दर्शयति—अत्र त्विति ॥ प्रकृते चेतनांशमपहाय परागर्थमात्रं युष्मत्पदाभिधेयं विवक्षितम् । अस्मत्पदाभिधेयं तु प्रत्यक्त्वेन विवक्षितवस्तुमात्रं भवति । भाष्येऽस्मिन् समुचितान्वयसमर्थनदक्षैर्जनैरुक्तरीत्या भाष्यं कथनीयम् । तथा चोदाहरणवाचि विषयविषयिभावो वैवक्षिकः, उपनयादि15 वाक्ये तु मुख्य एव । इति दिक् ॥१४५॥

अस्मदिति चित्सकलदेहसमुदायो-
ऽबोधि विषयीति सचितिः करणवर्गः ।
व्याप्तिरुदितेति वचसः प्रथममन्ते
साध्यपरिसाधनमिहाश्रयविशेषे ॥१४६॥

5 [76b] उक्तविपरीतविषया वदति युष्म-
द्वाग्विषयगीश्च तदनु प्रतिपदौ ये ।
तद्विषयते खलु परस्परविरुद्धे
तद्वदुभयैक्यविषया मतिरयुक्ता ॥१४७॥

[76a] अथ युष्मदस्मदित्यादिभाष्य इतरेतरभावानुपपत्तौ सिद्धायामित्यादा-
10 वितरेतरभावस्तादात्म्यादिलक्षणस्तदनुपपत्तिरिति पदेनानूद्य, इति पदेनाध्ये-
ऽध्यासे वाऽध्यासप्रत्याख्याने वा हेतुः क्रियते। तादात्म्याद्यनुप-
पत्तिरध्यासे हेतुः, न प्रत्याख्याने। तथाच प्रत्याख्याने हेतुर्नोक्त इति
न्यूनता। तादात्म्याद्यनुपपत्तौ तमःप्रकाशवद् विरुद्धस्वभावत्वलक्षणकारण-
वर्णनमप्यसङ्गतम्; अविरुद्धयोरपि घटयोः शुक्तिरजतयोश्च तादात्म्या-
15 दर्शनात्, तादात्म्यानुपपत्तौ परस्परभेदस्यैव कारणत्वौचित्यात्, विरुद्धत्वेन
ज्ञायमानयोस्तादात्म्यादिप्रत्ययो लोकानुभवसिद्ध इति। इतरेतरभावपदस्येत-
रेतरतादात्म्यादिज्ञानपरत्वे इतरेतरभावानुपपत्तिरित्यन्तेनैवाध्यासानुपपत्तिप्रति-
पादनाद् इत्यत इत्यादि चाध्यासानुपपत्तिहेतोरध्यासानुपपत्तिरित्यात्माश्रय-
ग्रस्तम्; पूर्ववाक्येनैवाध्यासखण्डने पुनरध्यासखण्डनं पुनरुक्त्यावहं चेत्यादि-
20 दोषान् प्रागुट्टङ्कितान् परिहरति द्वाभ्याम्—अस्मदितीति ॥ उक्तेति ॥ अस्मदिति
पदेन चित्सकलदेहसमुदायः चैतन्यकारणसूक्ष्मस्थूलदेहसमुदायः। अबोधि बोधि-
तम्। विषयीतिपदेन सचितिः चैतन्यसमेतः। करणवर्गः इन्द्रियगणः।
अबोधि प्रतिपादितः। युष्मद्वाग् उक्तविपरीतविषया वदति उक्तास्मच्छब्दार्थप्रति-
योगिनं ब्रवीति। विषयगीरपि विषयिविपरीतार्थं कथयति। युष्मदस्मदि-
25 त्यादिभाष्ये इत्यत इतीतिवचसः प्रथमं व्याप्तिरुदिता भवति। युष्मद-
स्मत्पदजनितविरुद्धार्थावगाहिप्रत्ययविषयतया विषयविषयिभावेन च प्रतीय-

मानत्वात् तादात्म्यभ्रमः परस्परधर्मसामानाधिकरण्यभ्रमश्चानुपपन्नः, यथा देहवर्गस्यास्मत्पदार्हस्य युष्मत्पदार्हस्य बाह्यघटादेश्च ; इन्द्रियवर्गस्य विषयिणो घटादेर्विषयस्य च तादात्म्यादिज्ञानानुदयात्। तथा च यत्र यत्र विरुद्धधर्मवत्त्वेन ज्ञायमानता, तत्र न तादात्म्यादिभ्रम इति व्याप्तिरितिपदात् पूर्वं प्रदर्शिता
5 भवति। इति वचसोऽन्ते पुनराश्रयविशेषे आत्मत्रिविधदेहलक्षणपक्षे। साध्यपरिसाधनम् तादात्म्यादिप्रतीत्यभावसाधनम्। इह युष्मदित्यादिभाष्ये भवति। इति भावः। एतदेव विशदयति—तदन्विति॥ तदनु युष्मदस्मद्विषयविषयित्वमनुसृत्य। ये प्रतिपदौ ज्ञाने भवतः। तद्विषयते च आत्मदेहगते। परस्परविरुद्धे भवतः एवं च विरुद्धत्वेन प्रतीयमानपदार्थद्वयावगाहिबुद्धि-
10 द्वयविषयत्ववदुभयपदार्थैक्यावलम्बिनी बुद्धिरयुक्तैवेत्यर्थः। तथाचानुमानपरमिदं भाष्यमादाविति पदस्य सामान्यरूपेण यो यो धूमवान् सोऽग्निमानितिवद् व्याप्तिप्रदर्शनं युष्मदस्मत्पदजनितप्रत्ययगोचरत्वविषयविषयित्वादिविरुद्धधर्मकं न तादात्म्यमतिविषयः, तमःप्रकाशवदिति। तदनन्तरमित्यतोऽस्माद् व्याप्यदर्शनात् चिदात्मदेहयोर्न तादात्म्यमिति पक्षे साध्योपसंहारः।
15 इति भावः ॥१४६॥१४७॥

[77a] भासयति भासुरतरा स्वयमशेषं
भास्यमिह सर्वविधयाऽपि पृथगेव।
दृक् तदथ दृश्यमविभिन्नमिव कस्मात्
स्वेन परिबोधयति निर्मलशरीरा ॥१४८॥

20 अथ विरुद्धधर्मवत्त्वेन ज्ञायमानयोस्तादात्म्यादिमतिर्नोपपद्यत इत्युक्तम्, तत्र चिदचितोर्विरुद्धधर्मवत्त्वेन ज्ञायमानतैव कथमित्याशङ्कां परिहरति—भासयतीति॥ दृक् चितिः। स्वयं भासुरतरा स्वयंप्रकाशा सती। भास्यमशेषम् समस्तं जडवर्गम्। इह प्रपञ्चे। सर्वविधयाऽपि सर्वप्रकारेणापि। स्वात्मनः पृथगेव भासयति। एवं च निर्मलशरीरा सा चित् स्वेनाविभिन्नमिव
25 दृश्यम् देहादि। कस्मात् परिबोधयति केन हेतुना बोधयति। स्वयंप्रकाशरूपायाश्चितः सर्वांशप्रकाशकत्वेन भेदस्य सर्वप्रकारेणापि प्रतीयमानत्वादभेदभ्रमो न भवेदेव। इति भावः ॥१४८॥

[77b] धर्मियुगलैक्यविषयभ्रमनिमित्तो
धर्मयुगलैक्वसतिभ्रम इतीह ।
ससप्तमिकया प्रथमयाऽप्यनुपपत्ती
साध्वभिहिते भगवतेतिपद्योगे ॥१४९॥

5 **अथ** इतरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणां च सुतरामितरेतरभावानुपपत्ति**रितीति भाष्ये सप्तमीप्रथमाभ्यामनुपपत्त्योर्निर्देशो हेतुहेतुमद्भावपर्यवसायीति दर्शयति** —धर्मीति ॥ **धर्मिणोर्द्वयोः परस्पराध्यासो धर्मद्वयस्य परस्परधर्म्यवस्थानभ्रमे हेतुरिति धर्म्यध्यासे सप्तमी, धर्माध्यासे च प्रथमा श्री श ङ्क र** भगवता **साध्वे-वेतीतिपदपरामृश्ये निविष्टे । इति गोलार्थः** ॥१४९॥

10 ताम्रगतकालिमसमं मलमनादि
व्यापिसुखरूपचितिसंवरणदक्षम् ।
तेन जडकल्प इह जीव इति पक्षे-
ऽध्यासवपुषो भवति सिद्धिरमुधाद्धा ॥१५०॥

**अथ** तथापीत्यादि**सिद्धान्तभाष्यं विवेचयति** — ताम्रेति ॥ अनादि **अविद्याख्यं**
15 मलम् । ताम्रगतकालिमसमम् **ताम्राश्रितकलङ्कतुल्यम् ।** व्यापिसुखरूपचिति-संवरणदक्षम् **व्यापिनी सुखरूपा या चितिः संवित्, तदावरणे दक्षम् समर्थं भवति । एवं चैतन्यावलम्बेनाविद्यामलमनादिभूतं चितिमयज्ञानसुखाद्यावरण-समर्थं तिष्ठतीत्यर्थः ।** तेन **मलेन ।** जीवः **चेतनरूपः ।** जडकल्पः **ईषदूनजडः । संप्रति जड एव, परन्तु कालान्तरेऽविद्याविलये तिरस्कारे च चैतन्याभि-**
20 **व्यक्तेर्जडकल्प इत्युक्तम् । एवं च** इह **संसारमण्डले । जीवो जडकल्पो भवतीति** पक्षे । अध्यासवपुषः **भ्रमशरीरस्य ।** अद्धा **सम्यक् ।** अमुधा **सफला** सिद्धिर्भवति । **इत्यर्थः । अत्र भ्रमस्य साफल्यं च पञ्चकोशविवेचनेन श्रौतेन निवर्त्यतया परमपुरुषार्थसिद्धौ द्वारत्वात् । इति भावः** ॥१५०॥

[78a] सूक्ष्मवपुरादिरहितं विविधकर्म
25 स्फारतरभावनमुपेतमलसक्तम् ।

स्थूलतनुदीप्तमभिभावयति किञ्चि-

न्मूलमललेशमिति भाति वपुरैक्यम् ॥१५१॥

अथ मलेन जडीभूतस्य जीवस्य कथं संसारव्यवहारसाधनीभूतज्ञानसिद्धिः, इतरथा पाषाणवत् क्वापि जीवप्रवृत्तिरेव न स्यादित्याशङ्क्य संसरणोपयुक्त-
5 ज्ञानसिद्धिमुपपादयति—सूक्ष्मेति ॥ उपेतमले जीवे सक्तम् सम्बद्धम् । आदिरहितम् जन्यमपि सूक्ष्मरूपेण सन्ततमवस्थानादनादि । विविधकर्म नानाकर्माश्रयीभूतम् । स्फारतरभावनम् अतिविशालवासनारञ्जितम् । सूक्ष्मवपुर्भवति ; सूक्ष्मदेहस्यानादित्वाभावे फलजनककर्मणां वासनानां च निराश्रयतापत्तेः । अतः कर्माद्याश्रयतया सूक्ष्मरूपेण सूक्ष्मशरीरमनादि । इति भावः । एवं चेदं सूक्ष्म-
10 शरीरं स्थूलतनुदीप्तं सत् स्थूलदेहाभिव्यक्तं सत् । चिदावरकं मूलमललेशम् किञ्चिदभिभावयति । तेन संसारव्यवहारानुकूलज्ञानसिद्धिः ; सम्यक्तया मलानभिभवात् । भेदांशाप्रतीत्या वपुरैक्यम् त्रिविधशरीरैक्यं चिति भाति ; संसारव्यवहारहेतुतया गौरोऽहम्, ब्राह्मणोऽहम्, कर्ताऽहमित्यादिज्ञानस्यावश्याभ्युपेयत्वात् । एवं च सर्वांशे मलानभिभवाद् भ्रमः संसारहेतुः सिद्ध्ये-
15 देव । इति भावः ॥१५१॥

[78b] उन्मिषितवित्तिकलिकाकलनहेतो-

र्भाति हि जडाजडमनेकमपि चैकम् ।

प्रावृतिवशेन मलिना चिदसमर्था

भासयति नो खलु जडाजडविभेदम् ॥१५२॥

20 अथ सूक्ष्मेति श्लोकोपात्तमेवार्थं विशदयति—उन्मिषितेति ॥ स्थूलदेहाभिव्यक्तसूक्ष्मदेहमहिम्ना उन्मिषितवित्तिकलिकाकलनहेतोः अभिव्यक्ता या ज्ञानकलिका ज्ञानैकदेशः तत्कलनहेतोः तत्सम्बन्धलक्षणहेतोरनेकमपि जडाजडमेकमेव भवति । ननु चिति सत्यां जडाजडभेदः कुतो न प्रतीयत इत्याशङ्कां परिहरति —प्रावृतीति ॥ अविद्यालक्षणावृतिसत्त्वात् चित्तावद् मलिना अनभिव्यक्तज्ञाना-
25 ऽखिलशास्त्रत एवासमर्था जडाजडविभेदं नो खलु भासयति न भासयत्येव । तथाच ज्ञानावरणमाहात्म्याद् जडाजडसङ्कलनादभेदभ्रमो भवत्येव । इति भावः ॥१५२॥

क्षीरमिति नीरमिति नो खलु विविक्तिः
शक्तिविरहेण परिमेलनवशेन ।
संवलितयोश्चिदचितोर्नहि विवेकः
प्रावृतिनिरुद्धचितिशक्तिकतयैव ॥ १५३ ॥

5 अथ ज्ञानशक्तेरविद्यामलस्य कुण्ठितत्वादविद्यमानभेदस्यापि भेदकत्वं नेत्यत्र दृष्टान्तं दर्शयन्नुक्तामेव रीतिं विशदयति—क्षीरमितीति ॥ नीरक्षीरयोः परिमेलनवशेन संमेलनहेतुपारवश्येन हंसातिरिक्तस्य विवेचनशक्तिविरहाद् इदं क्षीरम्, इदं नीरमिति विविक्तिः विवेचनम् पृथक्करणं नो खलु भवति । ज्ञाने सर्वविवेचकत्वसामर्थ्यसत्त्वेऽपि प्रावृतिनिरुद्धचितिशक्तिकतयैव अविद्यावरण-
10 निरुद्धज्ञानशक्तिकत्वेनैव हेतुना पुरुषस्यानादितः संवलितयोश्चिदचितोर्विवेकः विवेचनं न हि भवति । तथाच हंस इव निवृत्ताविद्यामल एव सर्वं विवेचयेत्, नतु साविद्यः । इति भावः ॥१५३॥

[79a] ऐक्यमतिरेषु सकलानुभवसिद्धा
सा प्रमितिरेव न भवेद् विषयहान्या ।
15 भ्रान्तिरपि नो भवितुमर्हति यतश्चि-
न्निर्मलतमाऽखिलविभेदगमयित्री ॥१५४॥

अथ पूर्वं चितो निर्मलतरत्वेन सर्वावभासकतया जडाजडयोर्भेदस्य जडत्वाजडत्वयोर्विरोधस्य च भासनेन यद्विरुद्धधर्मवत्त्वेन ज्ञातम्, तत्र न तादात्म्यादिमतिः संभवतीति व्याप्तेरात्मनो देहस्य च विरुद्धधर्मवत्त्वेन ज्ञातत्वात्
20 तादात्म्यमतिर्न भवतीत्यनुमानपरतया पुनरुक्तिपरिहारः पूर्वपक्षभाष्ये समाहितः । संप्रति प्रकारान्तरेण यथा पुनरुक्तिर्न भवति तथा योजयति—ऐक्येति ॥ एषु चित्कारणसूक्ष्मस्थूलदेहेषु । अज्ञोऽहम्, कर्ताऽहम्, भोक्ताऽहम्, ब्राह्मणोऽहम्, गौरोऽहमित्याद्यनुभवस्य सर्वजनसाधारणस्य सत्त्वेनैक्यमतिरवश्याभ्युपेया भवति । सा मतिः प्रमैव न भवति । विषयहान्या विषयहानेः, चिज्जडयोर-
25 भेदबाधात् । नच—जात्यैक्यविषया सा प्रमितिर्भवत्विति—वाच्यम् ;

परस्परविभाजकोपाधिमत्त्वेन तमःप्रकाशवदैकसाजात्यस्याप्यभावात्। तथाच युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाशवद् विरुद्धस्वभावयोः ऐकजात्यरहितयोः परस्परमितरेतरतादात्म्यानुपपत्तौ सत्यां तद्धर्माणां च सुतरां परस्परसामानाधिकरण्याद्यनुपपत्त्याऽभेदज्ञानं प्रमा न भवेदेव। इति अस्माद् हेतोः
5 अस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासः, तद्व्यत्ययेन विषयिणस्तद्धर्माणां च विषयेऽध्यास इत्येष्टव्यम्; विषयबाधे सर्वजनसिद्धस्य ज्ञानस्य भ्रमत्वौचित्यात्, इति भ्रान्तिरपि नो भवितुमिहार्हति, तदेतदाह—अध्यासो मिथ्येति भवितुं युक्तमिति॥ अध्यासो नास्तीति भवितुं युक्तमित्यर्थः॥ यतः हेतोः। चित् चैतन्यम्। निर्मलतमा अत्यन्तनिर्मला
10 सती चिज्जडादिभेदं सकलं गमयितुं समर्था भवति, अतो भेदप्रतीत्याऽध्यासोपपादनं कर्तुमशक्यम्। इति भावः॥१५४॥

[79b] दोषरहिता चिदखिलावगमहेतु-
भेदगमिकेति भवति प्रथमकल्पः।
प्रावृतियुता हृदभिभूतमललेशा
15 भेदमवबोधयति नेति परकल्पः॥१५५॥

अध्यासप्रत्याख्यानभाष्यस्य तथापीतिसिद्धान्तभाष्यस्य च सङ्ग्रहेण पूर्वोत्तरार्धाभ्यां भावं दर्शयति—दोषेति॥ दोषरहिता अतिनिर्मला चित्। अखिलपदार्थानामवगमे प्रकाशने हेतुर्भेदमपि चिज्जडयोर्गमयेदिति चिज्जडभ्रमो न भवति, ईशवत् इति पूर्वः पक्षः। जीवचितिरनादिप्रावृत्या अविद्यया युता
20 प्रावृता। अत एव जडकल्पा, पश्चाद् लिङ्गशरीरसम्बन्धात् तद्गतहृदन्तःकरणेनाभिभूतमललेशा तिरस्कृताविद्यामललेशा जडांशबोधिकाऽपि सर्वांशेऽप्यविद्यायास्तिरस्काराभावात् चिज्जडभेदं नावबोधयति, किन्तु तादात्म्यमेवावबोधयति; इतरथेशवत् सर्वांशेन सर्वं भासेत, न तथा भासत इति सिद्धान्तपक्षः। इत्यर्थः॥१५५॥

25 [80a] प्रावृतिचितोर्युतिरनादिरवधेया
लिङ्गतनुसङ्गतिरपीह तदधीना।

कर्म च ससंहननवासनमनेकं
बीजकलिताङ्कुरमिवाविरतरूपम् ॥१५६॥

अथ नैसर्गिकोऽयं लोकव्यवहारः स्वाभाविको लोकव्यवहार इति व्यवहारे स्वाभाविकत्वं तद्धेतुस्वाभाविकत्वायत्तम्, तद्धेतोश्च स्वाभाविकत्वमनादित्व
5 एव भवतीति हेतुपरम्परायाः स्वाभाविकतां दर्शयति—प्रावृतीति ॥ प्रावृतेः अविद्यायाश्चितेश्च युतिरनादिरेव ज्ञेया, एवं च पुरुषस्य लिङ्गशरीरसङ्गतिः तदधीना अविद्यापुरुषसम्बन्धाधीना सती। अनादिरिह शास्त्रेऽवधेया भवति। अत्र लिङ्गदेहपुरुषसम्बन्धस्याविद्यापुरुषसम्बन्धाधीनत्वं पुरुषेऽविद्यासत्त्व एव; अविद्यया सत्त्वचिदानन्दावरणे कृते सत्येव लिङ्गदेहयोगात्, अविद्यानाशे
10 च लिङ्गदेहसम्बन्धापगमस्य सकलश्रुतिशिरस्सिद्धत्वात्। यद्यपि लिङ्गशरीरं कारणाधीनत्वाज्जन्यम्; तथाऽपि सकलभोगसाधनीभूतकर्मवासनाश्रयत्वात् अनादिभवस्य कर्मवासनाधीनत्वात् तदाश्रयीभूतं जन्यमप्यामुक्ति विद्यमानमनाद्येव, सूक्ष्मदेहाभिव्यक्तयंशस्तु प्रवाहानादिः। इति भावः। ससंहननवासनम् संहननेन स्थूलदेहेन वासनया च सहितम्। कर्म चानेकम् नानाविधम्।
15 बीजकलिताङ्कुरमिव बीजादङ्कुरमङ्कुराद्बीजमिति रीत्या। अविरतरूपम् सन्ततरूपम्, प्रवाहानादिरिति यावत्। तथा चाविद्यासम्बन्धादीनामनादित्वात् स्वाभाविकत्वेन लोकव्यवहारोऽपि नैसर्गिकः। इति भावः ॥१५६॥

[80b] विभ्रमनिदानमितरेतरविवेका-
भाव इति भाष्यवचने विशदमेव।
20 धर्मयुतधर्मियुगलस्य कथनेन
भ्रान्तिरुदिता सकरणा द्विविधरूपा ॥॥१५७॥

अथ तथाऽपीत्यादिभाष्यं व्याचष्टे—विभ्रमेति ॥ इतरेतरविवेकाभावः परस्परभेदग्रहाभावः। विभ्रमेति। विशिष्टो यो भ्रमः स विभ्रमः, निरुपाधिक इति यावत्। विभ्रमे निदानम् मूलभूतं कारणमिति भाष्य एव स्पष्टं भवति।
25 तत्र तथा व्याख्येयांशो नास्तीत्यर्थः। अत्यन्तविविक्तयोः अत्यन्तभिन्नयोर्धर्मि-

धर्मिणोः इतरेतराविवेकेन **परस्परभेदाग्रहेणा**न्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य **आरोप्य। इत्यन्वयः।** अथ धर्मधर्मिणोरित्यस्य **पूर्वग्रन्थानुरोधेन विग्रहप्रकारं दर्शयति**—धर्मेति ॥ धर्मयुतधर्मियुगलस्य कथनेन **धर्मधर्मिणोरिति कथनेन। आक्षेपभाष्ये**—विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिः, इति विषयिणि चिदात्मके विषयस्य तद्धर्माणां चाध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां चाध्यास इति। **सिद्धान्तपरे** तथापीत्यत्र **भाष्ये** अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति **धर्म्यभेदाध्यासो धर्मसंसर्गाध्यासश्चेति** द्विविधरूपा **गदिता** भ्रान्तिः इतरेतराविवेकेनात्यन्तभिन्नयोर्धर्मधर्मिणोरित्यनेन सकरणा **ससाधना** उदिता **कथिता। इत्यन्वयः। पूर्वम्**—अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति **धर्म्यध्यासधर्माध्यासयोः प्रस्तावात् तत्साधनीभूतेतरेतराविवेकाग्रहस्थलेऽपि धर्मयोर्धर्मिणोरिति निर्देष्टव्ये** धर्मधर्मिणोरिति **निर्देशाद् विग्रहभेदो विवक्षितः—धर्माभ्यां सहितौ धर्मिणौ धर्मधर्मिणाविति। तथाच धर्मयोर्धर्मिणोरित्यर्थ इति न पूर्वोत्तरासाङ्गत्यम्। इति भावः** ॥१५७॥

[81a] सत्यनिनदानृतगिरौ नियतबन्धा-
देकविषयत्ववशतो मिथुनरूपे।
भ्रान्तिविचिते परिकलय्य ननु कर्ताऽ-
हं द्विजवरोऽहमिति भूरिजनवादः ॥१५८॥

**अथ** सत्यानृते **इत्यादिभाष्यं व्याचष्टे**—सत्येति ॥ सत्यनिनदानृतगिरौ **सत्यशब्दः सत्यपदार्थगर्भः शब्दोऽहमित्यादिलक्षणः, अनृतगीः सत्यप्रतियोगित्वेन श्रुतिषु गीयमानप्रपञ्चबोधकशब्दः। तयोर्द्वन्द्वः— सत्यनिनदानृतगिरौ।** एकविषयत्ववशतः **एको विषयो ययोस्ते एकविषये, तत्त्वमेकविषयत्वम् एकपदार्थप्रवृत्तत्वम्, तद्वशतः।** नियतबन्धात् **नियतसम्बन्धात् सामानाधिकरण्यलक्षणात्।** भ्रान्तिविचिते **भ्रान्त्या सङ्गृहीते** मिथुनरूपे **द्वन्द्वरूपे।** परिकलय्य **परिगृह्य। अहं** कर्ता, **अहं विज्वरः, अहं विद्वानित्येवंलक्षणे** भूरि **अधिकं यथा भवति तथा** जनवादः **लोकव्यवहारो भवति। अयमाशयः—चिदविद्यासूक्ष्मदेहस्थूलदेह-**

समुदायः सत्यानृतं केवलं जडस्वरूपं तयोर्गिरौ मिथुनात्मके भ्रान्तिकृतेऽह-
मिति प्राथमिकाध्यासविषयीभूते चैतन्यस्वरूपे स्थूलोऽहम् कृशोऽहम्,
ब्राह्मणोऽहमित्याद्यध्यासे सति श्वेतो घट इत्यादिवत् कर्ताऽहम्, ब्राह्मणो-
ऽहमित्यादिपदद्वयमध्यासपरवशां सदेकस्मिन्नर्थे प्रवृत्तेर्मिथुनीभूतं भवति। तद-
5 वलम्बेन च कर्ताऽहमित्यादिलोकव्यवहारः। इति दिक् ॥१५८॥

[81b]　आदिमविपर्ययतनौ मिथुनरीत्या
न व्यवहृतिर्भवितुमर्हति परन्तु।
एकपदतोऽहमिति धर्मिपरसत्ता-
मात्रमवलम्ब्य नहि तत्र गुणलिप्सा ॥१५९॥

10 अथादिमाध्यासे धर्मितावच्छेदकविशिष्टधर्मिपरे न मिथुनरीत्या व्यवहारः;
मिथुनस्य धर्मद्वयविशिष्टार्थावलम्बेन प्रवृत्तेः, प्राथमिकाध्यासस्यैकधर्मिता-
वच्छेदकावलम्बेन निष्पत्तेः, गोपुरारामगृहादिस्थलेष्वनेकजातीयपदार्थ-
समुदाय एकं धर्मं कञ्चन धर्मितावच्छेदकीकृत्यैव गोपुरवनादिनामप्रवर्तनात्
प्रकृतेऽपि "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः"[1] इत्यादिप्रमाणानुसारेण
15 चिदविद्यासूक्ष्मस्थूलदेहसमुदायेऽहन्त्वं धर्मितावच्छेदकीकृत्याहमितिपदप्रवर्त-
नादिति निर्दिशति—आदिमेति॥ आदिमविपर्ययतनौ आद्यविभ्रमशरीरे चिद-
विद्यासूक्ष्मस्थूलदेहैक्यभ्रमतनौ। मिथुनरीत्या शब्दद्वयावलम्बेन व्यवहारो
भवितुं नार्हति, परन्तु धर्मिपरसत्तामात्रमवलम्ब्याहमित्येकपदेन व्यवहार-
मर्हति। यत्र गुणलिप्सा, तत्र पदद्वयेन व्यवहारो भवति, प्रकृते तु
20 धर्मिसत्तामात्रावलम्बिन्यध्यासे गुणलिप्साभावाद् न पदद्वयेन मिथुनरीत्या
व्यवहारः। इति भावः ॥१५९॥

[82a]　भ्रान्तिरिह धर्मिविषयाऽन्वयमुपेयात्
केवलजनव्यवहृतौ मिथुनहीनम्।
धर्मविषया तु मिथुनं समवलम्ब्या-
25 ध्याहृतचकारकलितैव कमनीयम् ॥१६०॥

अथ अत्यन्तविविक्तयोर्धर्मधर्मिणोरितरेतराविवेकेनान्योन्यस्मिन्नन्योन्यात्मकतामध्यस्याहमिति नैसर्गिकोऽयं लोकव्यवहारः, अत्यन्तविविक्तयोर्धर्मयोरितरेतराविवेकेनान्योन्यस्मिन्नन्योन्यधर्मांश्चाध्यस्य **सत्यानृतशब्दौ मिथुनीकृत्य चैकविषयारूढौ च विधाय अहं कर्ता, अहं भोक्ता, अहं वेत्ता ममायं रागः क्रोध इत्यादि** नैसर्गिकोऽयं लोकव्यवहार **इति भाष्यवाक्ययोजनां दर्शयति**—भ्रान्तिरिहेति ॥ धर्मिविषया अन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्येत्यु**पात्ता** भ्रान्तिः । मिथुनहीनम् **मिथुनीकृत्ये**त्यंशं **परित्यज्य**। नैसर्गिकोऽयं लोकव्यवहार **इत्युपात्ते** केवलजनव्यवहृतावन्वयम् **सम्बन्धम्**। उपेयात्। **तत्राहमित्येकधर्मितावच्छेदकमात्रावलम्बेनाध्यासतो व्यवहारेण पदद्वयापेक्षाया अभावाद्**। धर्मविषया **भ्रान्तिस्तु स्थूलोऽहमित्यादिलक्षणा**। मिथुनम् **पदद्वयं गुणगुणिपरम्**। समवलम्ब्य **आश्रित्य**। अध्याहृत चकारकलितैव **मिथुनीकृत्य चेति चकारसंवलितैव**। कमनीयम् **मनोहरम्, दोषाभावाद् मनोज्ञम्। नैसर्गिकलोकव्यवहारे**ऽन्वयमुपेयात्। इत्यन्वयः ॥१६०॥

[82b] अस्मदिति युष्मदिति चित्तनुषु शब्दौ
शक्तिलसितौ प्रकृतितो हि सकलासु ।
तत्र तु विशेषणविशेष्यसमवायं
योग्यविषये भजत एव समुदायौ ॥१६१॥

अथ पुरोवर्तिनि शुक्तिशकले रजततादात्म्याध्यासे सति इदं रजतमिति शुक्तिरजतपदयोर्मिथुनीकरणेन प्रयोगो दृश्यते, तद्वदिहापि प्रथमाध्यासे चित्यचिदध्यासात् चिदचिद्वाचकपदद्वयप्रयोगो मिथुनीकरणेन कुतो न भवतीति शङ्कापरिहाराय युक्तिविशेषं दर्शयति—अस्मदिति ॥ अयमाशयः—यत्रेदं रजतमित्यादौ स्मरणार्हमारोप्यमाणम्, तत्रैकस्य शुक्तिलक्षणधर्मिणोऽपरधर्मिणा रजतेन धर्मितावच्छेदकशुक्तित्वस्य तिरस्कारात् सामान्यांशेदन्त्वमादाय मिथुनभावेनेदं रजतमिति व्यवहारो भवति, यत्र पुनः परस्परसंसृष्टयोस्तादात्म्यपूर्वकमेव युगपद् गृह्यमाणयोः परस्परं तादात्म्याध्यासादेकत्वेन गृह्यमाणत्वम्, तत्र परस्परतिरस्काराभावादेकत्वेन परिगृह्यमाणत्वेन पद-

द्वयस्यापि पर्यायकल्पनया युगपत् प्रयोगानर्थक्यात् पर्यायेण प्रयोगे प्रसक्ते चिज्जडपदानामेकैकस्मिन्नेव शक्त्याऽन्यत्र लक्षणयैव बोधकत्वस्य परिकल्पनीयत्वेन युष्मदस्मच्छब्दयोः सकलप्रमाणानुरोधेन चेतनाचेतनसमुदायशक्तत्वेनातिप्रसिद्धतया ताभ्यामेव शब्दाभ्यां मुख्यविधया जडाजडयोर्निर्देश-
5 संभवात् पदान्तरं तत्तन्मात्र[83a]शक्तमपहाय समुदायशक्ते पदे त्वमहमिति प्रयुज्येते ; नानातरुसमुदायबोधनायौदुम्बरादिपदं प्रत्येकावयवशक्तमपहाय वनारण्यादिपदप्रयोगदर्शनात् । एवं चाहमिति त्वमित्यादिरूपेणैव समुदायशब्देन प्राथमिकाध्यासविषयबोधाय व्यवहार इति । तदेतदाह— अस्मदितीति ॥ अस्मदिति युष्मदिति च शब्दौ प्रकृतितः स्वभावत एवानादिव्यवहारानुरोधात् ।
10 सकलासु चित्तनुषु चिच्च तनवश्च कारणसूक्ष्मस्थूलदेहलक्षणाः, तासु । शक्तिलसितौ शक्त्या प्रकाशमानौ भवतः । एवं चाहमिति त्वमिति मुख्यया वृत्त्या समुदायनिर्देशो भवतीति न समुदायैकदेशपरस्थूलदेहसूक्ष्मदेहकारणदेहचित्परशब्दानां प्रयोगः । तथाच तत्र तु युष्मदस्मच्छब्दार्थविचारस्थले तु यौ समुदायौ युष्मदस्मदर्थत्वेन निरुक्तौ, तौ तावद् विशेषणविशेष्यसमवायम्
15 विशेषणविशेष्यसम्बन्धं स्थूलोऽहम्, बधिरोऽहम्, अज्ञोऽहम्, वेत्ताहमिति-लक्षणम् । योग्यविषये भजतः वनैकदेशे पुष्पिते वनं पुष्पितमिति व्यवहारवत् स्थौल्यगुणः स्थूलदेहावच्छेदेन बधिरत्वं सूक्ष्मदेहगतश्रोत्रत्वावच्छेदेनाज्ञातृत्वमविद्यावच्छेदेन वेत्तृत्वं चिदवच्छेदेनान्वेतीति योग्यविषये भजतः । इत्युक्तम् ॥१६१॥

20 [83b] अत्र तनुवाचकपदं न पठनार्हं
सा त्वमहमा निगदिता हि पुनरुक्त्यै ।
गात्रगुणबोधकपदान्यपुनरुक्त्या
वक्तुमुचितान्युपचितार्थपरिसिद्ध्यै ॥१६२॥

अथ स्थूलोऽहमिति प्रयोगवद् देहोऽहमिति प्रयोगः कस्माद् न भवतीत्या-
25 शङ्कां निमित्तप्रदर्शनद्वारा परिहरति—अत्रेति ॥ अत्र अहमाद्यध्यासाधीनप्रयोगस्थले । तनुवाचकपदम् कारणसूक्ष्मस्थूलदेहवाचकं पदम् । पठनार्हं न

भवति स्थूलदेहोऽहम्, सूक्ष्मदेहोऽहम्, कारणदेहोऽहमिति च कुत इत्यत आह—सेति ॥ सा तनुस्त्रिविधाऽपि। त्वमहमा त्वं चाहं च त्वमहम् तेन, युष्मदस्मत्पदाभ्यां समुदायमध्ये विद्यमाना निगदिता सती पुनरपि देहपदोपादाने। पुनरुक्त्यै हि भवति। तस्माद् देहपरं पदं नाहमादिसामानाधि-
5 करण्येन प्रयोक्तुं शक्यम्। गात्रगुणबोधकपदानि तु स्थूलोऽहम्, गौरोऽहम्, काणोऽहमित्यादीनि। उपचितार्थसिद्ध्यै विवक्षितानि अधिकार्थलाभाय पुनरुक्त्यभावाद् वक्तुमुचितान्येव। इति योजना ॥१६२॥

[84a] आदिममिदंपदमहंपदसमेतं
धर्मिपरमन्यदथ धर्मपरमिष्टम्।
10 गौर इति पुण्यमिति रीतिमवलम्ब्ये-
दंपदमिहोचितविशेषपरमूह्यम् ॥१६३॥

अथ अहमिदम् ममेदमिति भाष्यं योजयति—आदिममिति ॥ अत्राहमिदमित्यादाविदंपदं न मिथुनगतानुक्रियमाणपरम्, किन्तु सामान्यपरं सद् विशेषपरम्—स्थूलोऽहम्, गौरोऽहम्, कृशोऽहम्, कर्ताऽहम्, भोक्ताऽहम्,
15 वेत्ताऽहमिति, एवं मम देहः, मम पुण्यम्, मम पापम्, मम सुखमिति च; केवलेदंपदस्य सामान्यपरस्यानेकार्थाभिप्रायेणागत्येह परिग्रहाद् विशिष्य तत्तत्पदोपादाने गौरवापत्तेः। तत्राहंपदसमानाधिकरणमिदंपदं योग्यतयाऽहंपदसामानाधिकरण्यलाभाय धर्मिपरं भवति—गौरोऽहम्, काणोऽहम्, वेत्ताऽहमिति। ममेदमितीदंपदन्तु ममेति षष्ठीनिर्देशसामर्थ्याद्
20 भेदेनान्वयाय धर्मपरमिष्टं भवति—मम पुण्यम्, मम पापम्, मम देह इति। एवं चेहेदंपदं सामान्यपरमप्यन्वयौचित्ये प्रोक्तां रीतिमवलम्ब्य समुचितविशेषपरमूह्यम्। इत्यन्वयः ॥१६३॥

[84b] स्थूलवपुषि स्थितिमती तनुतनुश्चेत्
फुल्लहृदयेन मल्लेशपरिहारात्।

विस्फुरणमेककतया भवति तेषां
भ्रान्तिरियमेव हि विवेकमतिहान्या ॥१६४॥

अथ अध्यस्येति प्रकृताध्यासस्वरूपं विवेचयति—स्थूलेति ॥ अत्र चैतन्ये-ऽविद्यासंबन्धोऽनादिः, नतु शुक्तिरजतवदाधुनिकाध्याससिद्धः। तत्रापि
5 तावदविद्यावता सूक्ष्मदेहसंबन्धोऽप्यनादिरेव ; संसारभ्रमणस्य सूक्ष्मदेहाश्रित-कर्मनिमित्तकत्वात्। स्थूलदेहवत् तत्सूक्ष्मदेहस्यागन्तुकत्वे कर्माश्रितसूक्ष्म-देहस्य प्राक्तनस्य नाशादग्रेतने कर्माभावात् सुखदुःखवैचित्र्यं परिदृश्य-मानमाकस्मिकमेव स्यात्। अतः कर्माश्रयसूक्ष्मशरीरसम्बन्धोऽप्यनादिरेवै-ष्टव्यः। परन्तु सूक्ष्मशरीराभिव्यक्त्यनभिव्यक्ती स्थूलदेहयोगतदभावाभ्यां
10 भवत इति विशेषः। स्थूलशरीरं त्वनेकश आगमापाय्येव। एवं च स्थूल-वपुषि तनुतनुः स्थितिमती भवति चेत् अभिव्यक्ता भवति चेत्, तदा जाग्र-त्स्वप्नावस्थयोः प्रफुल्लहृदयेन हृदयपुण्डरीकस्थितिविशेषेण विकसितचेतसा। चित्समवेतमलस्य ज्ञानसुखाद्यावरकस्य यो लेशः क्षुद्रांशः, तस्य परिहारात् तिरस्कारात्। यावतांशेन मलतिरस्कारः, तावतांऽशेन एककतया एकत्वेन।
15 तेषाम् स्थूलसूक्ष्मकारणदेहानाम्। विवेकमतिहान्या विवेकाग्रहात्। मलस्य सर्वांशेऽप्यतिरस्कारेण सामान्यभानांश एव तदनुकूलतया मलतिरस्कारेण सर्वांशेऽपि चिदनभिव्यक्त्या चिद्देहभेदास्फुरणात् चित्स्फुरणमेकत्वावगाहि चित्तवृत्तौ भवति। एवं च चित्स्फुरणमेवाविद्यमानैकत्वावगाहि चित्तवृत्तौ चित्प्रतिफलनमेव वृत्तिविशेषनियता भ्रान्तिरित्यर्थः। अत्र चित्तनुसमुदाये
20 विवेकाग्रहणपूर्वकचित्स्फुरणादेकत्वेन व्यवहार इति केचित्। एकत्वावगाहि-वृत्तौ चित्स्फुरणादेकत्वव्यवहार इत्यन्य इति मतभेदोऽप्यत्र विवक्षितोऽनु-सन्धेयः ॥१६४॥

[85a] भ्रान्तिविषयो भवति साधिकरणात्मा
शब्दयुगलं न खलु तत्र नियमेन।
25 नो निगरणं भवति तद्युगलबद्धं
भ्रान्तिरहमित्यपि विलुप्तपदयुग्मा ॥१६५॥

अथाहमिति भ्रमे न मिथुनीकरणं भवतीत्येतद् विशदयति—भ्रान्तीति ॥ अन्यस्मिन् पदार्थे भ्रान्तिर्भवति यदा, तदा भ्रान्तिविषयः साधिकरणात्मा भवति इदं रजतमिति भ्रान्तिविषयो रजतं शुक्तिरूपाधिकरणसमवेतस्वरूपं भवति। तत्र सर्वत्रापि शब्दयुगलं नियमेन न भवति इदं रजतमित्यादौ शब्दयुगलसत्त्वेऽपि 5 भ्रमसमकल्पे निगरणस्थले "द्वा सुपर्णा सयुजा"[1] इत्यादौ "चन्द्रः समुज्जृम्भते"[2] "वापी काऽपि स्फुरति गगने"[3] इत्यादौ विषयविषयिणोः पदयुगलदर्शनाभावात्। तस्माद् भ्रमसामान्ये विषयविषयिपदयुगं न नियतं भवति। एवं प्रकृतेऽप्यहं-प्रत्ययस्थले पदद्वयं नापेक्ष्यत एव। तदेतदाह—नो निगरणमित्यादि ॥१६५॥

[85b] शुक्तिरजतेऽपि न वचोऽधिकरणार्थं
10 शुक्तिरविशेषवपुरर्पणगतार्था।
नायनकराकलितमानसजरूप्यं
संनिहितमेतदिदमो भवति योग्यम् ॥१६६॥

पूर्वमिदं रजतमित्यादाविदं पदं शुक्तिपरम्। एवं च विषयस्य रजतस्य विषयिणः शुक्तिशकलस्य च यथायोगमिदं रजतमिति पदद्वयमस्तीत्यभ्युपग-15 गतम्। संप्रतीदं रजतमित्यत्रापीदमिति शुक्तिशकलपरं न भवति, किन्तु रजतपरमेवेति तत्रापि विषयिपरं पदमहंप्रत्ययस्थलवद् नेति दर्शयति—शुक्तिरजतेऽपीति ॥ इदं रजतमिति शुक्तिशकलेऽपि अधिकरणार्थम् शुक्त्यर्थकं पदं नास्त्येव। यदि शुक्त्यंशस्य शुक्तिरजतस्थले भानं न स्यात्, तर्हि शुक्ति-रजते शुक्तेः कथमुपयोगः। उपयोगाभावे च शुक्तिरहितस्थलेऽपि शुक्तिरजत-20 निष्पत्तिः स्यादित्याशङ्क्य शुक्तिरजतस्थले शुक्तेरुपयोगं दर्शयति—शुक्तिरिति ॥ नायनकरे बुद्धिवृत्तौ चाविशेषवपुः सामान्याकारः, तस्य समर्पणेन गतार्था भवति शुक्तिः। तथाच सामान्याकारसमर्पणद्वारा शुक्ती रजतसंस्कारोद्बोध एव गतार्था—"सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः"[4] इति। एवं च नायनकिरणसंपृक्तमानसाद् जातं यद् रूप्यं शुक्तिजात्याच्छादकमेतत्संनिहितं 25 सदिदमो योग्यं भवति।

"इदमस्तु संनिकृष्टं समीपतरवर्ति चैतदो रूपम्।
अदसस्तु विप्रकृष्टं तदिति परोक्षं विजानीयात् ॥"[5]

इति प्रमाणबलेनेदमः शुक्तिप्रदेशसञ्जनिते रजते संनिकृष्टत्वेन प्रयोगसंभवात्। तथाचेदं रजतमितीदं पदं न शुक्तिपरम्, किन्तु संनिहितरजतपरमेव भवेत्। स्मर्यमाणारोपवादिमत एव रजतस्यासंनिहितत्वेनेदमः शुक्तौ विश्रामात्, स्वमते रजत एव विश्रामसंभवात्। इति भावः ॥१६६॥

5 [86a] स्थूलतनुकारणशरीरमिलिता चिद्
भाति यदहंपदयुतैककतयैव ।
तेन बधिरोऽहमकृशः सकलवेत्ताऽ-
नीश इति विभ्रमवशादपरबोधः ॥१६७॥

अथ अहमिदमिति मिथुनीकरणानन्तरभाविनमध्यासमहमध्यासानन्तरभावि-
10 द्वितीयाध्यासपरत्वेन योजयति—स्थूलेति ॥ स्थूलसूक्ष्मकारणशरीरैरभिव्यक्तत्वेन तत्संवलिता चित्। यत् यस्मात् कारणात्। अहंपदयुता अहंपदस्य विशिष्टसमुदायरूपेण वाच्या सती। एककतया स्थूलादिदेहैरेकत्वेन भाति स्वमाहात्म्यादेव। तेन हेतुनाहंपदेन समुदायपरिग्रहादहमिति समुदायैक्यभ्रमवशाद् बधिरोऽहम्, अकृशोऽहम्, सकलवेत्ताहम्, अनीशोऽहमिति अपर-
15 बोधः द्वितीयबोधो जायते। तेन च लोकव्यवहारोऽपि जायते। एवं च स्थूलोऽहमित्यादिद्वितीयबोधविषयीभूतस्थौल्यादिकं समुचिते समुदायैकदेशे तत्तद्देहे समन्वेति। एवं च वनैकदेशे पुष्पिते वनं पुष्पितमितिवदेकदेशसम्बन्धात् समुदायसम्बद्धत्वेन व्यवहारः। यद्वा—एकदेशे विद्यमानस्थूलत्वादिः समुदाय एव वर्तत इति भ्रमात् तथा व्यवहारः। इति दिक् ॥१६७॥

20 [86b] मूलमलबोधकमुपेयमथ मिथ्या-
ज्ञानपदमत्र पुनरुक्तिपरिहृत्यै ।
भ्रान्तिरुदिता भवकरी किल विशिष्या-
ध्यस्यपदतो न खलु मूलमलमुक्तम् ॥१६८॥

अथ भाष्यगतमिथ्याज्ञानपदं न भ्रमपरम्, अध्यस्येत्यनेनैव भ्रमसङ्ग्रहेण मिथ्याज्ञानपदेनापि भ्रमकथने पुनरुक्त्यापत्तेः, अतो मिथ्याज्ञानपदं मूलाविद्यापरमिति विवृणोति—मूलमलेति ॥ मिथ्याज्ञाननिमित्त इति भाष्ये श्रूयमाणं मिथ्याज्ञानपदम्। अत्र तथाप्यन्योन्यस्मिन्नित्यादिभाष्ये। मूलमलबोधकम्
5 मूलमलस्य आवरणशक्तिरूपाविद्यायाः बोधकम् प्रतिपादकमवश्यमभ्युपेयम्। मूलमलावरणाभावे स्वप्रकाशत्वादात्मनस्तत्संनिधौ सर्वस्यापि शरीरस्य पृथक् पृथगेव यथावस्तु भानावश्यम्भावेनानुभूयमानैक्यभ्रमानुपपत्तेः। अतो मूलाविद्याऽवश्याभ्युपेया भवति। एवं चेह मिथ्याज्ञानपदमविद्यापरमेव ; इतरथा पुनरुक्तिः स्यात्। अध्यस्येति पदतो भवकरी संसारहेतुभूता भ्रान्तिः
10 शरीरैक्यभ्रमो विशिष्य कथिता किल। एवं चाध्यस्येत्युक्ताध्यासस्यैव मिथ्याज्ञानपदेन कथने पुनरुक्तिदोषः स्यात्। सर्वभ्रममूलभूताविद्या त्ववश्यवक्तव्या नैवोक्ता पदान्तरेण। अतः पुनरुक्तिपरिहाराय मिथ्याज्ञानपदमिदं मूलाविद्यापरमेष्टव्यमेव। इति भावः ॥१६८॥

[87a] ज्ञानमतितीव्रमवलम्ब्य विनिवृत्त्या
15 सर्वविषयभ्रमनिदानकतया च।
मूलमलमावृतिमयं भवति मिथ्या-
ज्ञानपदतो व्यवहृतं गुरुवरेण ॥१६९॥

[87b] व्यष्टिनयनं विशदगोलपरिजृम्भद्
व्यञ्जयति सर्वगसमष्टिमयचक्षुः।
20 व्यञ्जितसमष्टिनयनं किरणरूपं
व्यष्टिनयनस्य विषयग्रहणहेतोः ॥१७०॥

अथ भ्रमनिरूपणप्रसङ्गाद् भ्रमस्वरूपं प्रमास्वरूपं स्मृतिसंशयाहार्यज्ञानलक्षणमनोरथादिज्ञानं च विवेचयितुं प्रतिकर्मव्यवस्थामेकादशभिः श्लोकैर्दर्शयति—व्यष्टीति ॥

अत्रेयं वृद्धप्रक्रिया—नयनकरा नयनगोलाद् निर्गत्य सवितृमण्डलादिविषय-
देशमाप्नुवन्ति। नयनरश्मिद्वारा चान्तरन्तर्मनोऽहङ्कारबुद्धयो निस्सरन्ति।
तद्द्वारा प्रमातृचैतन्यं विषयसंबद्धं विषयं प्रकाशयति। एवं श्रोत्रस्थलेऽपि
समुन्नेयम्। घ्राणरसनत्वचां तु बहिर्निर्गमनं नानुभूयत इति ताः स्वस्वविषयैः
5 स्वस्वस्थानसम्बद्धा भवन्ति। तत्रैव तद्द्वारा मनोऽहङ्कारबुद्धयस्तद्द्वारा प्रमातृ-
चैतन्यमिति विवेकः। एवं सवितृबिम्बाद् निर्गताः करा विषयदेशमवाप्य
विषयप्रकाशकाः। एवं दीपमण्यादिष्वपीति ॥१६६॥

अत्रेदं चिन्त्यते—यदि सवितृमण्डलाद् दीपकलिकादेश्च करा विषयदेशं
प्राप्नुवन्ति, नयनगोलादपि रश्मयो निर्गत्य विषयदेशं गच्छन्ति, तर्हि तेजसो
10 वेगातिशयसत्त्वेऽपि क्रिया क्रियातो विभागः, विभागात् पूर्वदेशसंयोगनाशः,
उत्तरदेशसंयोगोत्पत्तिश्चेति रीत्याऽनेकदेशसंयोगानन्तरमेव विषयदेशप्राप्ते-
र्वक्तव्यत्वेनातिविलम्बः किरणा[88a]नां विषयदेशेऽपेक्षितः स्यात्। दूर-
देशादागच्छतो वायोस्तथैव विलम्बदर्शनात्; न तथा विलम्ब उपलभ्यते।
उदयगिरिशिखरमारूढे तरणिबिम्बे सति तत्समकालमेवाङ्गणे किरणसङ्ग
15 उपलभ्यते। एवं दीपशिखादेः। नयनस्याप्युन्मेषसमकालमेव ब्रह्माण्ड-
सवितृमण्डलादेः किरणयोगिनः प्रकाशोऽनुभूयते। एवं श्रोत्रादावप्युन्नेयम्।
अपि च चक्षुरादीन्द्रियस्य तत्तत्पुरुषसम्बन्धिनोऽणुतमत्वाद् ब्रह्माण्डपर्यन्तगत-
दीर्घतरपरिमाणाश्रयव्यक्तिस्वरूपमेवालीकम्; इतरथाऽणुत्वव्याघातापत्तेः।
किञ्च तडागजलं कुल्याद्वारा निर्गत्य केदाराकारं जायमानं सर्वलोकविदितं
20 भवति। तत्रार्धकुल्यायां सेतौ कृते सेतोः पार्श्वद्वयेऽपि निर्गतं जलं यथा-
पूर्वं दृश्यत एव। एवमेव सवितृमण्डलात् प्रवाहन्यायेन निर्गतं तेजोऽङ्गण-
तलसङ्गि यदा वृत्तम्, तदा मध्ये मेघादिना रोधे सति मेघादूर्ध्वं सूर्यकराः
प्रकटा एव पूर्ववद् दृश्यन्ते, मेघादर्वाक् तु न दृश्यन्ते। जलन्यायश्चेदर्वागपि
दृश्येरन्। एवं दीपादिष्वपि प्रभायाः करादिना पिधानेऽपि सर्वमिदमूह्यम्।
25 एवं नयनरश्मिषु सवितृमण्डलादियायिषु मध्ये मेघनिरोधे सति नायनरश्मीनां
मेघादूर्ध्वमवस्थानेन तद्द्वारा मनोऽहङ्कारबुद्धीनामपि तत्र गमनेन प्रमातृचैतन्य-
स्यापि सत्त्वेन सवितृबिम्बादिप्रकाशनमपि यथा पूर्वं स्यात्, न तथोपलभ्यते,
तत् किंनिबन्धनमिति शङ्कां निवर्तयितुं [88b]नयनकराणां वस्तुतो न निर्गमः,
किन्तु निर्गता इव भवन्तीति नायनरश्मिरूपं विवेचयति—व्यष्टिनयनमिति ॥

अत्रेयं प्रक्रिया—इन्द्रियाण्येकादशाहङ्कारबुद्धी पञ्च भूतानि च स्थूलसूक्ष्मलक्षणानि। सर्वाण्येतानि द्विविधानि—व्यष्टिरूपाणि समष्टिरूपाणि चेति। एवं सूक्ष्मभूतान्यपि तत्तल्लिङ्गशरीराणि व्यष्टिरूपाणि, ब्रह्माण्डादिसमस्तपदार्थव्यापीनि समष्टिरूपाणि। एवं स्थूलभूतेष्वपि खमण्डलपृथिवीसमुद्रादि-5 गतानि व्यष्टिमयानि, ब्रह्माण्डव्यापीनि समष्टिरूपाणि। तत्र व्यष्टिः सर्वाऽपि व्यक्तरूपा, समष्टिः सर्वाऽप्यव्यक्ता। तत्र व्यष्टिष्वपि काश्चन व्यष्टयः सवितृमण्डलदीपकलिका नयनश्रोत्रमनोऽहङ्कारबुद्धयो व्यञ्जकशक्तिभाजः स्वसंमुखसमष्टेर्यथासामर्थ्यं व्यञ्जकाः, अन्यास्तु व्यष्टयोऽव्यञ्जकाः प्रायेण भवन्ति। एवमन्यत्रापि व्यञ्जकाव्यञ्जकविभागो यथानुभवमनुसन्धेयो भवति। एवं च 10 व्यष्टिनयनं तत्तद्विशदगोले व्यञ्जकशक्त्युन्मेषके परिजृम्भत् सद् व्यञ्जकशक्तियुक्तत्वेन व्यक्तं सत्। सर्वगम् सर्वत्राण्डादिषु विद्यमानं समष्टिमयं नयनं व्यञ्जयति अभिव्यक्तं कारयति। व्यञ्जितं समष्टिनयनं ब्रह्माण्डव्यापि व्यष्टिनयनस्य विषयग्रहणहेतोः विषयग्रहणनिमित्तं व्यष्टिनयनस्य किरणरूपं भवति। एवं च व्यष्टिनयनं समष्टिनयनस्य किरणद्वारा विषयग्रहणहेतुः। इति भावः ॥१७०॥

15 [89a] व्यक्तिरपि संनिहितदूरतरदेशा
तीक्ष्णतरतीक्ष्णमृदुमन्दतररूपा।
यत्पुरुषचक्षुरुदिता भवति सेयं
व्यक्तिरपि तत्पुरुषविदननिदानम् ॥१७१॥

अथ व्यष्टिनयनस्य समष्टिनयनाभिव्यञ्जकत्वे ब्रह्माण्डान्तर्वर्तिसमष्टिनयनस्य 20 युगपदेकरूपेण साम्मुख्यादभिव्यक्तेर्निकटस्थपदार्थगतपरिमाणादेरिव दूरस्थपदार्थपरिमाणादेरपि याथातथ्येन ग्रहणं स्यात्, न तथा गृह्यते। किञ्च समष्टिनयनस्य ब्रह्माण्डान्तर्व्यापिन एकस्य दे व द त्त नयनसाम्मुख्येनाभिव्यक्तस्य किरणरूपस्य सत्त्वाद् य ज्ञ द त्त स्यापि मेरुगुहान्तर्वर्तिपदार्थचाक्षुषं स्यात्। नच—य ज्ञ द त्त चक्षुःसम्बद्धस्य तन्नयनस्य मुद्रितत्वे 25 सत्यभावाद् विषयग्रहणायोग इति—वाच्यम्; मेरुगुहान्तर्वर्तिपुरुषव्यष्टिनयनेन ब्रह्माण्डान्तर्वर्तिसवितृमण्डलध्रुवतारकाद्यवच्छेदेन मेरुगुहावच्छेदेन च युगपदेव समष्टिनयनव्यञ्जनात्, लङ्कास्थपुरुषव्यष्टिचक्षुषाऽपि लङ्कावच्छेदे-

नैव सवितृतारामण्डलाद्यवच्छेदेनाभिव्यञ्जनाद् व्यष्टिचक्षुर्द्वयेनापि सवितृ-
मण्डलाद्यवच्छेदेन समष्टिव्यञ्जनेन सवितृमण्डलद्वारा मेरुगुहायामपि लङ्कास्थ-
पुरुषचक्षुःकिरणसम्बन्धस्य सत्त्वात् तद्गतपदार्थचाक्षुषं स्यादित्याशङ्क्य
परिहरति—व्यक्तिरपीति ॥ ब्रह्माण्डान्तर्वर्तिसमष्टिनयनस्य युगपदेव साम्ये-
5 नाभिव्यक्तेर्निकटस्थपदार्थ इव दूरस्थेऽपि पदार्थे याथातथ्येन परिमाणादिग्रहः
स्यादित्यापादनमसङ्गतम् ; अभिव्यक्तेः सर्वदेशावच्छेदेनैकरूपत्वाभावात्,
संनिहिते बह्वभिव्यक्तेः, संनिहिततरे चातिबह्वभिव्यक्तेः, दूरदूरतरदेशे मन्दमन्द-
तरव्यक्तेः । तथा यथा यथा नैकट्यम्, तथा तथा परिमाणादीनां स्पष्ट
ग्रहो भवति । यथा यथा दूरता तथा तथा परिमाणादीनां स्पष्टपरिग्रहो न
10 भवतीति पर्यवसन्नम् । एवं लङ्कास्थपुरुषस्य मेरुगुहान्तर्गतपदार्थचाक्षुषं
स्यादित्यापादनमप्यसङ्गतम् ; यत्पुरुषसमष्टिचक्षुषा समष्टिचक्षुषो व्यक्तिर्जाता,
सा व्यक्तिस्तस्यैव पुरुषस्य पदार्थग्रहणे निमित्तम्, नान्यस्य पुरुषस्य ।
एवं च लङ्कास्थस्य मेरुगुहापदार्थचाक्षुषं नैवापादयितुं शक्यम् ; लङ्कास्थ-
पुरुषव्यष्टिचक्षुर्जनिताभिव्यक्तिविशिष्टकिरणरूपतया मेरुगुहागतपदार्थेन तेजः-
15 संयोगाभावात्, सम्बन्धाभावे च तच्चाक्षुषापादनायोगाद् न काप्यनुपपत्तिः ।
इति भावः ॥१७१॥

[89b] पक्ष्मपरिबन्धननिवर्तनत एव
व्यक्तिरखिलस्य नयनस्य युगपत्स्यात् ।
अण्डवलयावधि न चाक्षुषकराणां
20 निर्गमनमल्पतरविग्रहयुतत्वात् ॥१७२॥

अथ चक्षुर्गोलात् किरणानां निर्गमेन विषयदेशगमने दोषं दर्शयन्
व्यष्टिनयनेन समष्टिनयनाभिव्यक्तिरेवेष्टव्येति दर्शयति—पक्ष्मेति ॥ यदि चक्षु-
र्गोलाद् निर्गत्य किरणानां ब्रह्माण्डावधि गमनं स्यात्, तर्हि क्रिया क्रियात इति
रीत्याऽतिविलम्बः स्याद् विषयप्राप्तौ, न तथा विलम्ब उपलभ्यते । अतो
25 हेतोर्ब्रह्माण्डान्तर्गतसमष्टिनयनस्य पक्ष्मणा यः परिबन्धः आच्छादनम्,
नयनगोलस्य तन्निवर्तनसमकालमेव व्यष्टिचक्षुः साम्मुख्याद् ब्रह्माण्डावच्छेदेन

युगपदेव व्यक्तिर्भवेदित्यर्थः। किञ्चाण्डवलयपर्यन्तं नयनरश्मीनां निर्गमनं न भवितुमर्हति ; व्यष्टिनयनस्यात्यल्पतनुयुतत्वात्, अणुत्वेनात्यल्पतया ब्रह्माण्डभाण्डव्यापनार्हविषयायोगात्। तस्मात् समष्टिनयनव्यक्तिरेव व्यष्टिनयनादेष्टव्या। इति भावः ॥१७२॥

5 [90a] अण्डवृतिमण्डलमनन्तविषयान्तं
नायनकरस्य समया न गतिराशु।
स्याद् बहुविधक्षणवशेन खलु कर्मा-
द्यैर्बहुभिराकलित एव हि विलम्बः ॥१७३॥

अथ गोलाद् नयनकिरणानां निर्गमेन विषयदेशप्राप्तौ कालविलम्बो दृश्येत, 10 न चैतद् दृश्यत इति दोषं विशदयति—अण्डवृतीति ॥ अनन्तविषयाणाम् बहुविधपदार्थानाम्। अन्तम् परिच्छेदकम्। अण्डवृतिमण्डलम् अण्डस्य ब्रह्माण्डस्य वृतिः आवरणम्, तदेव मण्डलम् बिम्बम्। समया निकटे। तावत्पर्यन्तं नायनकरस्याशु गमनं बहुविधक्षणवशेन खलु न भवेदेव ; क्रिया क्रियातो विभाग इति रीत्या विलम्बावश्यम्भावात्। वाय्वादीनामागमने गमने वा बहुविध- 15 क्षणवशेन बहुभिः कर्माद्यैर्विलम्बो ज्ञात एव भवति हि। तस्माद् नायनरश्मिनिर्गमनमसङ्गतम्। इति भावः ॥१७३॥

[90b] अङ्गणभुवा सवितृबिम्बकिरणानां
योगविषयेऽपि सकलं समनुमेयम्।
दीपमणिविद्युदुडुवह्निशशिबिम्बा-
20 द्येषु सकलेष्वपि समानमिदमुक्तम् ॥१७४॥

अथ नयनादिष्टन्यायं सवितृबिम्बदीपादावतिदिशति—अङ्गणेति ॥ गेहचत्वरभुवा सह सूर्यबिम्बकिरणानां योगेऽपि नयनस्थले यदुक्तम्, तत्सर्वमनुमेयं भवति। एवं दीपमणिविद्युन्नक्षत्रवह्निशशिमण्डलादिषु सर्वेष्वपीदमुक्तं समानं विज्ञेयं भवति। तथाच व्यष्टयः समष्टिव्यञ्जका विज्ञेयाः। एवं 25 च सवितृमण्डलादिकं स्वसामर्थ्यानुरोधेन ब्रह्माण्डव्यापितेजसो व्यञ्जकम्। इति भावः ॥१७४॥

व्यक्तिरहितं निखिलचित्तभुवनेषु
व्यापिपरभूतनिकरेण सह तेजः ।
व्यक्ततनुभिः सवितृबिम्बदहनाद्यै-
र्व्यञ्जितमिदं भवति कार्यकृतिदक्षम् ॥१७५॥

5 **अथ तेजसः समष्टिव्यष्टिभावेन व्यङ्ग्यव्यञ्जकभावं वाय्वादिभूतैः सह दर्शयति** —व्यक्तीति ॥ **निखिलानि यानि विचित्राणि भुवनानि, तेषु** व्यापिपरभूतनिकरेण सह **पराणि पृथिवी जलवाय्वाकाशैः सह।** व्यक्तिरहितम् **अनभिव्यक्तम्।** तेजः **समष्टिरूपम्।** व्यक्ततनुभिः **अभिव्यक्तशरीरैः सूर्यमण्डलवह्न्याद्यै र्व्यष्टिभि-** र्व्यञ्जितं **सदिदं स्वकार्यकृतौ दक्षम् समर्थं** भवति। **एवं तेजोऽतिरिक्तमपि**
10 **वाय्वादि समुचितव्यञ्जकवशाद् व्यक्तं सत् स्वकार्यकरणे दक्षं भवति। इति भावः ॥१७५॥**

[91a]　वप्रविषये वहति वारिणि तडागाद्
बन्धनयुते सति विनिर्गमनमार्गे ।
नीरमुभयत्र परिभाति किल सेतोः
15　पार्श्वयुगलेऽपि जलदस्य किरणाः स्युः ॥१७६॥

**अथ समष्टिव्यष्टिभावेन तेजःप्रभृतीनां व्याप्यव्यापकभावास्वीकारेऽनिष्टं दर्शयति**—वप्रेति ॥ वप्रविषये **केदारभूमौ।** तडागाद् वारिणि वहति। विनिर्गमनमार्गे **जलनिर्गमसरणौ।** बन्धनयुते सति सेतोरुभयत्र नीरं परिभाति **प्रकाशते किल। तेनैव दृष्टान्तेन सवितृमण्डलादेर्निर्गत्य कराः प्राङ्गणभूमिं समागच्छन्तीति**
20 **पक्षेऽन्तरिक्षस्थमेघस्य पार्श्वद्वयेऽ**पि **जलवदेव** किरणा **अपि परिदृश्यमानाः** स्युः, **न तथा दृश्यन्ते। अतो जलवत् किरणानां मण्डलादेर्निर्गमनकथा न युक्ता। इति भावः ॥१७६॥**

घस्रमणिमण्डलत एव यदि चोस्राः
स्पष्टमभियान्ति सकलान् भुवि पदार्थान् ।

तर्हि जलदस्य पुरतश्च परतश्च
प्रोद्भटतमाः स्युरथ नैव हि तथा ते ॥१७७॥

**अथाधुना सङ्ग्रहेणोक्तमेव दार्ष्टान्तिकं विशदयति**—घस्रेति ॥ घस्रमणि-
मण्डलतः **दिनमणेः सूर्यस्य बिम्बादेव।** यदि उस्राः **कराः सर्वान्** पदार्थान्
5 अभियान्ति स्पष्टं प्राप्नुवन्ति, तर्हि **गगनतलमध्यारूढस्य** जलदस्य परतश्च
पुरतश्च **ऊर्ध्वाधःप्रदेशयोर्जलदाभावकाल इव स्पष्टतमाः** स्युः, न तथोपलभ्यन्ते ।
**तस्माद् मण्डलादेः किरणानां निर्गमनकथा तावदयुक्तैव । इति भावः ॥१७७॥**

[91b] दंशमशकादिवपुरावृतखवृन्दं
हस्तिमकरादितनुषु स्फुरति पूर्णम् ।
10 व्यष्टिविषयीणि हि समष्टिविषयीणि
व्यज्य विषये वपुषि यन्त्यवयवांस्तान् ॥१७८॥

**अथ व्यष्टीन्द्रियाणां समष्टीन्द्रियव्यञ्जकत्वमावश्यकमिति युक्त्या साधयति**—दंशेति ॥ दंशमशकादिवपुरावृतखवृन्दम् **दंशमशकादीनां यान्यल्पत-राणि वपूंषि, तैरावृतं खवृन्दम् व्यष्टीन्द्रियवृन्दमल्पपरिमाणम्** । हस्तिमकरादि-
15 तनुषु **स्थूलासु,** पूर्णम् **पर्याप्तं** स्फुरति । **अतोऽत्यल्पस्य स्थूलवपुषि पर्याप्त्यन्य-थानुपपत्त्या** व्यष्टिविषयीणि **व्यष्टीन्द्रियाणि समष्टीन्द्रियाण्यभिव्यज्य हस्तिम-करादिस्थूलदेहविषये** तानभिव्यक्तसमष्टिलक्षणान् अवयवान् **अवयवात्मनः प्राप्नुवन्ति । इत्यर्थः । तेनाभिव्यक्तावयवान्तरयोगादत्यल्पमपि स्थूलहस्ति-मुखदेहे पर्याप्तं भवति । इति भावः ॥१७८॥**

20 [92a] श्रोत्रमपि बाह्यमभिरञ्जयति नूनं
घ्राणरसने त्वगपि नैव मनुजादेः ।
घ्राणमपि रञ्जयति दंशमशकादे-
र्व्यञ्जयति सर्वमपि योगजमहिम्ना ॥१७९॥

अथ चक्षुषि सिद्धं समष्टिव्यष्टिभावेन व्यङ्ग्यव्यञ्जकभावं श्रोत्रेन्द्रियेऽप्यतिदिशति –श्रोत्रमपीति ॥ मनुजादेः श्रोत्रमपि व्यष्टिश्रोत्रमपि । बाह्यम् समष्टिश्रोत्रं व्यञ्जयति । मनुजादिघ्राणरसनत्वचस्तु नैव समष्टिव्यञ्जकाः ; तथाऽनुभवाभावात्, दूरस्थचाक्षुषवत्, दूरस्थशब्दश्रावणवद् दूरे घ्राणरसनत्वचामनु-
5 भावकत्वाभावात् । दंशमशकादेस्तु व्यष्टिघ्राणेन्द्रियं समष्टिघ्राणं व्यञ्जयत्येव ; अतिदूरस्थगन्धघ्राणेन तेषां गन्धवद्वस्तुसविधे गमनदर्शनात् । सर्वाण्यपि ज्ञानकर्मेन्द्रियाणि योगिनां योगजमहिम्ना व्यञ्जकानि भवन्ति ; तेषां दूरगन्धाघ्राणदूररसास्वादचन्द्रमण्डलस्पर्शादेश्च दर्शनात् । अतो योगिनां व्यष्टीन्द्रियाणि सर्वाण्यपि समष्टीन्द्रियव्यञ्जकानि भवन्ति । इति भावः ॥१७९॥

10 [92b] बाह्यकरणानि समवाप्य करणं स्वं
व्यञ्जयति चान्तरमनन्तरमनन्तम् ।
चित्तदुपगा बहिरुपाधिमिममेव
प्राप्य ननु रञ्जयति सर्वगमपि स्वम् ॥१८०॥

अथ बाह्येन्द्रियवदेव मनोऽहङ्कारबुद्धीनां व्यष्टिभूतानां बाह्येन्द्रियाभि-
15 व्यक्तिद्वारा समष्टिमनोऽहङ्कारबुद्धिव्यञ्जकत्वं दर्शयति – बाह्येति ॥ आन्तरं करणम् मनोऽहङ्कारबुद्धिलक्षणम् अन्तः । अन्तःप्रविष्टम् । बाह्यकरणानि व्याप्य अभिव्यक्तानि समष्टिरूपाणि समवाप्य । अनन्तरम् बाह्येन्द्रियसमष्टिव्यक्त्यनन्तरम् । अनन्तम् ब्रह्माण्डव्यापि । स्वम् समष्टिलक्षणं मनोऽहङ्कारबुद्धिरूपं समष्टिस्वरूपं व्यञ्जयति । चित्तदुपगाः मनोऽहङ्कारबुद्धिगाः । बहि-
20 रुपाधिम् बाह्येन्द्रियसमष्टिव्यक्तिलक्षणम् । इमम् उक्तमवाप्य । सर्वगमपि स्वम् आत्मस्वरूपं व्यञ्जयति ; आवरणभङ्गार्था चिदुपरागार्था वा वृत्तिरिति सिद्धान्तात् । इति भावः ॥१८०॥

[93a] तेन चिदियं भवति मातृमयरूपा
व्यापकतया सकलवस्तुषु निविष्टा ।

व्यापिवपुषा च बहवो हि न घटेयु-
स्तेन तदखण्डमतुलात्म समुपेयम् ॥१८१॥

अथ प्रतिकर्मव्यवस्थायामुक्तरीत्या साधितार्थां जीवेशपदसामानाधिकरण्यलभ्याखण्डार्थोऽप्यर्थात् सिद्ध्यतीत्याह—तेनेति ॥ मातृमयरूपा प्रमातृमयाः विश्वतैजसप्राज्ञाः, तद्रूपा। निरुक्तेयं चित् पूर्वोक्तेन रूपेण तेन व्यापकतया सकलवस्तुप्रकाशरूपात्मना सर्ववस्तुषु निविष्टा भवति। एवं च बहवो जीवा ईशश्च व्यापिवपुषा व्यापकरूपेण न घटेयुः; व्यापकानामेकत्र समवायायोगात्, त्रिविधपरिच्छेदशून्यत्वायोगात्। तदर्थं बहवो व्यापका न सन्तीति अतुलात्म इतरासदृशमखण्डस्वरूपं जीवेशाभेदलक्षणम्। समुपेयम् सम्यगङ्गीकरणीयम्। इति भावः ॥१८१॥

[93b] वर्ष्मविलयेऽपि किल जीवमविनाशं
वक्तुमतिसूक्ष्मवपुषाऽम्बरसमानम्।
व्यक्तिविकलं गगनमारुतसमेतं
व्यापि च वचो वदति तेज इति मोक्षे ॥१८२॥

अथैतावता प्रबन्धेन ब्रह्माण्डव्यापीनि समष्टिभूतानि समष्टिकरणानि चानभिव्यक्तानि सन्ति स्वस्वकार्याक्षमाणि व्यष्टिभूतैर्व्यष्टिकरणैश्च व्यञ्जकताशक्तिमद्भिर्व्यञ्जितानि सन्ति स्वस्वकार्यकारीणीत्युक्तम्, तदेतद् मोक्षधर्मवचनप्रमाणानुगृहीतमित्याह—वर्ष्मेति ॥ वर्ष्मविलयेऽपि किल स्थूलदेहपातेऽपि किल। जीवः स्थूलदेहेऽभिव्यक्तः स्थितः पश्चाद् देहवत् स्वयं न नश्यति, किन्त्वाकाशसमं सूक्ष्मरूपतयाऽनभिव्यक्तस्वरूपेण व्यापकात्मना तिष्ठतीति। अम्बरसमानं सूक्ष्मरूपेण जीवमविनाशं वक्तुं तद्दृष्टान्तत्वेन व्यक्तिविकलम् व्यक्तिरहितमनभिव्यक्तं ब्रह्माण्डादिव्यापि गगनमारुतसमेतं तेजो भवति। मोक्षे मोक्षधर्मे वचो वदति प्रतिपादयति। एवं च व्यञ्जकाभावे सूक्ष्मरूपेण तेजो व्यापि च वर्तते। व्यञ्जकसंनिधाने सावित्रविद्युद्दीपप्रभादिरूपेण व्यज्यते। इति भावः। शान्तिपर्वणि महाभारते मोक्षधर्मे त्रयोदशेऽध्याये भृगुभरद्वाजसंवादेन—

"प्रणाशो नास्ति जीवस्य दत्तस्य च कृतस्य च ।
[94a] याति देहान्तरं देही शरीरं तु विशीर्यते ।।
न शरीरं विना जीवस्तस्मिन्नष्टे विनश्यति ।
यथा समित्सु दग्धासु न प्रणश्यति पावकः ।।"[1]

5 इति भृ गु णा निरिन्धनाग्नेरिव निर्देहजीवस्याप्यनभिव्यक्तरूपेणावस्थानं कथितम् । तत्र पुनरपि भ र द्वा जे न जीवाविनाशिताप्रत्याख्यानाय दृष्टान्तभूतनिरिन्धनाग्निसत्त्वमपि प्रत्याख्यातम्—

"यथा ह्यग्नेस्तथा तस्य यदि नाशो न विद्यते ।
इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते ।।
10 नश्यतीत्येव जानामि शान्तमग्निमनिन्धनम् ।
गतिर्यस्य प्रमाणं वा संस्थानं वा न विद्यते ।।"[2]

इति । तदनु च भृ गु णा समाहितम्—

"समिधामुपयोगान्ते यथाऽग्निर्नोपलभ्यते ।
आकाशानुगतत्वाद्धि दुर्ग्राह्यो हि निराश्रयः ।।
15 तथा शरीरसन्त्यागे जीवो ह्याकाशवत् स्थितः ।
न गृह्यते सुसूक्ष्मत्वाद् यथा ज्योतिर्न संशयः ।।"[3]

इति । काष्ठादिस्थम्, गगनगतं सावित्रम्, मेघलोकोत्तरदेशवर्ति विद्युत्सम्बधि च ज्योतिः । इत्यर्थः ।।

"जङ्गमानां च सर्वेषां स्थावराणां तथैव च ।
20 आकाशं पवनोऽन्वेति ज्योतिस्तमभिगच्छति ।।
तेषां त्रयाणामेकत्वं द्वयं भूमौ प्रतिष्ठितम् ।
यत्र खं तत्र पवनो यत्राग्निस्तत्र मारुतः ।।
अमूर्तयस्ते विज्ञेया मूर्तिरापः शरीरिणाम् ।।"[4]

इति । आप इत्युपलक्षणं भुवोऽपि । एवं च निराश्रयं तेजो ब्रह्माण्डादा-
30 वाकाशाश्रितवाय्वाश्रितमनभिव्यक्तं सर्वदा तिष्ठति, व्यञ्जकसंनिधानेऽभिव्यक्तं विद्युदादिरूपेण । इति वर्तुलार्थः ।।१८२।।

[94b] सूक्ष्मवपुषा जगति सर्वमपि भूतं
ज्योतिरिव भूप्रभृति तावदनुमेयम् ।

व्यञ्जकविशेषसमयादि समयेदं
व्यक्तमखिलं समुचितं भवति नूनम् ॥१८३॥

अथ मो क्ष ध र्म वचने तेज एवैकं स्पष्टं ब्रह्माण्डादावनभिव्यक्तं तिष्ठतीत्युक्तम्, तत्तावत् सर्वभूतोपलक्षकम्; "आकाशं पवनोऽन्वेती"[1]ति "यत्र
5 खं तत्र पवन"[2] इति "अभूर्तयस्त"[3] इति च निर्देशादिति मनसि निधाय न्यायेनान्येषामपि भूतानां तेजःसाम्यं दर्शयति—सूक्ष्मेति ॥ भूप्रभृति सर्वमपि भूतम् भूजलवाय्वाकाशलक्षणम्। तेज इव सूक्ष्मवपुषा व्यञ्जकासंनिधानेऽभिव्यक्तरूपेण जगति भवतीति तावदनुमेयम्। इदम् भूतपञ्चकमपि व्यञ्जकविशेषसमयः वसन्तादिलक्षणः, स आदिर्यस्य सवितृमण्डलादेः, तद् व्यञ्जक-
10 विशेषसमयादि। द्वितीयान्तमिदम्। तत्समया तत्समीपे। व्यञ्जकसमीप इत्यर्थः। समुचितम् यथाव्यञ्जकसामर्थ्यं तथा व्यक्तं भवति नूनम्। इत्यर्थः। तथाच व्यञ्जकसामर्थ्यानुरोधेन भूतपञ्चकमपि व्यक्तं भवतीति यावत् ॥१८३॥

[95a] नीरतृणपूर्वमनलार्चिरभिलीढं
15 व्यक्तिरहितं सदभियाति घनसूक्ष्मम्।
स्वस्वनिकरात्मकसमष्टिवपुरग्र्यं
व्यञ्जकवशात्पुनरपि स्फुरति रूपम् ॥१८४॥

मो क्ष ध र्मोक्तार्थमेवानुभवरीत्याऽपि दर्शयति—नीरतृणपूर्वमिति ॥ जलतृणकाष्ठादिमग्निज्वालालीढं सद् अग्निज्वालासम्पर्कात् सूक्ष्मरूपतया व्यक्तिरहितम्
20 अस्पष्टं सत् घनसूक्ष्मम् अतिसूक्ष्मम्, घनीभूतं सत् सूक्ष्मं वा स्वस्वनिकरात्मकसमष्टिवपुः स्वीयस्वीयसमुदायरूपसमष्टिस्वरूपम्। अग्र्यम् श्रेष्ठम्; व्यापकत्वात्। अभियाति प्राप्नोति। जलं तावत् तेजसा पीयमानं सूक्ष्मीभूय शीतलोके लीनं भवति। पार्थिवांशोऽपि तथैव सूक्ष्मीभूय ब्रह्माण्डादिगतानभिव्यक्तस्वसमष्टौ लीनं भवति, पुनर्व्यञ्जकसमवधाने सति वर्षाकालादिव्यञ्जकसमवधाने
25 सति अभ्रजलादिरूपेण व्यज्यते। अत एवान्तरिक्षगतं तेज एव व्यञ्जक-

महिम्ना व्यक्तं वियुदिति सूक्ष्मलोहधूमादिकं वज्राभ्रादीनि दृश्यन्ते। तथाच लोकानुभवानुरोधादपि पृथिव्यादिभूतानां सूक्ष्मावस्था स्थूलावस्था च व्यञ्जकतदभावादिभिरभ्युपेया। इति भावः ॥१८४॥

[95b] सूक्ष्मतनुता निगदिता ननु निमित्ता-
5 द्वैष्णवपुराणकठसामवचनेन।
व्यञ्जकविभेदवशतो हि सलिलादे-
स्स्फीतवपुरुन्नतिरपि स्फुटमुपात्ता ॥१८५॥

अथ मोक्षधर्मोक्ता तेजोगतमर्यादा जलादावपि विष्णुपुराणकठश्रुतिछान्दोग्यसिद्धेत्याह—सूक्ष्मेति॥ सलिलादेः सलिलवायुभूतेजोगगनानाम्। 10 निमित्तात् निमित्तं समुचितमाश्रित्य। सूक्ष्मतनुता अनभिव्यक्तरूपता। विष्णुपुराणकठोपनिषच्छान्दोग्यवचनेन निगदिता कथिता। एवमेव व्यञ्जकभेदवशतः स्फीतवपुरुन्नतिरपि स्थूलदेहसमृद्धिरपि अभिव्यक्तरूपत्वमपि तेनैव वचनेन स्फुटमुपात्ता भवति। इत्यन्वयः। तत्र विष्णुपुराणे तावत् पञ्चमेऽशे नवमेऽध्याये कृष्णरामसंवादे—

15 "अत्तं यथा वाडववह्निनाऽम्बु हिमस्वरूपं परिगृह्य कास्तम्।
हिमाचले भानुमतोंऽशुसङ्गाज्जलत्वमभ्येति पुनस्तदेव॥
एवं त्वया संहरणेऽत्तमेतज्जगत् समस्तं पुनरप्यवश्यम्।
तवैव सर्गाय समुद्यतस्य जगत्त्वमभ्येत्यनुकल्पमीश॥"[1]

इति समाम्नायते। अत्र वाडववह्निनेत्येतत् सावित्रादिसर्वतेजसामुप- 20 लक्षणम्।

"सरित्समुद्रभूमिष्ठास्तथाऽऽपः प्राणिसंभवाः।
चतुष्प्रकारा भगवानादत्ते सविता मुने॥
विवस्वानष्टभिर्मासैरादाय जगतोजलम्।
सोमे मुञ्चत्यथेन्दुश्च [96a] वायुनाडीमयो दिवि॥
25 हिमो ह्यब्वायुवृष्टीनां हेतुः स्वसमयं गतः।"[2]

इति वचनेन सवितुरपि जलग्राहकत्वनिर्देशात्। तथाच तेजोभिर्जलमुपरि नीयते।

तत्र शीतलोके हिमीभूय काठिन्यमाप्य कास्तम् के शीतलोकजले अस्तम् अविभागेन सूक्ष्मरूपतया लीनम्। यद्वा केन वायुना अस्तम् शीतलोकजले
5 प्रक्षिप्तमविभागेन; वायुनाडीमय इति वायोरपि तत्र सहकारित्वश्रवणात्। अनेन जलस्य सुक्ष्मावस्थोदिता। स्थूलावस्थामाह—हिमाचल इति ॥ अत्र हिमाचलपदेन शीतलोक एव परिग्राह्यः। सर्वस्मिन्नपि भूमण्डले प्रसिद्धहिमाचलादेव जलप्रचाराभावात्, पर्वतान्तरेभ्योऽपि जलप्रचारदर्शनात्। अतोऽचल इव शीतेन घनीभूतत्वाद् हिमाचल इति शीतलोकोऽन्तरिक्षनामा ग्राह्यः। तत्र भानुमतोंऽशुसङ्गात्। अत्र भानुमानिति न सूर्य-
10 परिग्रहः; रात्रौ वर्षणे सवितृकरसङ्गेन शीतलोदकद्रवीभावस्य वक्तुमशक्यत्वात्। अतः शीतलोकादूर्ध्ववर्तितेजोलोक एव सर्वतः प्रदीप्तप्रभतया भानुमानित्युच्यते। तथाच भानुमतस्तेजोलोकस्य तेजोलोकोर्ध्ववर्तिवाय्वावरणात् कालस्वाभाव्यादर्वाग्भूते वायौ सति तेजोलोककराणामधोमुखतायां तत्किरणसम्पर्कात् शीतलोकस्थसूक्ष्माभ्रादिजननोत्तरं जलतां प्रकटामुपैति।
15 युगपद् बहुतेजश्छटासंपर्कात् सत्वरमेव घनीभूतजलस्फोटने करकाः स्थूलपाषाणाश्च पतन्ति। अधोमुखतेजश्छटैव विद्युत्। सत्वरस्फो[96b]टने यः शब्दः, स एव वज्रनिर्घोषः। शीतलोके सूक्ष्मजलेन सहागतानां लोहानां जलेन सह तत्र स्थितानां तेजश्छटासम्पर्केण द्रवीभूय भूमौ पाते सति वज्रलोहोऽयमिति गीयते। अत एव लोहमयभूप्रदेशेषु मुहुर्मुहुरशनिपातो भवति।
20 अत एव भूमिष्ठजलेन सह मत्स्यभेकोरगाद्यवयवानामपि गमनात् शीतलोके मत्स्याद्याकारजननाद् जलेन सह मत्स्यादयः पतन्ति। एवं मुक्ताफलमपि जलपरिपाकात् पतति। एवं सुवर्णादिधातवोऽपि लोहन्यायेन कदाचित् पतन्ति। सोम इति ॥ सविता सोमे शीतलोकनियन्तरि मुञ्चति। स च सोमः स्वलोकोत्तरवर्तितेजोलोकादूर्ध्वगतवाय्वावरणादागतवायुनाडीमयः सन्
25 समयानुसारेण हिमादिहेतुर्भवतीत्यर्थः। एवं कठोपनिषदि श्रूयते—

> "यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति।
> एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥
> यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति।
> एवं मुनेर्विजानत आत्मा भवति गौतम ॥"[1]

इति। यथेति ॥ दुर्गे अत्युच्चपर्वताग्रे। शीतलोकात् सोमसंज्ञकेन पर्जन्येन वृष्टम् शीतलोकात् पृथक्कृतं जलम्। पर्वतेषु पादपर्वतेषु नानाविधगैरिकादिधातुमत्सु। विधावति नानागैरिकादियोगाद् नानाविधं धावति। एवं धर्मान् बुद्ध्यहङ्कारमनःप्राणदेहादिधर्मान्। आत्मनि पश्यन् ब्राह्मणोऽहम्,
5 क्षत्रियोऽहम्, कर्ता, भोक्ता, गौरः, काण इत्यादिरूपेणात्मानं पश्यन्। तदेवं धर्मानाश्रित्य धर्मानुरोधेन यजनार्थोपार्जनादिप्रपञ्चव्यापारेष्वनुर[97a]क्त इतस्ततस्तत्फलभोगाय धावति। यथेति ॥ उदकम् नद्यादिषु विद्यमानं मलिनं जलम्। शुद्ध उदके मूलभूतशीतलोकवर्तिनि। शुद्धं यथा भवति तथा। सवितृकरादिभिरुपरि नीत्वा क्षिप्तम्। तादृगेव दुर्गे वर्षणात्
10 पूर्वं यथा भवति तथैव भवति। एवम् अखण्डस्वरूपादविद्याया विभक्तः। अहङ्कारादि मलिनं विजानतो मुनेः। ज्ञानेनाविद्यामलनिर्हरणद्वाराऽखण्डात्मा सन् आत्मा जीवो भवतीत्यर्थः। अनेन पूर्वमनुनाऽध्यारोप उक्तः, उत्तरेण ज्ञानेनाज्ञानापगमे शुद्धाखण्डरूपमोक्षाप्तिरिति सिद्धम्। पूर्वस्मिन् शुद्धजलस्य सूक्ष्मस्य स्थूलता, उत्तरस्मिन् स्थूलस्य सूक्ष्मता च गमिता। इति दिक्। छा
15 न्दोग्ये दशमेऽध्याये "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः। अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते। एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय रंप ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष"[1] इति पठ्यते। अशरीरमिति ॥ अविद्यानिमित्तकशरीरबन्धेन रहितं विद्याविनाशितानेकविधाविद्यम्। प्रियाप्रिये सुख-
20 दुःखादिद्वन्द्वलक्षणे। न स्पृशतः। तत्र दृष्टान्तः—अशरीर इत्यादि। वाय्वादीनि शरीररहितान्यनुकूलांशप्रतिकूलांशौ न स्पृशतः; सावयवत्वेन स्थूलतया सशरीराणि तु वाय्वादीनि सुयोगावयोगौ स्पृशत एव। तत्राशरीरो वायुः, अ[97b]शरीरमभ्रम्, अशरीरा विद्युत्, अशरीरः स्तनयित्नुश्च भवति। तानि संश्लेषवन्ति अशरीराण्येतानि भवन्ति वक्ष्यमाणरीत्येत्यर्थः। अथाभ्रलोके
25 शीतलोकादधोभागस्थे सशरीराणि वाय्वादीनि सर्वलोकप्रसिद्धानि क्रमेणाशरीराणि भवन्तीत्याह—तद्यथेति। अमुष्मादाकाशात् मानुषाकाशादूर्ध्ववर्तिमेघमण्डलस्थादाकाशात्। एतानि वाय्वभ्रविद्युत्स्तनयित्नुलक्षणानि सशरीराणि कार्याणि परं ज्योतिरुपसंपद्य शीतलोकात् परं तेजोमण्डलस्थं ज्योतिः। तदूर्ध्वगतवायोरधोगमने सति तस्य ज्योतिष ऊर्ध्वशिखत्वादधो-

गतविद्युतोऽभ्रस्य वायोः स्तनयित्नोश्चाकर्षकत्वादधः स्थातुमशक्नुवन्ति सन्ति। समाकर्षकतेजोमहिम्ना वायुरूर्ध्वं तेजसोऽपि गत्वा स्वमण्डलेनैकीभूतो भवति। एवं विद्युत्तेजोमण्डलं प्रविश्यैकीभूता भवति। अभ्रमपि जलभूमयं जलाधिक्यात् शीतलोकं गतं शीतेनैकीभूतं भवति। 5 स्तनयित्नुरपि शब्दांशेन वायूर्ध्ववर्त्याकाशावरणे लीनो भवति। वज्रांशेन भूमावापतन्नेव शीतलोकगतभुवोंऽशेनैकीभूतो भवतीत्यर्थः। एवम् शरीराद्यविद्यांशनाशे। परं ज्योतिरुपसंपद्य स्वेन निजरूपेणासंसारित्वलक्षणेन संपद्यत इत्यर्थः। अत्र वाय्वादीनां पृथक् सिद्धानां स्वमूलरूपे सूक्ष्म रूपेणावस्थानमुक्तं भवति ॥१८५॥

10 [98a] यत्तु निशि नेति परिणद्धमिह सूत्रं
तद् भवति मानमखिलेऽण्डवलयादौ।
अस्फुटतरप्रतततेजसि यदभ्राद्
व्यञ्जकमुखे लघु तडित्प्रभृति भाति ॥१८६॥

अथ मो क्ष ध र्मा दिष्विव चतुरध्यायीशास्त्रेऽपि तेजसः सावित्रस्य 15 सकलाण्डादिव्यापित्वेन सूक्ष्मरूपेणाभिव्यञ्जकाभावेऽपि सत्त्वं भवतीति सूत्रं निबद्धम्, तदपीह मानमिति स्पष्टयति—यत्त्विति ॥ "रश्म्यनुसारी"[1]ति सूत्रेणोपासको मृतः सूर्यरश्म्यनुसरणेनोर्ध्वं यातीति निरूपितम्। रात्रौ मृतस्योपासकस्य सूर्याभावेन तदानीं रश्म्यनुसरणं कथं भवतीत्याशङ्क्य सवितृमण्डलव्यञ्जकाभावेऽपि पूर्वं सवितृबिम्बाभिव्यञ्जितं ब्रह्माण्डादिव्याप्तं 20 तेजोऽनभिव्यक्तं रात्रावपि तिष्ठतीति रश्म्यनुसरणं घटत इत्येतत्पूर्वपक्षसिद्धान्तात्मकं सूत्रम् "निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति चे"[2]ति यत् परिणद्धम्, तत् सूत्रमखिलेऽण्डवलयादावस्फुटतरप्रतततेजःसत्त्वे प्रमाणं भवति। यत् यस्मात् कारणात्। अभ्रात् आकाशात्। समयादिव्यञ्जकाग्रे लघु शीघ्रं तडिदादि तेजो भाति, ततस्तत् सूत्रं मानमित्यर्थः। निशि सवितृ- 25 बिम्बस्याभावात् सूर्यकरा न सन्तीति चेत्, न ; किरणसम्बन्धस्य यावत्कालं देहः, तावत्कालभावित्वाद् रात्रावपि सूक्ष्मरूपकिरणसम्बन्धो भवति।

दर्शयति चैतमर्थं श्रुतिः—"अमुष्मादादित्यात् प्रतायन्ते । आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते । तेऽमुष्मिन्नादित्ये सृप्ताः"[1] इति सूत्रयोजना ॥१८६॥

[98b] इन्द्रियगणोऽपि सकलेऽण्डवलयादा-
वस्फुटतनुर्भवति भूतगणतुल्यः ।
5 व्यञ्जयितृसंनिधिवशात्स्फुटशरीरः
कार्यमखिलं समुचितं जनयति स्वम् ॥१८७॥

अथेन्द्रियेष्वपि भूतेषु सिद्धं न्यायमतिदिशति—इन्द्रियेति ॥ समष्टिरूप इन्द्रियगणः चक्षुरादिसमूहः । भूतगणवदेव अस्फुटतनुः अनभिव्यक्ततनुः सकलाण्डवलयादौ भवति । व्यष्टिचक्षुरादिव्यञ्जयितृसंनिधानात्तु समष्टीन्द्रिय-
10 गणोऽभिव्यक्तः स्वीयं स्वं समुचितम् निखिलं कार्यं विषयप्रकाशनादिलक्षणं जनयति । इत्यन्वयः । सुगममितरत् ॥१८७॥

कर्तृसमताविरहतः कथमिव क्त्वाऽ-
ध्यस्यवचसीति नहि शङ्क्यमभियुक्तैः ।
प्रेत्यवचनाश्रितपरावरजयोगात्
15 क्त्वा नु भवतीति निरवद्यमिह वेद्यम् ॥१८८॥

अथ भाष्ये अध्यस्य नैसर्गिकोऽयं लोकव्यवहार इत्यत्र व्यवहारो भवतीत्येव वाक्यसमाप्तेरध्यासे पुरुषस्य कर्तृत्वाद् भवने व्यवहारस्य कर्तृत्वात् समान-कर्तृकत्वाभावेन "समानकर्तृकयोः पूर्वकाल"[2] इति क्त्वाऽनुपपन्न इत्याशङ्क्य परिहरति—कर्तृसमतेति ॥ अध्यस्येति वचसि कर्तृसमताविरहात् कथमिव क्त्वा
20 स्यादित्यभियुक्तैः शङ्क्यं न भवति ; "समानकर्तृकयोः पूर्वकाल"[3] इत्यनेन क्त्वाविरहेऽपि "परावरयोगे चे"[4]ति सूत्रेण "न प्रेत्य संज्ञाऽस्ती"[5]ति श्रुतिवचन इव कार्यकारणभावादिनियतपौर्वापर्यमात्रेणापि क्त्वा तावदुपपद्यते । प्रेत्यवचने-नाश्रितो यः परावरजनितयोगः, तस्मात् । तस्मात् क्त्वा भवतीति । इह भाष्ये । सर्वं निरवद्यं वेद्यं भवति । इत्यन्वयः ॥१८८॥

[99a] शिक्षितविपक्षमभिरक्षितसपक्षं
पक्षयुगलाकलितमक्षतपदार्थम् ।
युष्मदिति भाष्यमिह युक्तिनिकरेणा-
युष्मदभिवीक्षणपरीक्षितमवेक्ष्यम् ॥१८९॥

5 अथ युष्मदित्यादिभाष्याव्याख्यारीतिं सङ्ग्रहेणोपसंहरति—शिक्षितेति ॥ इह ग्रन्थारम्भे । युष्मदित्यादि भाष्यम् । यद्यपि तथाऽपीति पक्षद्वययुतम् अक्षतपदार्थम् अहीनपदार्थं पदार्थपुष्टियुतम् । शिक्षितविपक्षम् परवादिकृतदोषोद्धाराद् विदोषम् । अभिरक्षितसपक्षम् स्थापितसिद्धान्तमर्यादम् । युक्तिनिकरेणायुष्मदभिवीक्षणपरीक्षितम् आयुष्मताम् सज्जनानां बहुकालजीविनां मुहुर्विचार-
10 कृतपरीक्षणम् । अवेक्ष्यम् ज्ञेयम् । तथाच बहुकालं बहुभिर्न्यायैर्मुहुरभिवीक्षणेन परीक्षितत्वाद् दोषगन्धेनापि रहितमाधुनिकैरपि जनैः स्वीयैः परकीयैश्चावेक्षणीयं भवति । सम्यग् दर्शनेऽतिपरीक्षकैः परीक्षिते न दोषलेशसंभावनाऽपि । इति भावः ॥१८९॥

आहवचनेन गदितो गगनपद्मं
15 विभ्रम इति स्वहृदयेन परिचिन्त्य ।
लोकविदितभ्रमतनौ न पततीति
प्रष्टृवचनं प्रवदति प्रचुरभावम् ॥१९०॥

अथ तथाऽप्यन्योन्यस्मिन्नित्यादिना तावद् अहं गौर इत्यान्तरभ्रमो निरूपितः, स तावदसङ्गतः ; लोकप्रसिद्धभ्रमलक्षणस्य तत्राभावादिति प्रवर्तितपूर्व-
20 पक्षवचोऽवतारयन्ननुवदति—आहवचनेनेति ॥ तथाऽप्यन्योन्यस्मिन्निति गदितो विभ्रमः अहमित्यादिलक्षणः । गगनपद्मम् अलीकं भवितुमर्हति । लोकविदितभ्रमतनौ न पततीति लोकप्रसिद्धभ्रमलक्षणसमनियतलक्ष्यतावच्छेदकानाक्रान्तत्वादिति स्वहृदयेन परिचिन्त्य विचार्य प्रचुरभावं प्रष्टृवचनम् अनेकतात्पर्यकमुक्तरीत्या प्रष्टृवचनं कोऽयमध्यासो नाम अप्रसिद्धोऽनुभूयमानोऽध्यासः को
25 वेत्यर्थकं प्रतिवदति आहेत्यादिना सन्दर्भेण । इत्यर्थः ॥१९०॥

[99b] लोकविदितभ्रमविलक्षणतयैवा-
ध्यास उदितोऽनुभवरीतिमतिलङ्घ्य ।
सर्वभुवनेषु विदितोऽनुभवसिद्धोऽ
ध्यास इह को हि वद तर्हि कथितान्यः ॥१९१॥

5 **अथ** कोऽयमित्या**दिप्रश्नस्य भावं दर्शयति**—लोकेति ॥ अनुभवरीतिमतिलङ्घ्य **अनुभवपथमुल्लङ्घ्य** । लोकविदितभ्रमविलक्षणतयैव **लोकप्रसिद्धस्मर्यमाणारोप-विलक्षणत्वेन** । **अयम**ध्यासोऽन्योन्यस्मि**न्नित्यान्तरोऽध्यासः** । उदितः **कथितः** । **स तावदलीककल्प एव ; प्रसिद्धभ्रमलक्षणसमनियतलक्ष्यतावच्छेदकधर्मशून्य-त्वात्** । **कथं तर्हि तद्धर्मशून्यत्वमुक्तभाष्यस्येति चेत्**, तर्हि **सर्वानुभवेषु**
10 विदितः **प्रसिद्धोऽनुभवारूढः** कथितान्यः अन्योन्यस्मिन्नि**त्युक्तादन्योऽध्यासः स्वेन परिज्ञायमानः** को हि **वर्तते** वद । **तल्लक्षणे विचार्यमाणे तल्लक्षणसमनियत-लक्ष्यतावच्छेदकेन** अयमन्योन्यस्मिन्नि**त्युच्यमानोऽध्यासोऽनाक्रान्त एव भवति** । **इति भावः** ॥१९१॥

[100a] लौकिकविपर्ययतनौ न पततीयं
15 भ्रान्तिरिति शङ्कितुमिहायमनुयोगः ।
देशिकमणिः स्मृतिगिरा स्मरणरूप-
भ्रान्तिमभिलक्षयति दोषपरिहीनम् ॥१९२॥

**अथ प्रश्नभावं प्रकाशयन्** स्मृतिरूप **इति लक्षणभाष्यमवतारयति**—लौकिकेति ॥ कोऽयमध्यासो नामेत्यनुयोगः **प्रश्नः** । अन्योन्यस्मिन्नितीयं भ्रान्तिः । लौकिकविपर्ययतनौ
20 **स्मर्यमाणारोपतनौ** । न पतति **तेन सा मिथ्येति** शङ्कितु**मित्यर्थः** । देशिकमणिः **आचार्यश्रेष्ठः** । स्मृतिरूपः परत्र पूर्वदृष्टावभास **इति वाचा** । स्मरणरूपभ्रान्तिम् **स्मरणस्य रूपमिव रूपं यस्याः सा स्मरणरूपा, स्मर्यमाणारोपलक्षणां भ्रान्तिम्** । दोषपरिहीनम् **दोषरहितं यथा भवति तथा** । **लक्षयति लोक-प्रसिद्धभ्रमस्वरूपपरिज्ञानायेत्यर्थः** । **अत्र** स्मृतिरूपः परत्र पूर्वदृष्टावभास **इति**

स्मर्यमाणारोपलक्षणवाक्यम्। पूर्वं दृष्टम् अनुभूयमानभ्रमात् पूर्वं दृष्टं चिद्भासितमन्तःकरणस्य विषयाकारपरिणामस्वरूपम्। तस्य सूक्ष्मरूपवासनारूपतामापन्नस्य अवभासः प्रफुल्लावस्थापत्त्या चित्कृतोऽवभासः, प्रकाशः स्फुरणम्। परत्र परविषयावच्छेदेन। यद्विषयाकारा वृत्तिः, तद्विषयविभिन्न- 5 जातीयविषयावच्छेदेनेति यावत्। प्रकाश्यमानप्रफुल्लावस्थैवाध्यास इत्यर्थः। पूर्वदृष्टावभास इत्येतावन्मा[100b]त्रे निर्दिश्यमाने स्मृतावतिव्याप्तिः ; पूर्वदृष्टस्यानुभवकाले चिद्भासितस्य बुद्धिपरिणामस्य सूक्ष्मीभावेन वासनाभावमापन्नस्य पुनः प्रफुल्लतायां सदृशादृष्टचिन्तादिभिर्जातायां सा प्रफुल्लावस्था चिद्भास्या जातेति तत्र लक्षणसत्त्वात्, अतः परत्रेति पठितम्। परविषयाव- 10 च्छेदेन पूर्वदृष्टावभासोऽध्यास इत्यर्थः संपद्यते। स्मृतिस्तावदुद्बुद्धसंस्कारात्मिका चिद्भास्या न परविषयावच्छेदेन ; विनैव विषयावच्छेदं सा गङ्गा, सा मातेति स्मृत्युदयात्। अत्र स्मृतिरूप इति पदसमभिव्याहारात् स्मृतिरूपत्वान्यथानुपपत्त्या पूर्वदृष्टावभासपदं वासनावभासपरं पर्यवस्यति ; पूर्वदृष्टपदस्यैशपदार्थमपहाय जैवपदार्थरूपान्तःकरणपरिणाम एव पर्यवसानात्। तत्र 15 स्मृतिरूपपदमनाहार्यज्ञानत्वे स्मृतिविषयासंस्पर्शित्वे च पर्यवस्यति। तत्रानाहार्यत्वे सति स्वविषयरहितत्वे सति परविषयविशेषतिरस्कारकत्वे च सति परविषयावच्छेदेन वासनावभासो भ्रम इति सिद्ध्यति। अत्र स्मृतिरूपः स्मृतिरूपः पूर्वदृष्टावभासः परत्रेति निर्देशसामर्थ्यात् परविषयविशेषाच्छादकत्वेन परविषयावच्छेदेन स्मृतिरूपवासनावभास इति सिद्ध्यति। एवं चावभासो भ्रम 20 इति कथनेऽयं घट इति प्रत्यक्षेऽतिव्याप्तिः, अतो वासनेति। अयं घट इति प्रत्यक्षस्येन्द्रियसंनिकर्षजन्यत्वेन वासनासंभूतत्वाभावेन वासनावभासत्वाभावान्नातिव्याप्तिः। वासनाभासो भ्रम इत्युक्ते स्मृतावतिव्याप्ति[101a]रिति परविषयावच्छेदेनेत्युक्तम्। परविषयावच्छेदेन वासनावभासो भ्रम इति कथने रूपकप्रतीकोपासनानिगरणादावतिव्याप्तिः, अतोऽनाहार्यत्वे सतीति 25 निरुक्तम्। रूपकादेराहार्यत्वाद् नातिव्याप्तिः। प्रत्यभिज्ञाया अनाहार्यत्वादिदन्त्वविशिष्टपरविषयावच्छेदेन तत्तावासनावभासरूपत्वाद् अतः परविषयविशेषांशतिरस्कारकत्वे सतीत्युक्तम्। प्रत्यभिज्ञायां परविषयविशेषेदन्त्वस्य तत्तया प्रत्याख्यातत्वाभावाद् नातिव्याप्तिः। अनाहार्यत्वे सति परविषयविशेषतिरस्कारकत्वे च सति परविषयावच्छेदेनावभासो भ्रम इति कथने

निम्बरसादियोगेन तिक्तशर्कराबोधे तिक्ता शर्करेत्येवंलक्षणेऽतिव्याप्तिः ; शर्करावच्छेदेनानाहार्यतया परशर्करागतमाधुर्यतिरस्कारकतया तिक्तरसाव भासात् । अतो वासनेति वा स्वविषयरहितत्वे सतीति वा विशेषणं दीयते । तत्र तिक्तज्ञाने निम्बरसलक्षणविषयस्य सत्त्वेन तत्रेन्द्रियसंनिकर्षजन्यत्वस्य
5 सत्त्वेन च वासनावभासत्वरूपत्वाभावात्, स्वविषयराहित्याभावाच्च । एवं च तत्र वासनाविशेषणस्वविषयरहितत्वविशेषणयोर्विकल्प एव ; अन्यतरेणैव दोषनिर्हरणात् । इति दिक् ॥१९२॥

[101b] अन्यविषये मतिनियन्त्रितपरैक्या-
ध्यासमखिलं निगरणादिवपुरिद्धम् ।
10 स्वीयविषयेण रहिताऽनुमतिपूर्वा-
न्या स्मृतिसमानतनुरत्र निरुणद्धि ॥१९३

अथ स्मृतिरूपपदप्रयोजनं रूपकनिगरणोपासनादिनिवारणद्वारा दर्शयति— अन्येति ॥ स्मृतिरूपपदेनानाहार्यत्वस्वविषयरहितत्वादेः प्रतिपादनाद् अनुमति-पूर्वान्या आहार्यभिन्ना । स्वविषयरहिता स्मृतितुल्या तनुर्ज्ञानसम्बन्धिनी ।
15 अन्यविषये विषयान्तरे । निगरणादिशरीरसमिद्धं मतिनियन्त्रितपरैक्याध्यासम् बुद्धिपूर्वकपरपदार्थैक्यारोपम् । निरुणद्धि निवारयति । तथाच स्मृतिरूपपद बोधितानाहार्यत्वं रूपकादावतिव्याप्तिं वारयति । इत्यर्थः ॥१९३

नैव विषयेण शबलं स्मरणमस्मा-
न्मध्यमपदं स्मरणवारणमुपात्तम् ।
20 लक्षणमिदं स्मरणलक्षणशरीरा-
ध्यासनियतं भवति दोषपरिमुक्तम् ॥१९४॥

अथ परत्रेतिपदप्रयोजनं स्मृतिनिवारणद्वारा दर्शयति—नैवेति ॥ सा गङ्गा, सा मातेति स्मृतिः प्रत्यक्षवद् न स्वविषयसंस्पर्शिनी, न वा परविषय-संस्पर्शिनी । एवं च पूर्वदृष्टावभास इत्यनेन स्मृतिरूपपदसमभिव्याहारेण

वासनावभास इत्यर्थलाभेन स्मृतेर्वासनावभासरूपत्वादतिव्याप्तेस्तद्वारणाय परत्रेतिपदं दत्तम्। परविषयावच्छेदेन जायमानोऽवभासो न स्मृतिरिति नातिव्याप्तिः। स्मरणं नैव विषयेण स्वीयेन परकीयेन वा शबलं भवति। तस्मात् परत्रेति मध्यमपदं स्मरणवारणं स्मृतिनिवर्तकमुपात्तं भवति। इति पदयोजना। अथ स्मर्यमाणारोपलक्षणभ्रमस्य लक्षणं स्मृतिरूप इत्युच्यमानमदुष्टमेवेत्याह—लक्षणमिति ॥ स्मरणलक्षणदेहाध्यासनियतमिदं स्मृतिरूप इति लक्षणं दोषरहितं भवति। इत्यर्थः ॥१९४॥

[102a] देशसमयान्तरयुताद् ननु विभिन्ने
कालविषयान्तरविशिष्टवपुरर्थे।
सोऽयमिति बुद्धिमपि वारयितुमुक्ते
लक्षणपथे वचसि पूर्वपरवाण्यौ ॥१९५॥

अथ परत्रपूर्वदृष्टावभासपदद्वयलभ्यं परविषयविशेषांशतिरस्कारकत्वं विशेषणं मनसि निधाय तत्प्रयोजनं प्रत्यभिज्ञातिव्याप्तिवारणमिति दर्शयति—देशेति ॥ अनाहार्यत्वे सति परविषयावच्छेदेन वासनाभासो भ्रम इति कथने सोऽयं देवदत्त इति प्रत्यभिज्ञायामतिव्याप्तिः स्यात्; तत्प्रत्यभिज्ञाया अनाहार्यत्वात्, इदन्त्वविशिष्टस्य तत्राविशिष्टाद् भिन्नत्वेन परवस्तुत्वात्, सोऽयं देवदत्त इति तद्देशतत्कालोपलक्षितत्वरूपेण वासनावभासरूपत्वात्। तथाच देशसमयान्तरविशिष्टाद् भिन्ने तद्देशतत्कालविशिष्टाद् भिन्ने कालविषयान्तरविशिष्टवपुरर्थे एतद्देशैतत्कालविशिष्टशरीरकार्थे परत्र सोऽयमिति बुद्धिम् सोऽयं देवदत्त इति ज्ञानम्। इदन्त्वांशे निविष्टपरम् तत्तांश उपलक्षितपरं वा वारयितुं लक्षणवाक्येऽस्मिन् परत्र पूर्वदृष्टावभास इति पदे पठिते भवतः। इत्यन्वयः ॥१९५॥

[102b] तेन परवस्तुगविशेषपरिमोषा-
धायकतया स्फुरति चायमवभासः।

शब्दगतसंनिधिविशेषमुखमानैः
सिद्ध्यति विचिन्तितविशेषघटितोऽर्थः ॥१९६॥

परत्र पूर्वदृष्टावभासपदलभ्यार्थद्वारा प्रत्यभिज्ञातिव्याप्तिपरिहारप्रकारं दर्शयति —तेनेति ॥ परत्र पूर्वदृष्टावभास इति कथनेन परवस्तुगतविशेषपरिमोष-
5 करत्वेनावभासः स्फुरति। परवस्तुगतविशेषभानप्रतिबन्धकत्वमवभासस्या-पेक्षितम्। प्रत्यभिज्ञा तु परवस्तुगतविशेषमिदन्त्वं नाच्छादयति ; तत्ताया-मुपलक्षणपरत्वेनेदन्त्वपरिमोषकत्वाभावात्। तथाच प्रत्यभिज्ञायां नाति-व्याप्तिः। अथ परत्रपूर्वदृष्टावभासपदाभ्यां कथं परवस्तुगतविशेषाच्छाद-कत्वरूपार्थसिद्धिरित्याशङ्क्य तल्लाभप्रकारं दर्शयति—शब्देति ॥

10 "वक्तृबोद्धव्यकाकूनां वाच्यवाक्यान्यसंनिधेः।
प्रस्तावदेशकालादेर्वैशिष्ट्यात् प्रतिभाजुषाम् ॥"[1]

इत्यादिभिः शब्दगतशब्दान्तरसंनिधिविशेषप्रमुखप्रमाणैर्विचित्रिता ये विशेषाः, तद्घटितोऽर्थः सिद्ध्यति। एवं च प्रकृतेऽपि निरुक्तपदद्वयसमभि-व्याहारात् परवस्तुगतविशेषमोषकत्वांशः सिद्ध्यति। इति भावः ॥१९६॥

15 [103a] स्वीयविषयेण वियुता प्रथमदृष्टेः
सूक्ष्मतनुरेव विशदा चिदवभास्या।
भ्रान्तिरपरत्र मतिपूर्वकविभिन्ना
चान्यविषयाश्रितविशेषमतिरोध्री ॥१९७॥

अथोक्तरीत्या स्मृतिरूपः परत्र पूर्वदृष्टावभास इति लक्षणवाक्यसिद्धार्थविशेषं
20 सङ्गृह्य दर्शयति—स्वीयेति। अत्र स्मृतिरूप इत्यनेनानाहार्यता स्वविषयत्वं च यदुपात्तम्, तद् द्वयमपि मतिपूर्वकविभिन्नेति स्वीयविषयेण वियुतेति च दर्शितम्। प्रथमदृष्टेः सूक्ष्मतनुरेव चिदवभास्या। पूर्वदृष्टावभासः पूर्वम् प्रथमं या दृष्टाऽन्तःकरणस्वविषयाकारपरिणतिश्चिदवभासिता, तस्या या सूक्ष्मा तनुः सूक्ष्मीभावो वासनारूपम्, सैव विशदा पश्चात् प्रफुल्ला सती चिदवभास्या
25 भवति। तथाच वासनावभास इति सिद्धं भवति। तदेतत् प्रथमदृष्टे-

रित्यादिना सङ्गृहीतम्। परत्र पूर्वदृष्टावभास इति पदद्वयसमभिव्याहारसिद्ध-मर्थमाह—अन्यविषयाश्रितविशेषमतिरोधीति ॥ परविषयगतविशेषांशावरिकेत्यर्थः। एवं च वासनैवापरविषयावच्छेदेन विशदा चिद्भास्या भ्रान्तिर्भवति। इत्यर्थः ॥१९७॥

5 [103b] अत्र तु परत्रपदतो यदि विभेदो
धर्मिकृत एव समुपात्त इति पक्षः।
तर्हि नहि दोष इति सोऽयमितिबुद्धा-
वन्यविषयावरकतेति नहि देयम् ॥१९८॥

अथ प्रकारान्तरेण सोऽयमिति प्रत्यभिज्ञातिव्याप्तिवारणसंभवात् परत्र
10 पूर्वदृष्टावभास इति पदद्वयसमभिव्याहारलभ्यं परविषयविशेषाच्छादकत्व-विशेषणं न देयमित्याह—अत्रेति ॥ अत्र परत्रेतिपदेन धर्मिकृत एव भेदो गृहीतः, न धर्मकृतः। तथाचान्यधर्मिणि वासनावभास इति यदि पक्षः, तर्हि सोऽयं देवदत्त इति बुद्धौ तत्तेदन्तयोरेक एव धर्मी, न धर्मिभेद इति तत्रातिव्याप्तिदोषा-भावादन्यविषयावरकत्वे सतीति विशेषणं परत्रादिपदलभ्यं न देयमेव।
15 इति भावः ॥१९८॥

[104a] स्वीयविषयेण रहिता न भवतीयं
सोऽयमिति बुद्धिरुपलक्षकतया हि।
तत्त्वमुपपन्नमिति दोषरहितत्वाद्
लक्षणमिदं जयति लक्षितसरण्या ॥१९९॥

20 अथ प्रकारान्तरेणापि प्रत्यभिज्ञायामतिव्याप्तिवारणात् परत्रपदेन धर्मि-भेदविवक्षणमपि न कार्यमित्याह—स्वीयेति ॥ इयं सोऽयं देवदत्त इति बुद्धि-स्तत्तांशे वासनावभासरूपा स्वीयविषयरहिता तत्संस्पर्शरहिता न भवति। तत्त्वम् तद्देशतत्कालवैशिष्ट्यलक्षणमुपलक्षकत्वेन सम्बन्धेन देवदत्तव्यक्तिम्।

उपपन्नम् प्राप्तम्। इति स्वविषयवत्त्वेन तद्रहितत्वाभावाद् दोषविमुक्तत्वात् परवस्तुविशेषाच्छादकत्वलक्षणविशेषाभावेऽपि परत्रपदेन धर्मिकृतभेदमात्रविवक्षाभावेऽपि च निरुक्तमार्गेण भाष्योक्तमार्गेण लक्षणं जयति सर्वोत्कर्षेण वर्तते। इत्यर्थः ॥१९९॥

5 [104b] भिन्नविषयेऽन्यविषयोत्कलितधर्मा-
रोपमिह विभ्रमतया किल नयज्ञाः।
भेदमतिशून्यविषयस्मरणतुल्या-
र्थग्रहयुगं भ्रमतयाऽहुरथ साङ्ख्याः ॥२००॥

अथ आह कोऽयमध्यासो नामेति प्रसिद्धो लोकेष्वध्यासः क इति प्रश्ने
10 स्मृतिरूप इति स्मर्यमाणारोपलक्षणः प्रसिद्ध इति निरूपितम्। सम्प्रति तस्यैव स्मर्यमाणारोपस्य लोके प्रसिद्धिं सूचयितुं समस्तवादिनां प्रकारभेदसिद्धमतभेदान् प्रदर्शयता भाष्यकृता प्रथमं प्रदर्शिते तं केचिदिति केचित्त्विति न्यायसाङ्ख्यमते विवृणोति—भिन्नेति॥ तत्र साङ्ख्ये षडध्यायात्मके शास्त्रे पञ्च ख्यातीर्भ्रमे वादिभिरङ्गीकृताः परिगृह्य प्रथमतश्चतस्रः ख्यातीर्निराकृत्य
15 पञ्चमी ख्यातिः स्वाभ्युपेता व्यवस्थापिता। तथाहि—भ्रमशरीरनिर्वाहिका वादिभिरङ्गीकृताः पञ्च ख्यातयः—असत्ख्यातिः, सत्ख्यातिः, अनिर्वचनीयख्यातिः, अन्यथाख्यातिः, अख्यातिश्चेति। तत्र प्रथमं भगवान् सूत्रकारोऽसत्ख्यातिं निराकृतवान् "नासतः ख्यानं नृशृङ्गवत्"[1]। इदं रजतमिति भ्रमस्थले असतः तुच्छस्य रजतस्य ख्यानम् भानं नृशृङ्गस्येव भवितुं नार्हति।
20 यदि तुच्छस्यापि भानं स्यात्, तर्हि नृशृङ्गस्यापि कचिद् भानं स्यादित्यर्थः। अथ सत्ख्यातिवादमपि तथैव निराकृतवान् "न सतो बाधदर्शनात्"[2]। शुक्ताविदं रजतमिति भ्रमस्थल एव शुक्तौ शुक्तित्ववदेव विद्यमानरजतत्वस्य ख्यानं भ्रमः शुक्तित्वरजतत्वादिजातीनां सकलदेशगतनानाविधशुक्तिरजतादिव्यक्तिसम्बन्धसिद्धये जगद्व्यापितायाः एष्टव्यत्वेन रजतत्वादेः शुक्तावपि सम्बन्धसत्त्वेन
25 सत्त्वात् शुक्तिसंस्थानस्य [105a] शुक्तित्वमात्राभिव्यञ्जकत्वेऽपि दोषविशेषेण शुक्तिसंस्थानतिरोधाने शुक्तित्वव्यञ्जकास्फूर्तेर्दोषरहितसामान्यशुक्त्यवयव एव

रजतत्वस्य व्यक्तिं जनयतीति सत एव रजतादेः ख्यानं घटत एवेति सतः ख्यानं न भवति। कुतः। बाधदर्शनात्। यदि रजतत्वं विद्यमानमेवाभिव्यक्तम्, तर्हि उत्तरकालेऽपि रजतमित्यादिव्यवहारो दृश्येत। तस्मात् सत्ख्यातिवादोऽयं नैव ग्राह्य इत्यर्थः। अथ वेदान्तिसंमतामनिर्वचनीयख्याति
5 प्रत्याचख्यौ "नानिर्वचनीयस्य तदभावात्"[1]।

"नासद्रूपा न सद्रूपा माया नैवोभयात्मिका।
सदसद्भ्यामनिर्वाच्या मिथ्याभूता सनातनी॥"[2]

इति स्मृतेरनिर्वचनीयमायाकार्यात् कारणस्याप्यनिर्वचनीयत्वेन तत्परिणामरूपस्यानिर्वचनीयस्य रजतस्य ख्यानं न संभवति। कुतः। तदभावात् सद्-
10 सद्भिन्नस्य वस्तुनोऽभावेनानिर्वचनीयवादपरिग्रहायोगात्। नासतो न सतो नानिर्वचनीयस्येति सूत्रत्रयनिरस्तप्रकारत्रयरूपा न भवति। सदसद्रूपेण निर्द्धारणानर्हा प्रतिक्षणमन्यथाभावेन मिथ्यारूपा। सनातनी स्वरूपतो नित्येति स्मृतेरर्थेनानिर्वचनीयवादस्य क्वापि परामर्शनादित्यर्थः। अथान्यथाख्याति निराकरोत् "नान्यथाख्यातिः स्ववचोव्याघातात्"[3]। शुक्तिरूपेण विद्यमानायाः
15 शुक्तेर्देशान्तरस्थरजतगतरजतत्वप्रकारेण ख्यातिर्भ्रम इदं रजतमिति। तत्र पुरोवर्तिनि वस्तुनि चक्षुस्संयोगस्य रजतत्वे च ज्ञानस्य संनिकर्षस्य सत्त्वादिति। तद् न संभवति; स्ववचोव्याघातात् अन्यथाऽन्यत्र विद्यमानधर्मभेदैर्भानमिति स्ववचोव्याघातात्। तत्र रजतत्वतत्समवायादीनामन्यत्र सत्त्वेऽपि [105b] रजतत्वगतविशेषणतारूपप्रतियोगितानिरूपितानुयोगिताया
20 विशेष्यतारूपाया अविद्यमानाया भानेऽसत्ख्यातिः, अभाने च समूहालम्बनव्यवहारविलक्षणतया विशिष्टव्यवहारेऽसंसर्गाग्रहवादस्वीकार इति व्याघातादन्यथाख्यातिवादोऽयुक्तः। इति भावः॥

अथ विवेकाग्रहनिबन्धनो भ्रम इति स्वमतमप्यदर्शयत् "सदसत्ख्यातिर्बाधाबाधात्"[4]। सत् पुरोवर्ति शुक्तिः। असत् पुरो न विद्यते यद् रजतम्, तत्।
25 तयोः ख्यातिः ग्रहणस्मरणरूपा विवेकाग्रहेण विषयगतेन ज्ञानद्वयगतेन च संवलिता भ्रमः। ख्यातिरित्येकवचनं विवेकाग्रहविशिष्टत्वेन ज्ञानयोरेकव्यवहारहेतुत्वादिति। तत्र तं केचिदन्यत्रान्यधर्माध्यास इति वदन्तीत्यन्यथाख्यातिपरं भाष्यम्। अन्यत्र शुक्तौ अन्यधर्माध्यासः अन्यस्य रजतादेर्यो धर्मः रजतत्वम्, तस्याध्यासः। तदभाववति तत्प्रकारकं ज्ञानं भ्रम इति गोलार्थः। अयमेवार्थः

पूर्वार्धेन विवृतः—भिन्नेति ॥ भिन्नविषये आरोप्यमाणरजतभिन्ने शुक्तिरूपे
विषये । अन्यविषयोत्कलितधर्मारोपम् शुक्तेरन्यो विषयो रजतम्, तस्मिन्नुत्कलित
उन्मिषितो यो धर्मो रजतत्वम्, तस्य योऽयमारोप इदं रजतमिति ज्ञानम्,
तमारोपम् । नयज्ञा विभ्रमत्वेन वदन्ति किल । अत्र किलेति ग्रहणात् प्रसिद्धिः
5 सूचिता । एवं च नामेति सूचिता प्रसिद्धिरिह परिगृहीतेति भावः । एवं
"सदसत्ख्यातिर्बाधाबाधादि"[1]ति विवेकाग्रहवादः साङ्ख्यसंमतः केचित्तु यत्र
यदध्यासः, तद्विवेकाग्रहनिबन्धनो भ्रम इति भाष्येण सङ्गृहीतः ॥

यत्र शुक्तौ यदध्यासो लोकप्रसिद्धः तत्र तद्विवेकाग्रहनिबन्धनः तयोश्शुक्ति-
रजतयोर्विवेककाग्रहनिबन्धनः विवेकाग्रहविशिष्टः भ्रमः ग्रहणस्मरणात्मकः
10 ग्रहणस्मरणद्वयविवेकाग्रहेण संबद्धो भ्रमदेह इत्यर्थः । एतदेवाह—भेदेति ॥
विषयेण सहितं स्मरणं विषयस्मरणम् । तुल्यार्थसहितो ग्रहः तुल्यार्थग्रहः ।
एतयोर्युगमर्थयुगं ज्ञानयुगमिति सिद्धम् । भेदमतिशून्यत्वमर्थयोर्ज्ञानयोरपि
विशेषणम् । विवेकाग्रहविशिष्टौ यावर्थौ, तयोर्ये ग्रहणस्मरणे विवेकग्रह-
रहिते । तद् भ्रमतया साङ्ख्याः प्राहुरित्यर्थः "न सतो बाधदर्शनादि"[2]ति । जाति-
15 व्यापकतादोषोपन्यासः अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामिति
भाष्येण सङ्गृहीतः, तन्मतं विशदयति त्रिभिः श्लोकैः—जातय इति ॥२००॥

[106a]　　जातय इहाखिलजगत्सु घटताद्या
　　व्यापकतया निखिलवस्तुषु निषक्ताः ।
　　व्यञ्जकविशेषवशतः क्वचन काचिद्
20　　व्यक्तिमुपयाति निखिला न निखिलेऽपि ॥२०१॥

अथोपोद्घातत्वेन घटत्वपटत्वादिजातीनां जगद्व्यापकत्वम्, व्यञ्जकभेदेन
काचिद् जातिः क्वचिदभिव्यज्यते, न सर्वाऽपि, सा च व्यक्तिष्विति दर्शयति—
जातय इति ॥ घटताद्याः घटत्वपटत्वादिजातयः । अखिलजगत्सु विद्यमान-
निखिलवस्तुषु । व्यापकत्वात् निषक्ताः संनद्धा एव । परन्तु व्यञ्जकविशेषवशतः
25 कम्बुग्रीवादिमत्त्वाज्ञानविज्ञानात्मकत्वादिव्यञ्जकविशेषात् । काचिद् जाति-
र्घटत्वादिः । क्वचिद् घटादौ । व्यक्तिम् अभिव्यक्तिमाप्नोति । निखिलाऽपि

जातिर्निखिलेऽपि वस्तुनि व्यक्तिं नोपयाति। घटत्वं पटादौ पटत्वं घटादौ व्यक्तिं नाश्नुते; तत्र तत्तद्व्यञ्जकाभावात्, प्रतिजाति व्यञ्जकभेदस्वीकारात्। इत्यर्थः ॥२०१॥

[106b] शुक्तिशकले सदृशि वेषपरिमोषा-
5 द्दोषवशतोऽपिहितरूपयुजि तत्त्वे।
व्यक्तिमुपयाति रजतत्वमिह दोषे
व्यञ्जयति तस्य पुरुषस्य तु तदानीम् ॥२०२॥

अथ सत्ख्यातिवादं विशदयति—शुक्तीति॥ शुक्तिशकले शुक्तित्वस्यैव निरुक्तरीत्याऽनभिव्यक्तरजतत्वादिसकलजात्याद्याश्रये। सदृशि रजतपदार्थस्य
10 चाकचक्यादिना सदृशे समे। दोषवशतः सावित्रालोकाभिघातदूरत्वादि-दोषतः। वेषपरिमोषात् शुक्त्यसाधारणावयवसंस्थानलक्षणवेषस्य परिमोषात् तिरस्कारात्, अभिभवात्। तत्त्वे शुक्तित्वे। अपिहितरूपयुजि आच्छादित-स्वरूपभाजि सति। रजतत्वमनभिव्यक्तमीश्वरसृष्टौ जीवदृशा। दोषे व्यञ्जयति सति। व्यक्तिम् अभिव्यक्तिमुपयाति। तदानीम् दोषप्रादुर्भावदशायामेव।
15 तस्यैव दोषवतः पुरुषस्य, नान्यस्य। तस्यैव तदानीमेव वस्तुतो विद्यमान-मीशसृष्टावनभिव्यक्तं दोषवशादभिव्यक्तं भवति। इति गोलार्थः ॥२०२॥

[107a] बाह्यविषये स्मृतिसमभ्रमशरीरे
रीतिरियमेव सकलेऽपि परिकल्प्या।
भानमपि तस्य पुरुषस्य हृषीकैः
20 सद्रजतभानसममेव समुपेयम् ॥२०३॥

अथ शुक्तिरजतस्थले निरूपितं सत्ख्यातिवादं स्मर्यमाणरोपभ्रमान्तरेऽप्यति-दिशति—बाह्येति॥ आन्तरभ्रमस्तावदयुतसिद्धसम्बन्धमूलक इति तमपहाय बाह्यविषयावगाहिनि स्मर्यमाणारोपस्वरूपे स्मृतिसमे भ्रमदेहे इयमेव रीतिः

शुक्तिरजतस्थले कल्पिता रीतिरेव कल्पनीया ; न्यायैक्यात्। सदर्थस्यानभिव्यक्तस्य दोषेण पूर्वधर्मतिरस्कारपूर्वकं भानमपि शुक्तिरजतभानमपि। हृषीकैः बाह्येन्द्रियैः। तस्य पुरुषस्य। भ्रान्तस्य पुरुषस्य सत्ख्यातिवादाभ्युपगमात् सद्रजतभानसममेव समुपेयम् अङ्गीकार्यम्। सत्यरजतं स्थायि भ्रमस्थलरजतं
5 दोषापगमादस्थायीत्येव भेदः। इति दिक् ॥२०३॥

[107b] यत्र शकले रजतविभ्रमनिबन्ध-
स्तत्र विपरीतरजतत्वपरिक्लृप्तिम्।
दोषनियतामपिहितापरविशेषां
केचन वदन्ति कमनीयमिति योज्यम् ॥२०४॥

10 अथ निरुक्तसत्ख्यातिवादेन अन्ये त्विति भाष्यं योजयति—यत्रेति ॥ यत्र यदध्यासः, तस्यैव विपरीतधर्मत्वकल्पनामाचक्षत इति भाष्यम्। यत्र शुक्तिशकले। यदध्यासः रजताध्यासः। तस्यैव शुक्तिशकलस्य। विपरीतधर्मत्वकल्पनाम् शुक्तित्वस्य विपरीतो लोके व्यधिकरणत्वेन प्रसिद्धो रजतत्वलक्षणो धर्मः, तद्वत्त्वकल्पनाम्; विपरीतो धर्मो यस्य तद् विपरीतधर्मम्, तस्य भावो विपरीत-
15 धर्मत्वम्, तस्य कल्पनाम्। पूर्वोक्तरीत्या सत एवाभिव्यक्तया कल्पनाम् क्लृप्तिमाचक्षते विद्वांस इत्यर्थः। यत्र शकले शुक्तिशकले। रजतभ्रमनिबन्धः रजतभ्रमसंपत्तिः। तत्र शुक्तिशकले। विपरीतरजतत्वपरिक्लृप्तिम् शुक्तित्वविपरीतरजतत्वस्य स्वत एवानभिव्यक्तयात्मना सतः परिक्लृप्तिम् अभिव्यक्तिद्वारा स्थितिम्। कीदृशीम् दोषनियताम् दोषेण नियताम् व्याप्ताम्; दोषस्यैव
20 शुक्तौ रजतत्वाभिव्यञ्जकत्वात्। पुनः कीदृशीम्। अपिहितापरविशेषाम् आच्छादितशुक्तित्वादिविशेषाम्। केचन सत्ख्यातिवादिनः। वदन्ति मनोज्ञमिति भाष्यं योज्यम्। इत्यर्थः ॥२०४॥

[108a] यत्पदयुगेऽपि नहि तत्पदयुगस्या-
लम्बनमिहान्यतरतल्लपितवेद्यम्।

गौरवपराहतमनेकपदयोगा-
दार्थिकमिहेति न तदत्र परिबद्धम् ॥२०५॥

अथ यत्र यदध्यास इति यत्पदद्वयसत्त्वात् तत्प्रतिनिर्देशकवाक्ये तत्पदद्वय-
मपेक्षितम्, न तथोपलभ्यते। तस्यैवेत्येकमेव तत्पदं दृश्यते। तस्यैव
5 विपरीततद्धर्मवत्त्वकल्पनामित्येव वक्तुमुचितं भवति। परन्तु तत्र द्वितीय-
तत्पदानिर्देशे निमित्तं दर्शयति—यत्पदेति॥ अन्ये त्विति वाक्ये यत्पदयुगे
सत्यपि तत्पदयुगमपेक्षितमपि नालम्बितम्। कुतः। अन्यतरतज्ज्ञपितवेद्यम्
द्वितीयतत्पदगम्यम्। अर्थाद्व ज्ञातुं शक्यम्। किञ्च अनेकपदयोगाद् गौरव-
पराहतं भवति यत्र यदध्यासस्तस्यैव शुक्तिशकलस्य स्वगतशुक्तित्वविपरीत-
10 तद्धर्मवत्त्वकल्पनामिति स्वगतशुक्तित्वेतिपदानां तत्पदस्य च पाठेऽनेकपद-
योगेन गौरवपराहतं भवति। विपरीतधर्मेतिकथने योग्यतया शुक्तित्व-
विपरीतरजतत्वमिति ज्ञातुं शक्यमिति तत्पदं द्वितीयं न परिबद्धमिह वाक्ये।
इत्यन्वयः ॥२०५॥

[108b] आश्रितमतेषु निखिलेषु विपरीत-
15 ज्ञानमखिलं ननु समानवपुरेव।
अन्यविषयेऽन्यगतधर्मधिषणैव
भ्रान्तिरिति भाष्यकृदभाषत मनोज्ञम् ॥२०६॥

अथ निरुक्तसकलमतैकमत्याधायकं सर्वथाऽपीति भाष्यं विवृणोति—
आश्रितेति॥ उपाश्रितमतेषु निखिलेषु अनिर्वचनीयख्यात्यन्यथाख्यात्यसत्ख्याति-
20 मतेषु तत्तद्वादिपरिगृहीतविषयं ज्ञानं निखिलमपि प्रकारांशे विभेदवदपि
धर्म्यंशे समानाकारमेव। अन्यविषये अन्यविषयावच्छेदेनान्यविषयगतधर्म-
बुद्धिरेव भ्रान्तिरिति मनोज्ञं भाष्यकृदभाषत अन्यस्यान्यधर्मावभासतां न व्यभिचर-
तीति वाक्येनेति योजना। तत्रानिर्वचनीयवादे शुक्त्यवच्छेदेनानिर्वचनीय-
रजतोत्पत्तौ रजतत्वं शुक्त्यवच्छेदेन भासत एव। एवमन्यथाख्यातिवादेऽपि
25 शुक्तौ हट्टस्थरजतगतरजतत्वं ज्ञानलक्षणप्रत्यासत्त्या भासत इत्यन्यविषया-

वच्छेदेनान्यरजतधर्मभूतरजतत्वं भासत एव। एवमख्यातिवादे अन्यस्य शुक्तिशकलस्यान्यरजतधर्मरजतत्वावभासतां विषययोर्ज्ञानयोश्च विवेकाग्रहाद् विषयद्वयविषयकज्ञानयोरेकत्वव्यवहारदर्शनात् शुक्तिशकलस्यान्यस्यान्यधर्मः, अन्यसम्बन्ध्येव धर्मोऽन्यधर्मः, विषययोर्विवेकाग्रहेणैकत्वव्यवहारस्याग्रे दर्श-
5 नात् शुक्तिसम्बन्ध्येव रजतत्वं विवेकाग्रहाद् जातमित्यन्यसम्बन्ध्यन्यधर्माव-भासतां न व्यभिचरति भ्रमः; ज्ञानयोरप्यविवेकेनैकत्वेनैव व्यवहारात्, इत्यन्यस्यान्यधर्मो गौण उक्तविधया भासत एव। एवं सत्ख्यातिवादिमतेऽपि —अन्यस्य शुक्तित्वावच्छिन्नस्य शुक्तित्वतिरस्कारेण अन्यधर्मावभासताम् शुक्तित्वा-दन्यो योऽनभिव्यक्तो धर्मो रजतत्वलक्षणः, तस्यावभासतां न व्यभिचरतीति।
10 शुक्तित्वातिरिक्तो रजतत्वलक्षणो धर्मोऽन्यस्याभिव्यक्तशुक्तित्वावच्छिन्नस्य शुक्तित्वतिरस्कारेण भासत एवेति सर्वमतेऽपि समानं भ्रमवपुरिति सर्वथाऽपीति, भाष्यं योजनीयम्। इति दिक् ॥२०६॥

[109a] अन्यविषयेऽन्यगतधर्ममतिरेव
भ्रान्तिरिति साधयति साधु हि तथेति।
15 नैव कलधौतमिति भेदमतियोगाद्
भ्रान्तितनुकल्पकविकल्पमुपकल्प्य ॥२०७॥

अथ निरुक्तभ्रमः सर्वमतसाधारण्येन निर्विषयत्वेन सकलजनानुभवप्रमाण-सिद्ध इत्यर्थकं तथाचेत्यादिभाष्यं तात्पर्योल्लेखपूर्वकमवतारयति—अन्येति॥ अन्यविषये शुक्तिविषये अन्यगतधर्ममतिरेव रजतगतरजतत्वबुद्धिरेव भ्रान्ति-
20 र्भवतीति सकलमतसाधारणं भ्रमस्वरूपं तथाचेत्यादिग्रन्थेन साधु यथा स्यात् तथा साधयति। ननु साधु साधनमसङ्गतम्. इदं रजतमित्येव सर्वेषां भ्रमानुभवः, नतु शुक्तिका हि रजतवदवभासत इति शङ्कां विकल्पज्ञान-वत्पुरुषानुभवावलम्बेन परिहरति—नैवेति॥ इदं न रजतम्, किन्तु शुक्तिरेवेति विशेषदर्शनतो विवेकग्रहसत्त्वाद् भ्रमस्य वक्तुमशक्यत्वाद् विततसावित्रप्रकाश-
25 दूरत्वादिदोषेण शुक्तावेव रजतमिति जायमानस्य ज्ञानस्य विकल्परूपत्वात् तस्य च विकल्पस्य भ्रमकल्प्यत्वाद् भ्रान्तिदेहकल्पकविकल्पज्ञानमुपकल्प्य संपाद्य सर्वलोकसिद्धमन्विष्य परिगृह्य विकल्पज्ञानवता पुरुषेणेदं रजतमिति

भ्राम्यन्तं जनमज्ञं प्रति शुक्तिका हि रजतवदभासते न रजतमेवावभासत इत्युपदेशप्रवर्तनात् साध्वेव तथाचेत्यादिभाष्येण साधयतीति सङ्गतम्। इति भावः ॥२०७॥

[109b] लोकविदितेन गदितभ्रमशरीरं
5 स्पष्टतममेव घटते त्वनुभवेन।
शुक्तिशकले रजतवद् हिममयूखे
भाति सपरेन्दुकवदित्यनुभवोऽपि ॥२०८॥

अथ विकल्पज्ञानवद् ज्ञानानुभवस्वरूपं विशदयन् तेनानुभवेन सत्यं विषयहीनभ्रमस्वरूपं सिद्धमिति तथाचेति भाष्यभावमेव प्रकटयति—लोकेति ॥
10 गदितभ्रमशरीरम् अन्यस्यान्यधर्मावभास इत्येवंलक्षणम्। लोकविदितेनानुभवेन शुक्तिका हि रजतवदवभासत इत्येवंरूपेण विकल्पज्ञानवत्पुरुषानुभवरूपेण च। अतिस्पष्टं घटत एव। न भ्रमेऽस्मिन् कश्चिदपि विवाद इत्यर्थः। अनुभवाकारं दर्शयति—शुक्तीति। शुक्तिशकले शुक्तिरियं रजतवद् भाति, हिममयूखे चन्द्रे। चन्द्रः सपरेन्दुकवद् भातीत्यनेन प्रकारेणानुभवोऽपि भवति।
15 इति योजना ॥२०८॥

[110a] तुल्यमपरेण यदि भाति परमेतद्
भिन्नमपरेण यदि न खलु तत्त्वम्।
तत्तदिति भाति यदि तर्ह्यपरधर्मोऽ-
न्यत्र परिभासत इति प्रकटमेव ॥२०९॥

20 अथ भाष्योक्तभ्रमाकारमुपसंहरति—तुल्यमिति ॥ परम् शुक्तिशकलम्। अपरेण रजतेन। तुल्यं यदि भाति शुक्तिका हि रजतवदवभासत इति विकल्पज्ञानाधीनवचनेन विकल्पज्ञानेन वा। तर्हि एतद् शुक्तिशकलम्। अपरात् रजतात्। विस्पष्टं भिन्नमेव भवतीति। परे शुक्तिशकले तत्त्वम् अपरत्वं रजतत्वम् नैव भवति। तथाच तत् शुक्तिशकलं तद् रजतमिति यदि भाति, तर्हि हशुक्ति-

**शकले** अपरधर्मः **रजतधर्मः, रजतत्वम्।** **भासत** इत्येतत्स्वरूपं प्रकटमेव **स्पष्टमेव भवति। इति भावः ॥२०९॥**

[110b] एकमततामतिपराऽपि हि परेषां
दूषणपरा ननु मतेष्वनुमतेषु।
5 तेन मृदुलार्थमधुराऽप्यतिगभीरा
देशिकशिखामणिगिरां गतिरपारा ॥२१०॥

**अथ सर्वमतैकमत्यप्रदर्शकानुभवपरे** तथाचेति**वाक्ये** शुक्तिका हि रजतवदवभासत इति **वचने शुक्तिका हि रजतमवभासत** इत्येतावताऽप्यनुभवोपपादन**संभवादधिकवैयर्थ्यमित्याशङ्क्य वत्करणं तावदैकमत्यायानूद्यमानमतान्तर-**
10 **निराकरणार्थमिति भाष्यवचनं गभीरार्थत्वाद् महीकरोति**—एकेति ॥ तथाचे**त्यादिभाष्यगिरां** गतिः **परिपाटी।** एकमततामतिपराऽपि **ऐकमत्यबोधपराऽपि।** परेषाम् **नैयायिकसाङ्ख्यसत्ख्यातिवादिनाम्। ऐकमत्यायानुमतेषु।** दूषणपरा **भवति** ननु। तेन **एकमत्या च। प्रवृत्तवचसस्तन्मतदूषणपरत्वेनापाततो** मृदुलार्थमधुराऽपि **कोमलार्थमनोज्ञाऽपि। परमतदूषणपरत्वाद्** अतिगभीरा **गहनयुक्तिभिरेव**
15 **परमतानां निराकार्यत्वेन गम्भीरभावा। देशिकशिखामणेराचार्यस्य गिरां** गतिरपारा **अनन्ता ज्ञातुमशक्या। श्रीदेशिककृपयैव तद्वचसां रीतिरवसेया। इति भावः ॥२१०॥**

[111a] भासत इदं रजतमित्युपनिबन्धे
सत्यरजतस्थलवदप्यभिमतं स्यात्।
20 शुक्तिरिह रूप्यमवभासत इतीदृग्वाचि तरुराम्र इति सत्यवदपि स्यात् ॥२११॥

**अथाग्रे वत्करणस्य प्रयोजनं दर्शयिष्यन् क्रमेण सर्वेषां पदानां प्रयोजनानि व्यावर्त्यद्वारा दर्शयितुमिदं रजतं भासत इति कल्पितलघुसामान्यवाक्ये दोषं दर्शयति**—भासत इति ॥ इदं रजतं भासत इत्युपनिबन्धे **वाक्यरचने सति।**

सत्यरजतस्थलवदपि सत्यरजतस्थलवच्च। अभिमतम् वाक्यसंमतं स्यात्। तथाचैश-विषयविनिर्मोकप्रयुक्तभ्रमः परस्य नियमेन न स्यात्। तथाच भ्रमत्वं न प्रकाशितं स्यादिति भावः। शुक्ती रूप्यम् रजतमवभासत इतीदृशि वाचि विरचितायां सत्यां प्रकृतवाक्ये शुक्तिरजतयोः परस्परविरोधपदाभावात् तरुरय-
5 मात्र इति सत्यवाक्यवदपि स्यात्। तरुरयमात्र इत्युक्ते तरुत्वव्याप्यमात्र-त्वमितिवत् प्रकृतेऽपि व्याप्यव्यापकधर्मावच्छिन्नपरमपि शुक्तिका रजतमव-भासत इति वाक्यं स्यादिति भ्रमपरत्वं नियमेन न स्यात्। इत्यर्थः ॥२११॥

[111b] हेरथ समाकलनतो रजतशुक्त्यो-
10 र्लोकविदितो नियमितो भवति भेदः।
तेन विपरीतधिषणता परिगृहीता
ख्यातिरितराऽपि कलितैवमपि तत्र ॥२१२॥

अथ शुक्तिका हि रजतवदवभासत इति वाक्यरचनायां गुणं दर्शयन् दोष-मप्याह— हेरिति ॥ हेः हिशब्दस्य। समाकलनतः मेलनेन, शुक्तिका हि रजत-
15 वदवभासत इति योजनेन। रजतशुक्तयोर्लोकविदितः परस्परं भेदः नियमितः परिगृहीतो हिपदेन प्रसिद्धिपरेण भवति। तेन शुक्तिरजतयोः परस्परभिन्नत्वेन ज्ञापनात् तरुरयमात्र इत्यत्राविरोधात् प्रमास्वरूपसिद्धावपि प्रकृते विरोधात् शुक्तिका हि रजतवदवभासत इत्युक्तया विपरीतधिषणा भ्रान्तिः परिगृहीता भवेत्। परन्तु एवमपि भ्रान्तिस्वरूपपरिग्रहेऽपि। इतराऽपि ख्यातिः
20 अनिर्वचनीयख्यात्यतिरिक्ताऽपि ख्यातिः, अन्यथाख्यात्यख्यातिसत्ख्यातिलक्षणा परमतसिद्धा। परिगृहीता स्यात्। परमतेष्वप्येतदनुभवस्य संमतत्वात्। स्वमत-स्थैर्याय परमतनिराकरणं समुचितमेव। इति दिक् ॥२१२॥

[112a] रूप्यमवभासत इतीवघटना चे-
दैशरजतात् परतयैशमपयायात्।

ख्यातिरुदिता ननु सतो न परिवृत्ता
भाति रजतत्वमुभयत्र च यदेकम् ॥२१३॥

अथ शुक्तिका हि रजतमिवावभासत इत्यनुभववाक्यरचनायां गुणं निर्दिशन् दोषमप्याह—रूप्यमिवेति ॥ शुक्तिका हि रूप्यमिवावभासत इतीवकारघटित-
5 वाक्यविरचने सति इवपदस्योपमार्थकस्य यथा तथेत्यर्थकत्वाद् वाक्यैक-वाक्यतयैव तत्र शाब्दबोधाङ्गीकाराद् उपमानवाक्यगतविशेषणानामेवोपमेय-वाक्येऽपि विशेषणतया तत्र समतयान्वयाय लिङ्गवचनविभक्तिलकारपुरुषा-दिसाम्यस्यावश्यकतयाऽभ्युपेयत्वाद् इतरथोपमादोष इत्येव स्वीकारात् शुक्तिका हि यथा येन प्रकारेण रजतं भासते तथा तेन प्रकारेण भासत इत्येव
10 बोधजननादुपमानोपमेयस्थले भेदावगाहिज्ञानस्यैव प्रकारैक्यावलम्बेन जननात् प्रकृते शुक्तेः प्रसिद्धरजतभिन्नत्वेन रजतत्वप्रकारतया ज्ञानोदयेन प्रसिद्धैशरजत-व्यक्तेर्भानप्रतिषेधात् तादात्म्यसम्बन्धेनैव शुक्त्याविदन्त्वावच्छिन्ने विशेषणतया भासत इति न्यायमतम् [112b] विवेकाग्रहविशिष्टहट्टस्थरजतस्मरणमेव भ्रम इति साङ्ख्यमतमपि निराकृतमनुभवविरोधाद् भवति। तथाच शुक्तौ
15 प्रसिद्धैशरजतभेदप्रत्ययादैशं रजतं यन्मते भाति, तन्मतरीत्या भानादैशरजतं अपयायात् निर्गच्छेत् बहिर्भूतं भवेत्। तन्मतं पराकृतं भवेदिति यावत्। ख्यातिरिति ॥ शुक्तौ रजतत्वमनभिव्यक्तमेव विद्यमानं दोषादेरभिव्यक्तं ताम्रेऽनभिव्यक्तसुवर्णत्वं रसायनादिव जायते। सत्ख्यातिवादः—हट्टगत-रजतस्थरजतत्वमेव केवलं शुक्तौ प्रकारतया भासत इति न्यायमतं च ताव-
20 न्न परिवृत्ता न परावृत्य गतम्; शुक्तौ रजते चोभयत्र रजतत्वस्य मतद्वयेऽपि भानात्। इति गोलार्थः ॥२१३॥

[113a]　तद्रजतवत् प्रतिविभासत इतीह
प्रोक्तमथ तुल्यमतिधर्मपरमेतत्।
धर्म्यसदिति प्रतिहते सदिति वादेऽ
25 निर्वचनमेव मतमाद्यमवशिष्टम् ॥२१४॥

अथ शुक्तिका हि रजतवदवभासत इति भाष्यकृद्भिरचितानुभवपरवाक्ये न कोऽपि दोषगन्ध इत्याह—तदिति ॥ तत् तस्मात् कारणात्। इह शुक्तिका हि रजतवदवभासत इति भाष्ये। प्रोक्तम्। तत्र "तेन तुल्यं क्रिया चेद् वतिरि"[1]ति वतिप्रत्ययेन तुल्यार्थस्य धर्मिणः प्रतिपादनात् तद्वादिमते प्रसिद्धरजत-
5 तुल्याप्रसिद्धरजतव्यक्तेरभिव्यक्त्यनभ्युपगमाद् नैयायिकैकदेशिमते हट्टस्थ-रजतगतरजतत्वमात्रभानाभ्युपगमेन नवीनरजतभानानभ्युपगमाद् धर्म्यंशो-ऽसन्नेव शुक्त्यवच्छेदेन भवति। एवं च सदितिवादे शुक्तौ रजतत्वं सत् हट्टस्थ-रजते सदिति वादे द्विविधेऽपि प्रतिहते सति स्मृतिरूप इति प्रथमं निर्दिष्टम् अनिर्वचनम् निर्वचनरहितमनिर्वचनीयं रजतं शुक्त्यवच्छेदेनोत्पद्यत इति
10 मतमेवानवद्यं परिशिष्टम्। एवं चागोपालाङ्गनमा च पण्डितं विकल्पज्ञाने सति शुक्तिका रजतमवभासते शुक्तिका हि रजतवदवभासत इति प्रकृता-प्रकृतशब्दाभ्यां व्यवहारादनिर्वचनीयवाद एव रमणीय इति सर्वं सुस्थम्। इति दिक् ॥२१४॥

[114a] पा णि नि गुरोर्वतिरयं भवति तेने-
15 त्यादिमगिरा नियमितोऽव्ययशरीरः।
तेन किल तुल्यमिति बोध्यमवलम्ब्यै-
तच्च यदि साध्यमपि धात्वभिहितात्मम् ॥२१५॥

[113b]अथेदं सर्वमनुपपन्नम्। शुक्तिका हि रजतवदवभासत इत्यत्र शुक्तौ रजततुल्यत्वं भासते चेत्, प्रसिद्धरजतभेदभानादख्यात्यन्यथाख्यातिवादौ,
20 प्रसिद्धरजततुल्यरजतव्यक्तिर्भासते चेत्, सत्ख्यातिवादश्च निराकृता भवेयुः। तत्तावदसङ्गतम्; शुक्तौ रजततुल्यत्वरजतव्यक्तिभानानभ्युपगमात्, अश्वेन तुल्यं धावतीत्यादौ धावनक्रियायामेवाश्ववदिति विशेषणमभेदेनान्वेति। तथाच धावनेऽश्वतुल्यत्वबाधादश्वपदमश्वधावनपरम्। अश्वधावनतुल्यधावनाश्रयो देवदत्त इत्यर्थः। तत्र धावनयोस्तुल्यत्वे साधारणो धर्मः शब्दानुपात्तो-
25 ऽप्युत्कर्षादिविशेषोऽर्थाद् गम्योऽभ्युपेय इति सर्वसंमतेः प्रकृतेऽपि रजत-पदस्य रजतभाने लाक्षणिकतया रजतभानतुल्यभानाश्रयीभूता शुक्तिरित्येव

बोधेनात्र परवादिमतनिराकरणाप्रसक्तेः। अख्यातिवादे रजतभानेन तुल्यं यद् भानमिदमित्येवंलक्षणम्, तदाश्रयभूता शुक्तिरिति। सत्ख्यातिवादे प्रसिद्ध-रजतभानतुल्यं यद् भानं शुक्तिशकलाभिव्यक्तरजतत्वप्रकारकभानम्, तस्य कर्त्री शुक्तिर्भवति। अन्यथाख्यातिवादेऽपि प्रसिद्धहट्टस्थरजतप्रमातुल्यं यद्
5 भानम् शुक्ताविदं रजतमित्यन्यथाख्यातिलक्षणं भानम्, तस्य कर्त्री शुक्तिर्भव-तीति सर्वमतसाधारण्येनैतदनुभवस्य सिद्धत्वेन वादान्तरनिराकरणपरत्वस्य वक्तुमशक्यत्वादित्याशङ्क्य मतान्तरनिराकरणं रजतवदिति वाचि सूचयितुं पा णि नि **सूत्राणि त्रीणि व्याकुर्वन् शाब्दबोधप्रकारं त्रिष्वपि सूत्रेषु दर्शयति**— पा णि नीति ॥ पा णि नि गुरोः **पा णि न्या चार्यस्य**। तेनेत्यादिमगिरा "तेन तुल्यं
10 क्रिया चेद् वतिरि"[1]**ति वाचा "**तेन तुल्यमि"[2]**ति** बोध्य**मर्थ**मवलम्ब्या**व्ययात्मा** वति-र्नियमितो भवति। एतच्च "तेन तुल्यमि"[3]ति **गमितं वस्तु स्वयं तद्धातुक्रियासाध्यं सत् क्रियां धात्वर्थभूतां स्वयं भेदसंबन्धेन आप्तम् प्राप्तं चेद्। अन्वितं चेत्, तर्हि वतिरयं नियमितः। इति योजना ॥२१५॥**

[114b] सप्तसु तिसृष्वपि विभक्तिषु परस्ताद्
15 ऐक्यमुपयाति वतिवाच्यमिह बोध्यैः।
प्रस्तुतकधातुगमितं तु जनिसिद्ध्या
कर्मविधयैति ननु कर्तृविधया वा ॥२१६॥

**उक्तमेवार्थं विशदयति**—सप्तस्विति ॥ वतिवाच्यमपि "क्रिया चेद् वतिरि"[4]**ति विहितवतिना बोध्यमपि तुल्यम्।** प्रस्तुतकधातुगमितं तु जनिसिद्ध्या **प्रस्तुतो**
20 **यो धातुः, तेन बोधितो योऽर्थः, तं तु तदानीमेव स्वस्वजनिसिद्ध्या जन्मप्राप्त्या** कर्मविधया वा कर्तृविधया वा**ऽन्वयमुपैति। अयमाशयः—अश्वतुल्यं धावति, अश्ववद् धावतीत्यादावश्वतुल्यं तथा भवति तथा धावतीति क्रियाविशेषण-विधयैवान्वयभानात् क्रियाविशेषणस्थले सर्वत्रापि उत्पादनाया उत्पत्ते-र्वापि धातुना प्रतिपाद्यत्वेन शब्दमर्यादासिद्धत्वात् तथैव शब्दस्वाभाव्यात् तत्र**
25 **तावदुत्पादनायामुत्पत्तौ वा गुणक्रियादिमल्लक्षणं क्रियाविशेषणं द्वितीयान्तं प्रथमान्तं वा नपुंसकं सामान्यात्मकं भवेत्। तत्र क्रियाया धातूपात्ताया उत्पादनाया उत्पत्तेर्वा शब्दस्वाभाव्येन संनिवेशेन गुणक्रियादिमत्क्रियाविशेषणं**

कर्मविधया कर्तृविधया वाऽन्वीयमानम्; स्वस्य गुणक्रियावद्व्यक्तिसामान्यरूपस्य प्राणप्रदपदार्थविभाजकधर्मवत्परपदसामानाधिकरण्यमन्तरा पर्यवसानाभावात्। आकाङ्क्षोत्थितेः शब्दाकाङ्क्षानुदयेऽप्यर्थमर्यादया सप्तसु विभक्तिषु 5 सुब्रूपासु। तिसृष्वपि तिङ्रूपासु च। इह सुप्तिङन्तशब्देषु प्रतिपाद्यैरर्थैः। परस्तात् पश्चात्। ऐक्यम् अभेदं यातीति। पूर्वार्धमप्यत्र प्रसङ्गेन योजितमेव। इति दिक्॥२१६

[115a] धातुविदिते ननु विशेषणमसत्त्वे
यद्यदिह तत्तदपि साध्यमुपयाति।
भेदविधयाऽन्वयविभेदमथ सर्वं
10 सप्तसु विभक्तिषु च पार्ष्ठिकमभेदम्॥२१७॥

अथ क्रियाविशेषणतुल्यवत्यर्थयोः समकक्षत्वाद् वत्यर्थपरिशोधनाय क्रियाविशेषणान्वयप्रकारमपि विशिष्य दर्शयति—धात्विति॥ धातुविदिते धातुप्रतिपादिते। असत्त्वे क्रियारूपे क्रियाविशेषणं यद्यद् भवति तत्तत् सर्वमपि। साध्यं सत् प्रस्तुतधात्वर्थसाध्यं सत्। प्रकृतधात्वर्थेन सह भेदविधया कर्मविधया 15 कर्तृविधया वा। वतिवदेव अन्वयविभेदम् शाब्दबोधोचितसम्बन्धभेदम्। उपयाति प्राप्नोति। अथ शाब्दबोधोत्तरम्। सर्वमपि क्रियाविशेषणं सप्तसु विभक्तिषु सुप्संबन्धिनीषु विषये। पार्ष्ठिकमभेदम् पश्चाद्भवमभेदं प्राप्नोति। इत्यर्थः॥२१७॥

आशुमुखमाश्रयति धातुविदितेना-
20 र्थेन किल किञ्चन विशेषणमभेदम्।
पार्ष्ठिकतया क्वचन कारकसदृक्षं
शाब्दसरणिस्तु कथिता वतिवदेव॥२१८॥

अथ क्रियाविशेषणस्य तिङन्तार्थेन सह पार्ष्ठिकाभेदान्वयं सुबन्तस्थलवदेव दर्शयति—आश्विति॥ आशुमुखम् आशु सत्वरम् मन्दमित्यादि। किञ्चन

क्रियाविशेषणं धातुप्रतिपादितार्थेन सह कारकेणैव क्वचनोदाहरणविशेषेऽभेदेन पार्ष्णिकतया पश्चाद्भवत्वेनाश्रयति। शब्दसरणिस्तु शाब्दबोधमार्गस्तु। वतिवदेव कथिता भवति क्रियायां कर्मविधया कर्तृविधया वाऽभेदेनान्वेतीति कथिता भवतीत्यर्थः। इयमत्र प्रक्रिया सप्तसु तिसृषु च विभक्तिषु। तथाहि—(१)ब्राह्मण
5 इव क्षत्रियोऽधीते, [115b] ब्राह्मणेन तुल्यं यथा भवति तथा क्षत्रियोऽधीते, ब्राह्मणवद् यथा भवति तथा क्षत्रियोऽधीते। (२) ब्राह्मणमिव क्षत्रियं पश्यति, ब्राह्मणेन तुल्यं क्षत्रियं पश्यति, ब्राह्मणवत् क्षत्रियं पश्यति। (३) ब्राह्मणेनेव क्षत्रियेणाधीयते, ब्राह्मणेन तुल्यं क्षत्रियेणाधीयते, ब्राह्मणवत् क्षत्रियेणाधीयते। (४) ब्राह्मणायेव क्षत्रियाय ददाति, ब्राह्मणेन तुल्यं क्षत्रियाय ददाति, ब्राह्मणवत्
10 क्षत्रियाय ददाति। (५) ब्राह्मणादिव क्षत्रियादधीते बटुः, ब्राह्मणेन तुल्यं क्षत्रियादधीते, ब्राह्मणवत् क्षत्रियादधीते। (६) ब्राह्मणस्येव क्षत्रियस्य स्वं भवति, ब्राह्मणेन तुल्यं क्षत्रियस्य स्वं भवति, ब्राह्मणवत् क्षत्रियस्य स्वं भवति। ब्राह्मणस्येव क्षत्रियस्य स्वं हरति, ब्राह्मणेन तुल्यं क्षत्रियस्य स्वं हरति, ब्राह्मणवत् क्षत्रियस्य स्वं हरति। (७) ब्राह्मण इव क्षत्रिये वर्तते, ब्राह्मणेन तुल्यं क्षत्रिये
15 वर्तते, ब्राह्मणवत् क्षत्रिये वर्तते। (१) आशु पचति, आश्विव पचति, आशुना तुल्यं पचति, आशुवद् पचति (२) पचसि (३) पचामीति वचनानि प्रयुज्यन्ते। तत्र ब्राह्मणवत् क्षत्रियोऽधीत इत्यत्र ब्राह्मणो यथा येन प्रकारेणाधीते तथा तेन प्रकारेणाधीते क्षत्रिय इति विवरणादध्ययनगतप्रकार एवेवशब्दार्थः सामान्यात्मना प्रतीयमानः प्रकरणादिना विशेषे पर्यवस्यति। स च विशेष उदात्तानु-
20 दात्तवाक्पटुत्वध्वनिगुरुशुश्रूषाभिक्षाटनादिरूपो भवति। तेन प्रकारेणाधीते इत्यनेन प्रकारस्याप्यध्ययनेन सह साध्यता प्रतीयते। तथाच सामान्यविशेषरूपैकजातीयप्रकारोपलक्षिताध्ययनवत्त्वलक्षणसादृश्यमेव विहितं पर्य[116a]-वस्यात। ब्राह्मणेन तुल्यं क्षत्रियोऽधीत इत्यत्रापि तुल्यं यथा भवति तथेति विवरणात् तुल्यस्वरूपं धातूपात्तायामुत्पादनायामुत्पत्तौ वा कर्मत्वेन कर्तृत्वेन
25 वाऽन्वेति भेदसम्बन्धेन। तथाचाध्ययनसाध्यब्राह्मणतुल्यत्वाश्रयः क्षत्रिय इति सिद्ध्यति; इवघटिते वाक्येऽध्ययनसाध्यसादृश्यस्य क्षत्रिये पर्यवसानेन तथैव तुल्यपदघटितवाक्येऽपि तत्समानार्थत्वेन प्रयुक्तेऽर्थस्य वर्णयितुमुचितत्वात। एवं च वतिघटितवाक्येऽपि तुल्यवाक्यवदेवार्थपर्यवसानं भवितुमर्हति; तथैवानुशासनात्। एवं ब्राह्मणायेव क्षत्रियाय ददातीत्यत्रापि पूर्ववदेवैकजातीय-

प्रकारोपलक्षितसाध्यात्मकदानेन क्षत्रिये ब्राह्मणसादृश्यं विवक्षितम्। एवं ब्राह्मणेन तुल्यं क्षत्रियाय ददातीति प्रयोगेऽपि तुल्यं यथा भवति तथा ददातीति विवरणाद् दानक्रियान्तर्भावनभवनान्यतरसंनिवेशेन तुल्यस्य कर्मकर्त्रन्यतररूपेणान्वयः शाब्दो भवति, पृष्ठतस्तुल्योऽर्थोऽर्थात् क्षत्रियसमानाधि-
5 करणो भवति ; तथैव तत्समानार्थकतुल्यवाक्येऽप्यर्थपर्यवसानौचित्यात्। एवं तुल्यवाक्यवदेव वतिवाक्यमपि योजनीयम्। एवं ब्राह्मणस्येव क्षत्रियस्य स्वं भवतीत्युद्देश्यषष्ठीघटितवाक्येऽपि यथा तस्य स्वं तथाऽस्य स्वं भवतीत्येकजातीयप्रकारावच्छिन्नधनभवनस्य स्वाश्रयधनस्वामित्वलक्षणसम्बन्धेन क्षत्रिये ब्राह्मणसादृश्यसम्पादकत्वम्। एवं वतिवाक्येऽपि योजना। एवं
10 ब्राह्मणस्येव क्षत्रियस्य स्वं हरतीत्यनुद्देश्यषष्ठीघटितवाक्येऽपि ब्राह्मणस्य स्वं यथा हरति तथा क्षत्रियस्य स्वं हरतीत्येकजातीयप्रकारोपलक्षितधनहरणस्य स्वकर्मीभूतधनस्वामित्वलक्षणसम्बन्धेन क्षत्रिये ब्राह्मणसादृश्यसम्पादकत्वम्। [116b] एवं ब्राह्मणेन तुल्यं क्षत्रियस्य स्वं हरतीत्यत्रापि तुल्यं यथा भवति तथा हरतीति बोधात् तुल्यं हृधातुपरिगृहीते भावने भवने वा कर्म-
15 कर्त्रन्यतररूपेणान्वियात्। तुल्यं पृष्ठतः क्षत्रियेणार्थात् सामानाधिकरण्यं भजते ; इववाक्यसमानार्थत्वात् तुल्यवचसः। एवं वतिवाक्येऽपि योजनं समानमेव। एवम् आशु पचति, मृदु पचतीत्यादावाशुमृद्वोः कर्मकर्त्रन्यतररूपेण धातुपरिगृहीतभावनभवनान्यतरस्मिन् समन्वये सति मृदु तावदोदने योग्यत्वात् पश्चात् सामानाधिकरण्यं भजते। आशुत्वमल्पकालविशिष्टासत्त्वपरं
20 धातूपात्तपचनक्रियायां सामानाधिकरण्यं भजते। यदि सत्त्वपरं सत् क्रियाविशेषणम्, तर्हि क्रियायां भेदेनान्वयोत्तरं कर्तरि कर्मणि वा यथायोगं सामानाधिकरण्यमयते ; आश्वोदनो जायते, आश्वोदनं जनयतीत्यादिप्रयोगात्। एवमाश्विव देवदत्त ओदनं पचतीत्यत्राप्याशु यथा तथा पचतीत्याश्वन्तरगतैकप्रकारकवचनप्रतीतेः कर्तरि कर्मणि क्रियायां वा सा-
25 दृश्यमाश्वन्तरेण कर्तृकर्मक्रियान्यतमरूपेण प्रतीयते। एवमाशुना तुल्यं पचतीत्यादौ तुल्यस्य पूर्ववद् पचिधातुपरिगृहीतभावनभवनान्यतरस्मिन्नन्वयेन शाब्दबोधे पूर्णे पृष्ठतः कर्तृकर्मक्रियान्यतमे सामानाधिकरण्यं योग्यतया भजति। एवमाशुवदिति वतिस्थलेऽप्यन्वयो वेदितव्यः। एवं प्रथमान्तद्वितीयान्तस्थलयोर्घटः सुदीप्तिर्जायते, घटः सुदीप्ति यथा भवति तथा जायते,

घटं सुदीप्तं जनयति, घटं सुदीप्ति यथा भवति तथा जनयतीतिशब्दतो घटसामानाधिकरण्येन साध्यत्वेन विशेष्यपश्चाद्भाविविधेयविशेषणतया क्रियाविशेषणत्वेन च प्रयोगभेदो विधेयविशेषणतायां यत्नादिसामग्य्रल्पतां क्रियाविशेषणतायां सामग्रीबाहुल्यं च क्रमेण लाघवं गौरवं च सूचयति।
5 इतरविभक्तिषु तु समानाधिकरणविशेष्यान्तरभाविसाध्यात्मकविधेयविशेषणस्यैवालीकत्वात् क्रियाविशेषणमेवैकं साध्यरूपं प्रतीयते, न तत्र सामग्रीलाघवगौरवचिन्ताप्रयोजनमिति विवेचनीयम् ॥२१८॥

[117a] भावनमुतापि भवनं सकलधातु-
ष्वन्तरुदितं यदि विशेषणमुपात्तम्।
10 कर्मवचने यदिह भाति परिभाषा
लोकविवृतिर्हि च यथा खलु तथेति ॥२१९॥

अथ क्रियाविशेषणस्य कर्मविधया कर्तृविधया वा क्रियायामन्वय इत्यत्र निमित्तं द्विविधं दर्शयति—भावनमिति ॥ यदि क्रियाविशेषणमुपात्तम्, तर्हि प्रस्तुतधातुषु अन्तर्भावनम् उत्पादनम्। उत भवनम् उत्पत्तिर्वा। उदितम्
15 प्रादुर्भूतं प्रकाशमानं भवति। यत् यस्मात् कारणात्। इह क्रियाविशेषणस्थले। कर्मवचने द्वितीयाविभक्तौ। परिभाषा भाति क्रियाविशेषणानां नपुंसकलिङ्गद्वितीयैकवचनान्तत्वमिति। लोकविवृतिः लोकप्रसिद्धा क्रियाविशेषणं मृदु यथा भवति, तथा पचतीति भाति हि। अत्र परिभाषया द्वितीयानियमनात् तदानुगुण्येनोत्पादना धातुगर्भे विवक्षिता भवेत्। मृदु यथा स्यादिति
20 भवतीति वाऽकर्मकधातूनां विवरणादुत्पत्तिमात्रं धातुगर्भे विवक्षितमिति कर्मविधया क्रियाविशेषणानामन्वयः। इति योजना ॥२१९॥

[117b] व्यावृतिरनेकविधकारकनिबद्धा
धातुषु विशेषवपुषेति मतमेकम्।

कारकशरीरमपि सूक्ष्ममिह तस्मात्
कारकमभिन्नममुनेति मतमन्यत ॥२२०॥

अथ क्रियाविशेषणानां धात्वर्थेऽन्वयाय मतभेदं दर्शयति— व्यावृतिरिति ॥ वाक्यसमुपात्तेषु धातुषु व्यावृतिः व्यापारः। विशेषवपुषा असाधारणदेहेन। अनेकविधकारकनिबद्धा नानाकारकनियता—तत्तत्कारकनियमितासाधारणरूपेण परिगृहीता भवति। कारकस्वरूपमपहाय तन्नियमितासाधारणव्यापारः परिगृहीतो भवति। तेन हस्तिपकदर्शनाद् हस्तिस्मरणवदसाधारणव्यापारावेदनात् तन्नियतकारकस्मरणेन सामान्यतः कारकज्ञानात् पचतीत्युक्ते केन [118a] किम्, कस्मिन्निति विभक्त्यर्थाश्रयेण प्रातिपदिकविशेषार्थाकाङ्क्षा भवतीति मतमेकं भवति। पचत्यादिधातुषु यावद्भिः कारकैर्निरूपिता व्यापाराः स्वीक्रियन्ते, तावन्त्यपि कारकाणि सूक्ष्मरूपाणि सन्ति पचत्यादिषु वाच्यतया निविष्टानि भवन्ति। सुन्दरो देवदत्तः पचतीत्यादौ पदत्रयेऽपि व्यक्तेरेकस्या एव प्रवेशाद् न व्यक्त्यावृत्तिकृतपौनरुक्त्यम्; सौन्दर्यादिविशेषणभेदेनैव परिहरणीयत्वाद् व्यवस्थैक्यमन्तरा समानविभक्तिकानां सामानाधिकरण्यलक्षणान्वयाप्रसक्तेः, तथा प्रकृतेऽपि कारकव्यक्तीनां धातुना विभक्तिभिश्च कथनेऽपि न पौनरुक्त्यम्; पुनरुपादाने स्वपरसम्बन्धार्थत्वात्। तत्तत्प्रातिपदिकार्थाभिन्नानि यानि तत्तद्विभक्त्युपात्तानि कारकाणि, तदभिन्नानि यानि धातूपात्तानि कारकाणि, तन्निरूपिता व्यापारा इत्यन्वयात्। तदेतदाह—कारकमिति ॥ तत्तद्विभक्तिभिरुपादीयमानं कारकसामान्यशरीरं सूक्ष्मरूपं पृथग्विभक्त्यगम्यतयैकधातुपरीगृहीतत्वेन पानकरसन्यायेन परस्परसम्बन्धात् परस्परासंसृष्टतयाऽगृह्यमाणमिह धातुषु प्रविष्टं भवति। तस्माद् हेतोः धातुदेहे कारकप्रवेशाद् हेतोः। तत्तद्विभक्त्युपात्तं कारकं धातूपात्तकारकशरीरेणामुनाऽभिन्नमेव भवति। तेन चाभिन्नेन धातूपात्तो व्यापारो निरूपितस्तत्तदुचितसम्बन्धेन। इत्यर्थः ॥२२०॥

[118b] धातुषु विशेषणमभिन्नविषयेति
व्याकरणवागपि समञ्जसतरैव।

यद्यखिलकारकमपीह विनिविष्टं
कष्टमतथा यदि विनष्टसमतायाः ॥२२१॥

एवं चौदनं स्वादु मृदु च पचतीत्यादौ क्रियाविशेषणस्य धातुवाच्ये फले-ऽभेदान्वयवादोऽपि घटते। तत्र विक्लित्तेः फलत्वेऽपि तदाश्रयव्यक्तेरपि
5 धातुपरिगृहीतत्वे सत्येव मृदुपदादेर्द्वितीयान्तत्वेन द्वितीयाविभक्तिप्रतिपाद्य-कर्मकारकस्य मृद्वभिन्नस्य धातुगृहीतविक्लिन्नेऽभेदेनान्वयसंभवाद् धातुना विक्लित्तिमात्रकथन ओदनमिति कर्मकारकस्यैव मृद्विति कर्मकारकस्य भेदेनैवाश्रयाश्रयिभावादिलक्षणसम्बन्धेनान्वयौचित्येनाभेदान्वयवादासाङ्गत्या-पत्तेः, अतस्तद्द्वारसंरक्षणाय धातुना व्यक्त्यंशः प्रतिपादनीय इति। तत्र
10 क्रियाविशेषणविभक्त्योपात्तकारकद्वाराऽभेदेनान्वये सत्योदनमिति पदेऽपि प्रातिपदिकार्थाभिन्नकर्मकारकस्य कृतधातूपात्तविक्लिन्नव्यक्त्यैवान्वये संभवति भेदेन विक्लित्त्या सहान्वये वैरूप्यापत्तेः। एवं च कारकान्तरेष्वपि तत्तत्कारकव्यक्तीनां कर्मकारकव्यक्तिवद् धातुपरिग्रहे सति तत्र विभक्त्यु-पात्तकारकाणामभेदान्वय इत्येव रमणीयमिति विवेच्यम्, तदेतदाह—
15 धातुष्विति ॥ धातुषु विशेषणम् क्रियाविशेषणम् मृदु पचतीत्यादौ मृद्वित्यादि-लक्षणम्। अभिन्नविषया अभिन्नत्वेनान्वेति धातूपात्तफलेन। इति व्याकरण-वागपि समञ्जसतरैव भवेत्। इह धातुदेहे। कारकम्[119a]खिलमपि यदि निविष्टं स्यात् यदि च धातुदेहे कारकसामान्यं निविष्टं भवेदिति। तर्हि विनष्टसमतायाः साम्यविनाशाद्, वैरूप्यात्—क्रियाविशेषणमभेदेनान्वेति,
20 ओदनमिति कर्मकारकं तु भेदेनान्वेति करणादिकारकवदिति वैरूप्यात्। कष्टं मतस्थापनम्। इत्यर्थः ॥२२१॥

[119b] धात्वभिहितं विशेषणं किमसत्त्वं
वत्यभिहिते किमुत तत्पदगृहीते।
दोषमभिधाय शिथिलं शिथिलकोट्यो-
20 र्दोषपरिमोचनमपीदृशमकारि ॥२२२॥

अथ "तेन तुल्यमि"[1]ति सूत्रोदाहरणेऽश्ववद् धावति देवदत्त इत्यादावश्वेन तुल्यं यथा भवति तथा धावतीति क्रियाविशेषणरीतिमाश्रित्य तस्य च क्रियायां भेदेन शाब्दमन्वयमभ्युपेत्य पश्चात् पार्ष्ठिकोऽभेदोऽर्थाद् देवदत्तेन सह सिद्ध्यति, एवं चाश्वतुल्यत्वं देवदत्ते पर्यवस्यतीत्युक्तम्, तदेतदयुक्तम्; "तेने"[2]ति सूत्रविवरणपरवार्तिकभाष्यविरोधात्, तत्र तुलया संमितम् तुल्यमिति तेनेत्यस्य तुल्यस्य च क्रियारूपत्वमभ्युपगम्याश्वतुल्यं धावतीत्यत्राश्वपदमश्वधावने लाक्षणिकमिति स्वीकृत्याश्वधावनतुल्यं धावनं देवदत्तस्येति क्रिययोरेव सादृश्यकथनात्। शुक्तिका हि रजतवदवभासत इत्यत्र प्रसिद्धरजतप्रमासदृशभानाश्रयीभूता शुक्तिरित्यर्थस्यान्यथाख्यातिसत्ख्यातिसाधारण्येन वत्करणाद् मतान्तरे निरसनं क्रियत इति कथनमसङ्गतमित्याशङ्कां वार्तिकभाष्ययोजनेन निराकरोति—धात्वभिहितमिति ॥ अत्रायं विभागः—"तेन तुल्यं क्रिया चेद्वतिरि"[3]ति सूत्रे क्रिया चेदित्यस्य किं तेनेत्यनेनाध्याहारेणाभेदेनान्वयः, किं वा तुल्यमित्यनेन शब्दमर्यादयैवाध्याहारं विनाऽभेदेनान्वयः, आहोस्वित् कारकान्तरेणेति त्रिकोटिकं संशयं मनसि निधाय प्रथमकोट्युल्लेखनपूर्वकाणि तद्दूषणपराणि च वार्तिकानि—"यत्तत्तृतीयासमर्थं क्रिया चेत् सा भवति। कथं च तृतीयासमर्थं नाम क्रिया"[4] "प्रत्ययार्थोऽविशेषित"[5] इति। द्वितीयकोटेरुत्थापनतद्दूषणपरवार्तिके द्वे "यत्तत्तुल्यं क्रिया चेत् सा भवति",[6] "तृतीयासमर्थमविशेषितमि"[7]ति। कोटिद्वयेऽपि दोषाभावपरं वार्तिकम् "तुलया च संमितम् तुल्यमि"[8]ति। मुख्यसिद्धान्तीभूततृतीयकोटिपरे द्वे वार्तिके—"प्रत्ययार्थविशेषणमेव ज्यायः",[9] "एवं चैव हि पठितमि"[10]ति। तत्र तृतीयान्तान्वयपरं वार्तिकम्, तृतीयान्तान्वयदोषयोर्द्वयोर्मध्ये प्रथमदोषपरं वार्तिकं च स्वाक्षरसंयोजनेन भाष्यकारो विभजते—"तेन तुल्यं क्रिया चेद् वतिः। इदमयुक्तं वर्तते। किमत्रायुक्तम्। यत्तत्तृतीयासमर्थं क्रिया चेत् सा भवतीत्युच्यते। कथं च तृतीयासमर्थं नाम क्रिया स्यादि"[11]ति। "इदमि"[12]त्यादि प्रथमकोट्यनुवादपूर्वकदोषपरवार्तिकावतारण "यत्तत्तृतीये"[13]त्यध्याहारेण "क्रिया चेदि"[14]त्यस्यान्वयकरणप्रकारपरम्। "कथं चे"[15]त्यादि तदन्वयदूषणपरम्। तृतीयान्तस्य सत्त्वपरत्वेन क्रियाया असत्त्व[120a]रूपतया तद्रूपत्वकथनं कथं स्यात्। सत्त्वासत्त्वयोरेकेन पदेनैकदा बोधयितुमशक्यत्वात्, तथा पदस्वाभाव्यादर्शनात्। उद्देश्य-

विधेययोरेकपदबोध्यत्वायोगे सत्त्वासत्त्वयोरेकपदबोध्यत्वस्य दूरापास्तत्वादिति भावः। अथ "प्रत्ययार्थौ विशेषित"[1] इति द्वितीयदूषणपरं वार्तिकं पूर्वदोषास्वरसपूर्वकमवतारयितुं प्रथमदोषं दूषयति--"नैतदयुक्तम्। सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते—ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्र इति। अतश्च 5 गुणसमुदाये। एवं ह्याह—

"तपः श्रुतं च योनिश्च एतद् ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः" ॥[2]

तथा गौरः, शुच्याचारः, पिङ्गलः, कपिलकेश इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्तीति। समुदायेषु च शब्दाः प्रवृत्ता अवयवेष्वपि प्रवर्तन्ते। तद्यथा—पूर्वे 10 प ञ्चा लाः। उत्तरे प ञ्चा लाः। तैलं भुक्तम्, घृतं भुक्तम्, शुक्लः, नीलः, कृष्ण इति। एवमयं ब्राह्मणशब्दः समुदाये प्रवृत्तोऽवयवेष्वपि वर्तत"[3] इति। अत्र गुणपदं क्रिया चेदिति क्रियाप्रकरणाद् जातिभिन्नधर्ममात्रपरं विज्ञेयम्। ब्राह्मणादिपदं क्रियापरत्वात् "क्रिया चेदि"[4]ति तद्विशेषणं सङ्गतमेव। अत्रेदं दूषणं शिथिलमेव। तथाहि—स्वयमेवान्यत्र जातिगुणक्रियासंज्ञाभि-15 श्चातुर्विध्यस्वीकाराद् ब्राह्मणादिशब्दा गुणादिसमुदायेऽपि वर्तन्त इति कथं सङ्गतं भवेत्। "तप" [5]इति कारिकायामपि जातिब्राह्मण इति कथनेन ब्राह्मणकारकमिति पदस्य श्रेष्ठब्राह्मणकारकमित्येव तात्पर्योन्नयनाद् गुणादिकमपहाय ब्राह्मणत्वादिजातेरेव तत्पदप्रवृत्तिनिमित्तत्वेन ब्राह्मणादिपदश्रवणे सति प्रवृत्तिनिमित्तविशिष्टस्यैवोपस्थितेरुचितत्वात्। गौर-20 [120b]कपिलपिङ्गलकेशत्वादिकमपि ब्राह्मण्ये प्रविष्टमित्यप्यसङ्गतमेव; श्यामलादिवर्णवति व्या सा दौ व्यभिचारात्, संप्रत्यपि श्यामादिब्राह्मणानां सत्त्वात्। शुच्याचारत्वमपि श्रैष्ठ्य एव नियामकम्, न तु ब्राह्मणपदप्रवृत्तिनिमित्तम्। एवं समुदाये शक्तः शब्द एकदेशेऽपि प्रवर्तत इति कथनेन शब्दैकदेशे प्रवृत्तिर्भवतीति सूचनाद् डित्थवद् धावतीत्यादौ 25 डित्थ पदस्य धावनादिसमुदाये शक्त्यभावेन समुदाये प्रवृत्त एकदेशे प्रवर्तत इति वक्तुमशक्यत्वात्, वतिप्रकृतिर्धावनादिक्रियापरा, तत्तुल्यत्वं धातूपात्तधावनादावन्वेतीत्यर्थस्य भाष्यानारूढत्वात्। शुक्तिका हि रजतवदवभासत इत्यत्रापि रजतपदं भानपरमिति योजनमपि भाष्याननुगुणमेव। अथ "प्रत्ययार्थौ विशेषित[6] इति द्वितीयदोषपरं वार्तिकमवतारयन् स्वाक्षरै-

योजयन् प्रश्नोत्तराभ्यामुदाहरणं दर्शयति—"यदि तर्हि तृतीयासमर्थं विशेष्यते, प्रत्ययार्थोऽविशेषितो भवति। तत्र को दोषः। तृतीयासमर्थात् कि[121a]यावाचिनो गुणतुल्येऽपि प्रत्ययः स्यात्—पुत्रेण तुल्यः स्थूलः, पुत्रेण तुल्यः पिङ्गल इती"[1]ति। पुत्रेणेति पुत्रवत् स्थूलः पिङ्गल इति प्रयोगः स्यादित्यर्थः। अथ द्वितीयां
5 कोटिमवतारयन्ननुवदति—"अस्तु तर्हि प्रत्ययार्थविशेषणम्। यत्तत्तुल्यं क्रिया चेत् सा भवती"[2]ति। अथ द्वितीयकोटिदूषणपरं "तृतीयासमर्थमि"[3] त्यादि-वार्तिकं विवृण्वन्नुदाहरति—"एवमपि तृतीयासमर्थमविशेषितं भवति, तत्र को दोषः। तृतीयासमर्थादक्रियावाचिनः क्रियातुल्येऽपि प्रत्ययः प्राप्नोति स्थूलेन तुल्यः पुत्रः, स्थूलेन तुल्यो याती"[4]ति। क्रियया युक्तं तुल्यम् क्रियातुल्यम्। क्रिया-
10 रूपं क्रियागर्भम्। यातीति क्रियारूपमेव। तत्र स्थूलवत् पुत्रः, स्थूलवद् यातीति प्रयोगः स्यादित्यर्थः। अत्र सर्वत्र पुत्रपदं ब्राह्मणपदवत् क्रियामपि वदतीत्याशयः। अथ प्रथमद्वितीयकोट्योरुक्तदोषोद्धारपरं "तुलया संमितं तुल्यमि"[5] तिवार्तिकं दूषणोद्धारपरमिति पक्षद्वयेऽपि "यदि चे"[6] त्यादिना द्वितीयपक्षे दोषोद्धारपरतया योजयन् "अथ चे"[7] त्यादिना द्वितीयपक्षे
15 दोषोद्धारपरत्वेन प्रकटयन् प्रश्नोत्तरपरिपाट्या योजयति—"नैष दोषः। यत्तत्तुल्यं क्रिया चेत् सा भवतीत्युच्यते। तुलया च संमितं तुल्यम्। यदि तृतीयासमर्थोऽपि क्रिया, प्रत्ययार्थोऽपि क्रिया ततस्तुल्यं भवती[8]"ति; उपमानोपमेययोस्तौल्यावश्यम्भावात्। तुल्यं क्रिया चेत् तत्प्रतियोगी तेनेत्यपि क्रियारूपमेवापेक्षितमिति। अक्रियावाचिनः क्रियातुल्यत्वेऽपि प्रत्ययः स्यादिति दोषः परिहृतो भवतीति
20 प्रथमकल्पे दोषोद्धारः। "अथवा पुनरस्तु यत्तत्तृतीयासमर्थं क्रिया चेत् सा भवतीत्येव। ननु चोक्तं प्रत्ययार्थोऽविशेषित इति। तत्र को दोषः। तृतीयासर्थात् क्रियावाचिनो गुणतुल्येऽपि प्रत्ययः प्राप्नोति पुत्रेण तुल्यः स्थूलः, पुत्रेण तुल्यः पिङ्गल इति। नैष दोषः; यत्तत्तृतीयासमर्थं क्रिया चेत् सा भवतीत्युच्यते। तुलया च संमितं तुल्यम्। यदि च तृतीयासमर्थ[121b]मपि क्रिया प्रत्ययार्थोऽपि क्रिया।
25 ततस्तुल्यं भवती"[9]ति। अत्रापि "तेने"[10]त्यस्य क्रियात्वे तुल्यमपि क्रियात्व एव तुल्यतामश्नुत इति गुणतुल्येऽपि प्रत्ययः स्यादिति दोषः समुद्धृतो भवतीति भावः। अत्रान्तिमपक्षद्वयसमाधानं यत्, तदपि प्रायः शिथिलमेव; अविकृतकारकसापेक्षस्य एव मुख्यक्रियारूपत्वात्, आख्याततुमुन्क्त्वादिस्थल एव तथात्वात् तेनेति तृतीयान्तस्यतुल्यमिति

द्वितीयान्तस्य तत्समानार्थवत्यन्तस्य वा मुख्यक्रियारूपप्रतिपादनसामर्थ्या-
भावेन द्वयोरप्युपमानतुल्ययोः क्रियात्वस्य वक्तुमशक्यत्वाद् गजवद् गच्छति,
गौरवत् प्रकाशते, बाधकवद् भवति, डित्थवद् धावतीत्यादौ जातिगुण-
क्रियासंज्ञिषु "तेन तुल्यमि"[1]त्यनयोः क्रियारूपत्वस्य कैरप्यननुभूतत्वात्।
5 तदेतत् सर्वं धात्विति श्लोकेन परिगृहीतं भवति। तथाहि—धात्वभिहितम-
सत्त्वं क्रियारूपम् "क्रिया चेदि"[2]त्युपादीयमानं चेत्यभिहिते तुल्येऽर्थे किं
विशेषणम्, किमुत "तेने"[3]ति तत्पदगृहीते विशेषणमिति कोटिद्वयं भवति।
तत्रैतयोः कोट्योः शिथिलयोर्द्वयोरपि शिथिलं दोषमभिधाय। पक्षयोरेतयोरपि
दोषपरिमोचनम् दोषनिराकरणमपि। ईदृशमेव शिथिलमेव। अकारि कृतम-
10 भूत्। वार्तिकभाष्याभ्यामित्यन्वयः। तत्र "तेने"[4]त्युक्तस्य क्रियारूपत्वं
न संभवतीति "कथं च तृतीयासमर्थं नाम क्रिये"[5]ति कथनात् प्रथमकोटिः
शिथिलैव; "नैतदयुक्तमि"[6]त्यादिवचसो निरुक्तरीत्या विसंष्ठुलत्वेन प्रथम-
कोटिशैथिल्योद्धारायोगात्। द्वितीयकोटिरपि तुल्यविशेषणं क्रियेत्येवं
लक्षणाऽपि शिथिलैव; तृतीयान्तवद् द्वितीयान्तस्यापि क्रियारूपबोधकत्वा-
15 भावात्। न्यायसाम्यात् तत्रैतत्पक्षयोर्दोषकथनं यत्, तदपि शिथिलमेव;
"तेने"[7]त्यस्य क्रियापरत्वे सति पुत्रेण तुल्यः स्थूल इत्यादौ प्रत्ययः स्यादित्या-
पादने क्रियमाणे पुत्रादिपदानां यथाकथञ्चिदेव क्रियापरत्वाभ्युपगमात्,
द्वितीयकल्पदोषेऽपि स्थूलेन तुल्यः पुत्र इत्युदाहरणे पुत्रपदस्य कथञ्चिदेव
क्रियापरत्वात्, स्थूलेन तुल्यो यातीत्यत्र स्थूलवद् यातीत्यापादनस्येष्टत्वेना-
20 दोषत्वात्। एवं च पक्षद्वयदोषपरिहारोऽपि शिथिल एव; सुबन्तार्थयोः
शुद्धक्रियात्वस्य वक्तुमशक्यत्वात् ॥२२२॥

[122a] अत्र कतरत् पदमपास्य ननु योग्यं
किं पुनरिति प्रकरमेव कथनेन।
दोषरहिता निगदिता ननु तृतीया
25 कोटिरतुलाऽप्यशिथिला भवति भाष्ये ॥२२३॥

अथ "किं पुनरि"त्यादिभाष्यं तृतीयसिद्धान्तकोटिपरस्य "प्रत्ययार्थ-

विशेषणमेव ज्यायः,"[1] "एवं चैव हि पठितमि"[2]ति वार्तिकस्य सावतरणं विवरणपरमिति प्रकारान्तरेण योजननिराकरणपूर्वकं योजयति—अत्रेति ॥ भाष्ये "किं पुनरत्र ज्यायः। प्रत्ययार्थविशेषणमेव ज्यायः। कुत एतत्। एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम्। वतिना सामनाधिकरण्यं कृतम्। अपि
5 च वतेरव्ययेषु पाठो न कर्तव्यो भवति। क्रियायामयं भवन् लिङ्गसङ्ख्याभ्यां न योक्ष्यत"[3] इति प्रत्ययार्थेति वार्तिकमवतारयति—किमिति ॥ अत्र तेनेति सूत्रे। ज्यायः श्रेष्ठं दूषणरहितम्, सूत्रकृदभिमतं गुणभूयिष्ठं योजनम् किं भवति कीदृगित्यनुक्तेरज्ञातयोजनव्यक्तिप्रश्नोऽयम्। वार्तिकमेवोत्तरं ज्यायः श्रेष्ठं[122b] सूत्रकृदभिमतमर्थाद् योजनं प्रत्ययार्थविशेषणमेव "क्रिया-
10 चेदि"[4]त्येतत्प्रत्ययार्थस्य वतिप्रत्ययबोध्यस्य तुल्यमित्यस्य विशेषणमित्येवं लक्षणमेव भवति। नेतरत् पूर्वोक्तकोटिद्वयम्। ननु पूर्वोक्तकोट्योर्मध्ये द्वितीयकोटिः प्रत्ययार्थविशेषणमेवेत्येवं लक्षणैव, कथं सा निराक्रियत इत्याशङ्क्य. "एवं चैव हि पठितमि"[5]ति वार्तिकात् सूत्रकृदभिमतयोजन-सूचकात् पूर्वोपात्तकोटिद्वयमप्येवकारेण निराक्रियते, न प्रथमैव कोटिरिति
15 मनसि निधाय "एवं चे"[6]ति वार्तिकं ज्यायो योजनसूचकतया योजयति—कुत इति ॥ ज्यायो योजनं प्रत्ययार्थविशेषणमेवेति केन हेतुनेत्यर्थः। "एवं चैव हि पठितमि"[7]त्यस्य वार्तिकस्य द्वेधा योजनम्—अष्टाध्यायीपाठानुरुद्धम्, गणपाठानुरुद्धं चेति। एवं चैव हि विलक्षणयोजनारूपमेव। तेनेति सूत्रं पठितम्। एवं चैव हि प्रत्ययार्थविशेषणमेव ज्याय इति मनसि निधायैव। वते-
20 रव्ययत्वं तेनेति सूत्रान्वयरीत्या नायातीत्यव्ययगणे वतिस्वरूपं पठितमिति द्वेधा वार्तिकार्थः। तत्र वार्तिकस्यास्याष्टाध्यायीगतसूत्रपाठरीत्या योजन-मपेक्षितरूपेण न दर्शयति। "एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितमि"[8]ति। अत्र कृत्वेत्यादिसूत्रमित्यन्तं प्रथमव्याख्याने पूरितम्। पदपूरणेन वार्तिक-योजनेऽपि प्रत्ययार्थविशेषणमेव ज्याय इति सिद्धान्तवार्तिकस्य तृतीय-
25 कोटिपरो भावो न प्रकट इति मनसि निधाय पठितमित्येतद् विशदयति—वतिना सामानाधिकरण्यं कृतमिति। तुल्यमित्यस्मिन्नर्थे वाचकतासम्बन्धेन वतिर्भवति, तस्मिन्नेवार्थे क्रिया। धातुनोपादीयमानाऽविकृ[123a]तकारकापेक्षिणी क्रिया क्रियाकारकभावलक्षणसम्बन्धेन भवति चेत्, अत्र तुल्यरूप एकस्मिन्नर्थेऽधिकरणे वतेः क्रियायाश्च स्वस्वोचितसम्बन्धेन संनिवेशे सामानाधि-

करण्यं "तेने"[1]ति सूत्रेण पा णि नि ना कृतमेव। अत्र सामानाधिकरण्यमित्यनेन तुल्यक्रियापदार्थयोरभेदो न विवक्षितः ; तुल्येन सामानाधिकरण्यात् क्रियाया इत्यनुक्त्वा वतिनेति विशेषनिर्देशात्, पठितमिति कर्मप्रत्ययान्तपाठस्वारस्यात्, कृतमिति विशिष्य यत्नसाध्यतासूचनात्, अभेदस्य शाब्दमर्यादया
5 श्रवणमात्रेण बुध्यमानत्वेन तत्र यत्नांशोपादानानुपयोगात्, वतिक्रिययोरेकाधिकरणवर्तनस्यैव विशिष्य यत्नपूर्वकत्वात्। एवं तुल्यं द्वितीयान्तं प्रथमान्तं वा गजेन तुल्यं यातीत्यत्र पठ्यमानं कर्मकारकभावेन कर्तृभावेन वा क्रियायामन्वेतीति वत्यन्तमपि तथैवान्वेतीति पूर्वोक्ता दोषाः सर्वेऽपि निर्विशङ्कमुद्धृता भवेयुरिति तृतीया कोटिरेव सिद्धान्तत्वेनेह प्रकटिता
10 भवति। अत एव धात्वर्थव्यापारलक्षणक्रियायां भेदेनान्वयः करणादिकारकवत्। तत एव तद्वदेव वतेर्लिङ्गसङ्ख्याद्यन्वयेनाव्ययत्वं न प्राप्तमिति पा णि नि नाचार्येणाव्ययप्रकरणेऽव्ययत्वमपूर्वं संपादयितुं वतिस्वरूपं पठितं भवति। अत्र यदि क्रियातुल्ययोरभेदान्वयः, तर्हि वतेरसत्त्वाभिधायित्वात् स्वत एव क्रियाविशेषणतास्वाभाव्यादव्ययत्वे सिद्धे वतेरव्यय-
15 गणे पाठोऽनर्थक एव भवेत्। पाठश्च कृ[123b]तः। अतो ज्ञायते—नेदं तुल्यं क्रियया सहाभिन्नं विशेषणं सूत्रकृतो विवक्षितं भवति, किन्तु भिन्नविशेषणमेव कारकान्तरवदिति। तत्र वतिना सामानाधिकरण्यं कृतमित्यत्र ग्राहकं लिङ्गं वतेरव्ययेषु पठनमिति पश्चादव्ययपाठव्युत्पादनं कृतम्। अत्राचार्येण पा णि नि ना तुल्यस्य क्रियायां भेदेनैव क्रियाकारक-
20 भावरीत्यैवान्वयो विवक्षितः। अत एव लिङ्गसङ्ख्यान्वयात् कारकान्तरवदनव्ययत्वे प्रसक्तेऽव्ययत्वार्थमव्ययगणे पाठः कृतः। यद्ययमन्वयो भेदेन न विवक्षितः स्यात्, क्रियायामसत्त्वेन रूपेणाभेदान्वय एव विवक्षितो भवेत्, तर्हि वतेरव्ययेषु पाठो न कर्तव्यो भवति। क्रियायां वतिरभेदेनार्थबोधनपरो भवन् लिङ्गसङ्ख्याभ्यां न योक्ष्यते। अथ च लिङ्गसङ्ख्याभ्यां
25 न योक्ष्यत इति बुद्ध्वाऽव्ययगणे वतेः पाठः कृतः। तस्मात् तुल्यस्य क्रियायां भेदेनैवान्वयो विवक्षित इति "अपिचे"[2]त्यादिग्रन्थभावः। "तेन तुल्यमि"[3]त्यस्मिन्नर्थे क्रिया चेद् भवेत् संबन्धेन क्रियाकारकभावलक्षणेन, तर्हि वतिर्भवतीति वतिना सामानाधिकरण्यकरमेव प्रत्ययार्थे भेदेन विशेषणं क्रियेति पा णि नि विवक्षितमित्यत्र प्रमाणम्। अपि च तर्कोऽपि तत्र

प्रमाणमिति प्रमाणद्वयाभिप्रायेणा"पचे"[1]त्युक्तिरपि सङ्गता भवति। यद्वा वतिना सामानाधिकरण्यं कृतम्, इदमेव भेदेन तुल्यस्यान्वये मानम्। युक्त्यन्तरमाह—वतेरव्ययेषु पाठो न कर्तव्यो भवतीति काकुः। वतिः क्रियायां भवन् लि[124a]ङ्गसङ्ख्याभ्यां न योक्ष्यत इत्यपि काकुः। लिङ्ग-
5 सङ्ख्याभ्यां युज्येतापि। अव्यये पाठः कर्तव्यो भवन् पा णि नि ना कृत एवेत्यर्थः। इदमपि तत्रैव मानमित्यर्थः। इदं च भाष्ययोजनमत्रेत्यादिभि-स्त्रिभिः श्लोकैः स्पष्टीकृतः। अत्र तुल्यमिति प्रत्ययार्थस्य क्रिया चेदिति समानाधिकरणं विशेषणमिति प्रथमोपक्षिप्ता द्वितीयकोटिरेव सिद्धान्तत्वेन विवक्षिता। तथैव "किं पुनरत्र ज्याय"[2] इति वार्तिकस्य योग्यावतारण-
10 दर्शनाद् द्वितीयकोटेरेव सिद्धान्तत्वे योग्यत्वात् कतरदत्र ज्याय इत्येवा-वतारणं दृश्येत। तस्मादिदमवतारणं तृतीयकोटेरेवानुगुणम्। तदेतदाह—अत्रेति॥ अत्र सिद्धान्तवार्तिकावतारणभाष्ये। कतरदिति योग्यम् द्वयो-रन्यतरपरिग्रहोचितम्। पदमपास्य "किं पुनरि"[3]ति तृतीयकोट्युचितपद-ग्रहणात् सूत्रकृत्तात्पर्यावेदकवार्तिकानुगुण्येनैव भाष्यप्रवृत्तेः। अत्र भाष्ये।
15 दोषरहिताऽतुला सर्वोत्तमा। अशिथिला दृढा। तृतीया कोटिर्गदिता भवति। इत्यन्वयः॥२२३॥

[124b] योजितमथैवमिति वार्तिकमुभाभ्या-
मत्र वतिनेति वचसाऽपिच गिरा च।
काकुमुपकल्प्य च वतेरिति गिरौ द्वे
20 व्यत्ययविशेषकथनेन ननु योज्ये॥२२४॥

अथ "एवं चैव हि पठितमि"[4]ति वार्तिकं तृतीयज्यायःपक्षपरिग्रहहेतुपरं युक्तिद्वयपरतया द्वेधा भाष्ये योजितमिति विवेचयति—योजितमिति॥ "एवं चैव ही"[5]ति वार्तिकम्। अथ प्रतिज्ञावाक्यविवरणानन्तरम्। वतिनेति वचसा-ऽपिचेति गिरा चोभाभ्यां योजितं भवति। द्वेधा युक्तिपरत्वेनेत्यर्थः। अथा"पि-
25 चे"[6]त्यत्र वतेरिति क्रियायामिति वाक्यद्वयं काका योजयति—काकुमिति॥ वतिक्रिययोस्तुल्यरूपेऽर्थे सामानाधिकरण्यं कुर्वतः पाणिनेराचार्यस्य भेदे-

नैव क्रियाकारकभावेन तुल्यस्य धात्वर्थेऽन्वयात् क्रियायामयं वतिर्भेदेन सम्बन्धेन भवन् लिङ्गसङ्ख्याभ्यां न योक्ष्यते। योक्ष्यत एव ; सत्त्वरूपत्वात्। एवं च सत्त्वपरस्य तत्त्वस्य वतेरव्ययेषु पाठो न कर्तव्यो भवति। किम्। कर्तव्य एव सन्। कृतश्चाव्ययगणे वतिपाठ इत्यर्थः। एवं काकुस्वरं 5 परिगृह्य वतेरिति गिरौ द्वे वतेः क्रियायमित्येवं लक्षणे। व्यत्ययविशेषकथनेन व्यत्ययस्य यो विशेषः, तत्कथनेन। कर्तव्य इत्यस्याकर्तव्य इति न योक्ष्यत इत्यस्य योक्ष्यत इति विवेचनेन योज्ये। इत्यर्थः ॥२२४॥

[125a] तुल्यमिति कारकवशं सदविशेषं
याति ननु धातुमिति पा णि नि विवक्षा ।
10 नो यदि वतिर्न गणमध्यपठितः स्या-
देवमपि चेत्युचिततर्कपरमेव ॥२२५॥

अथापिचेति काका योजितम्, तद्गतिकरीत्यामेव भवतीत्यस्वरसात् तर्करीत्या योजनीयमिति—तुल्यमिति ॥ तुल्यमित्येतदविशेषं सत्। जाति-परविशेष्यरहितत्वेनैकत्र विशेषे पर्यवसानाभावात् सामान्यपरम्। अत 15 एव सामान्यलिङ्गेन क्लीबेनाक्रान्तं सत्। कारकवशं च सत् द्वितीयाप्रति-पाद्यमानकारकाधीनं च सत्। धातुम् धातुगम्यव्यापारम्। क्रियाकारक-लक्षणसम्बन्धेन याति सम्बध्नाति—अन्वेति। इति पा णि नि विवक्षा यदि इयं विवक्षा पाणिनेर्न भवेत्। वतिरव्ययगणमध्ये पठितो न स्यात् पा णि नि ना। पठितश्चायं वतिरव्यये। अतोऽत्र कारकतयैव क्रियाविशेषणं धात्वर्थेऽ-20 न्वेति। "एवञ्चे"[1]ति वचनं समुचिततर्कपरमिति न काप्यनुपपत्तिः। इति भावः ॥२२५॥

[125b] तुल्यमिति लोकविदिते किलपदार्थे ।
कारकितया वसति धातुसमुपात्ता ।
व्यावृतिरियं यदि तर्हि वतिरत्र
25 स्यादिति युगाधिकरणं भवति चैकम् ॥२२६॥

अथ वतिना सामानाधिकरण्यं कृतमित्येतद् विशदयति—तुल्यमितीति ॥ तुल्यरूपेऽधिकरणे वतिना सामानाधिकरण्यं क्रियायाः कृतमिति भाष्यार्थः। तुल्यमिति लोकप्रसिद्धेऽर्थे समुपात्ता व्यावृतिरियम् व्यापारोऽयम्। कारकितया क्रियाकारकभावलक्षणसम्बन्धेन। यदि वसति, तर्हि वतिप्रत्ययोऽत्र तुल्येऽर्थे
5 स्यादिति युगाधिकरणम् युगस्य वतिक्रियाद्वयस्याधिकरणमेकं भवति चेत्यर्थः। अत्र सामाधिकरण्यपदेन नाभेदो विवाक्षतः। इत्याशयः ॥२२६॥

[126a] तत्र तदुपक्रमकसूत्रयुगमन्य-
च्छाब्दमतिभेदमनुरुध्य परिणद्धम्।
वृत्तिरियमत्र ननु तत्रमुखसूत्रे
10 नो खलु समर्थविधिसंश्रयणसिद्धा ॥२२७॥

अथ शुक्तिका हि रजतवदवभासते रजतार्हमवभासते इति "तदर्हमि"[1]ति सूत्रसिद्धो वतिर्भवत्विति पक्षान्तरं कथयिष्यन् प्रसङ्गात् 'तेन"[2] "तदि"[3]ति सूत्रद्वयमध्यवर्ति "तत्र"[4]ति सूत्रमपि भावतो योजयति तत्रेति ॥ मथुराया-मिव मथुरावत् पाटलिपुत्रे गृहम्, राज्ञ इव राजवद् देवदत्तस्य बलमित्येत-
15 द्रूपसंपत्तये "तत्र"[5]त्यादिसूत्रं न रचनीयम्। "तेन तुल्यमि"[6]त्यनेन गतार्थत्वात्। राज्ञा तुल्यं राजवद् देवदत्तस्य बलं भवति, मथुरया तुल्यं मथुरावत् पाटलिपुत्रे भवति गृहमिति प्रयोगसम्भवेनार्थक्यात् "तत्रे[7]ति सूत्र-प्रयोजनाभावात्। एवं "तदर्हमि"[8]त्यपि मा भवतु; राजार्हं वर्तते राजवद् वर्तते देवदत्त इत्यत्र राज्ञा तुल्यं राजवद् वर्तते इति वक्तुं शक्यत्वा-
20 दित्याशङ्क्य "तत्र तस्येवे"[9]त्यत्र "तेन तुल्यमि"[10]त्यनेन गतार्थत्वे सम्भवत्यपि शाब्दवैलक्षण्यात् "तदर्हमि"[11]त्यत्रापि शाब्दबोधवैलक्षण्यस्य सत्त्वात् सूत्र-द्वयमप्यवश्यादरणीयमित्याह—तत्रेति ॥ तत्रोपक्रमम् "तत्र तस्येवे"[12]ति। तदुपक्रमम् "तदर्हमि"[13]त्येवंलक्षणमेतत्सूत्रयुगम्। "तेने"[14]त्यस्मादन्यत् शाब्द-बोधभेदावलम्बेन इह वतिप्रकरणे निबद्धम्। तत्रमुखसूत्रे "तत्र तस्ये-
25 वे"[15]ति सूत्रे। अत्र वृत्तिरियम् तद्धितवृत्तिरियम् वतिलक्षणा। समर्थविधि-

संश्रयणसिद्धा **न भवति, तत्र सप्तम्यन्तात् षष्ठ्यन्ताच्चेवकारसामर्थ्यासिद्धेः। तथाचानुशासनबलादसमर्थेयं वृत्तिः। इति भावः** ॥२२७॥

[126b] अन्वयमुपैति ननु नेवपदबोध्यं
सप्तमिकयाऽर्थमनुरुध्य न च षष्ठ्या।
5 यत्तदुपसंवलितथालभिहितार्थ-
द्योतकतयेवपदमाकलितमाद्यैः ॥२२८॥

**अथेवकारस्य सप्तम्यन्तषष्ठ्यन्ताभ्यामसामर्थ्यं विशदयति**—अन्वयमिति ॥ इवपदबोध्यम् **सादृश्यम्**। सप्तमिकया तदर्थमनुरुध्यान्वयम् **सम्बन्धम् नैवोपेतीत्यन्वयः। "तत्रे"[1]ति सप्तम्यर्थाधिकरणस्य क्रियासाकाङ्क्षत्वेन सादृश्येऽ-
10 न्वयायोगाद् देवदत्तस्येव यज्ञदत्तस्य धनं वर्तत इत्यादाविवार्थसादृश्यस्याखण्डस्य षष्ठ्यर्थेनान्वयसंभवेऽपि तस्य षष्ठ्यर्थस्य धनेनैवान्वयौचित्याद् धननिरूपितसादृश्यस्य धने विवक्षितत्वेन देवदत्तसदृशं यज्ञदत्तस्य धनमित्यर्थविवक्षणाद्दु देवदत्तधनतुल्यं यज्ञदत्तधनमित्येव विवक्षणात् षष्ठ्यर्थस्येवान्वयायोगाच्च। अथेवकारार्थस्वाभाव्यादपि क्रियान्वयित्वलक्षणात् सप्तमी-
15 षष्ठ्यर्थयोरन्वयोऽसङ्गत इति विवेचयति**—यदिति ॥ आद्यैः **आचार्यैरालङ्कारिकादिभिः।** इवपदं **यत्तत्पदाभ्यामुपश्लिष्टथाला यथा तथेत्येवंलक्षणेनाभिहितो योऽर्थः, तद्द्योतकत्वेन।** आकलितम् **परिगृहीतम्। इवपदेन यथेति तथेत्यर्थद्वयं यथेत्येतदुपमानवाक्यान्वयि, तथेत्येतदुपमेयवाक्यान्वयि चेति वृद्धैराश्रितम्। इति भावः** ॥२२८॥

20 [127a] वाक्ययुगमेकमिवकारघटना चेत्
तुल्यघटना यदि पदानि परमेकम्।
वाक्ययुगलेऽत्र न समर्थपदलाभ-
श्शासनवशाद् भवति वृत्तिरसमर्थे ॥२२९॥

इदमिवकारस्यासामर्थ्यं वाक्यद्वयघटकत्वेन दर्शयन्नसमर्थैवेयं वृत्तिरिति विशदयति—वाक्येति ॥ इवकारघटना चेत् तत्र वाक्यद्वयमेकम् वाक्यैकवाक्यता तत्रेति भावः। पद्ममिव मुखं सुन्दरं भातीत्यत्र पद्मं यथा सुन्दरं भाति तथा मुखं सुन्दरं भातीति वाक्यैकवाक्यतायाः स्पष्टत्वात्। तुल्यघटना यदि
5 तर्हि तत्र पदानि एकं परम् उत्कृष्टं भवति ; पद्मेन तुल्यं मुखं भवतीत्यत्र पदैकवाक्यताया अतिस्पष्टत्वात्। तत्र तुल्यपदघटनास्थले सामर्थ्यं तिष्ठत्येव। इवकारघटने वाक्यद्वयेन यथा तथेत्यंशद्वयस्य वाक्यभेदेन क्रियान्वयित्वेनैकार्थाभावात् सप्तम्यन्तषष्ठ्यन्तयोरिवकारेणासामर्थ्यमेवेति। समर्थपदलाभः समर्थस्य पदं स्थानम्, तल्लाभो न भवति। शासनादसमर्थेऽपि वृत्तिः।
10 इत्यर्थः ॥२२९॥

[127b] अत्र वतिरेव वदतीवपदबोध्यं
साम्यमपि सप्तमिकयैत्यपि च षष्ठ्या।
खण्डविधयैव तदनेकविधबोधो
वृत्तिविषयेऽपि विगतेर्न यदखण्डम् ॥२३०॥

15 अथ वत्यन्तस्थलेऽत्रेवस्थल इव शाब्दबोधप्रकारं दर्शयति—अत्रेति ॥ इवपदबोध्यं यथा तथेति स्वरूपम्। अत्र "तत्र तस्येव"[1]त्युदाहरणे इववद्वतिरेव वदति। वतिरेव सप्तम्या षष्ठ्या च साम्यमपि एति प्राप्नोति दधीत्यादौ लुप्यमानार्थबोधकताया गत्यभावाद् दधिपदे स्वीकारेऽपि "तत्र तस्येवे"[2]त्यर्थे वतेर्विधानेन विधीयमानवतिनैव विभक्त्यर्थकथनसम्भवादगतेरभावात्।
20 प्रत्ययत्वाच्च वतिरयं तसिरिव विभक्तिस्थानापन्न इति विवेकः। तद्धितवृत्तिविषयेऽपि विगतेः गत्यभावात्। यत् यस्मात्। अखण्डं वस्तु नास्ति। खण्डविधयैव इवकारस्थलवदनेकविधबोधो भवतीत्यर्थः। म थु रा वत् पा ट लि पु त्रे प्राकारः। म थु रा यां यथा प्राकारो भवति तथा पा ट लि पु त्रे प्राकारो भवतीत्यर्थः। अत्र विशिष्टे विशिष्टनिरूपितधर्मैक्याव-
25 वगमात् प्रत्येकं सप्तम्यन्तस्य सप्तम्यन्ते प्रथमान्तस्य प्रथमान्त इत्येवं सादृश्यं भवतीत्यर्थः। राज्ञ इव देवदत्तस्य धनं भवतीत्यत्रापि षष्ठ्यन्तयोर्धनयोश्च सादृश्यं पर्यवस्यतीति विवेचनीयम् ॥२३०॥

[128a] यद्रजतवत्पदगतो वतिरिहार्हं
बोधयति भासनसमन्वितततया यत् ।
शुक्तिरपि कल्प्यरजतार्हमविभेदा-
दर्हमपि तुल्यसममेव ननु बोधे ॥२३१॥

5 अथ शुक्तिका हि रजतवदवभासत इत्यत्र वतिरयं "तदर्हमि"[1]ति विहितोऽस्तु विरोधाभावादित्याह—यदिति ॥ इह अध्यासभाष्ये। रजतवत्पदगतो वतिः श्रूयमाणो भासनसमन्वितततयाऽर्हम् रजतवदवभासत इति धातूपात्तभानक्रिया-विशेषणत्वेनार्हम् । "तदर्हमि"[2]ति सूत्रप्रमाणानुरोधेन यत् यस्मात् कारणाद् बोधयति । तत तस्मात् कारणात् । अस्मिन् प्रकरणे क्रियायां विशेषणस्य 10 क्रियाकारकभावेनान्वीयमानस्याभेदेन किञ्चिद्विशेष्यसाकाङ्क्षस्य पृष्ठतो विभक्त्यन्तेषु दशस्वपि यथायोगमन्वयौचित्यात् । शुक्तिरप्यविभेदात् विशिष्टो भेदो विभेदः, अत्यन्तभेदः, तदभावोऽविभेद ईषद्भेदसहिष्णुरभेदः, तमव-लम्ब्य । कल्प्यरजतार्हम् कल्प्यम् अनिर्वचनीयम्, तदानीं संपद्यमानम्, रजतमर्हतीति रजतार्हं भवति । अथ कथं "तदर्हमि"[3]ति विहितवत्यर्थस्य 15 पार्ष्ठिकतया सुबन्तादिनाऽभेदेनान्वय इत्याशङ्क्य अर्हमपि बोधे शाब्दबोधे तुल्यसममेव "तेन तुल्यमि"[4]ति सूत्रात् क्रियाग्रहणानुवृत्तिक्रियाविशेषणसाम-र्थ्यात् तुल्यस्थलवदेव बोध इति पार्ष्ठिकाभेदेनार्हमन्वेत्येव विभक्त्यन्तार्थेन । इति भावः ॥२३१॥

[128b] अर्हति हि रूप्यमिह शुक्तिरविभेदा-
20 च्चित्तरजतेन परिलिप्तवपुषैषा ।
भाति यदभिन्नविधया तदविभेदी
नैशकलधौतमियमर्हति कदाऽपि ॥२३२॥

अथार्हन्तावत् शुक्त्यभिन्नं तुल्यवत् पृष्ठतो भवतु रजतमर्हतीति रजतार्ह-मिति, रजतार्हयोर्भेदप्रतीतेरर्हाभिन्नायाः शुक्तेः कथं रजताभेदः, भिन्नाद-

भिन्नस्य भिन्नत्वौचित्यादित्याशङ्क्य गौणमभेदमादायाभेद इत्याह—अर्हतीति ॥ नीलघटयोरभेदः संसर्ग इत्यत्राभेदे वास्तवेऽपि यथा पदार्थतावच्छेदकभेदायत्तगौणं भेदमादाय नीलघटयोरिति द्वित्वव्यवहारः, तथा रजतमर्हतीति रजतशुक्तयोर्वस्तुतो भेदेऽपि गौणाभेदमादायाभेदव्यवहारोऽपि भवति। शुक्तिर-
5 विभेदात् रूप्यम् जैवं रूप्यमर्हति। हि यस्मात् कारणात्। एषा भासमाना शुक्तिः। चित्तरजतेन मनोमयरजतेन। परिलिप्तवपुषा अभिन्नविधयाऽनिर्वचनीयरजतेन सहाभिन्नत्वेन भाति। तत् तस्मात् कारणात्। शुक्त्यनिर्वचनीयरजतयोर्गौणाभेदः। सुवर्णपरिलिप्तशङ्खे सुवर्णं शङ्ख इति गौणव्यवहारदर्शनादिहापि तथैवोपपत्तेः। अथ यथा "तेन तुल्यमि"[1]ति विहितवतिपक्षे
10 पक्षान्तरनिराकरणम्, अनिर्वचनीयरजतव्यक्तिभानात्, तथैवार्हार्थवति पक्षेऽपि परपक्षनिराकृतिर्भवतीत्याह—नेति ॥ इयम् शुक्तिः। ऐशं कलधौतम् रजतम्। कदाऽपि नार्हति ऐशरजतरजतत्वभान एव परमतप्रसक्तेः; उक्तदिशा जैवरजतव्यक्तिभानेन परमतप्रसक्तेरयोगादिति परपक्षोऽप्यत्र निराकृतो भवति। इति भावः ॥२३२॥

15 [129a] शुक्तिशकले किल सती रजततैति
व्यक्तिमिति भाष्यगदितेऽन्तिममतेऽपि।
शुक्तिरपधर्मतनुसत्यपि हि रूप्यं
नार्हति नवीनरजतस्य विरहेण ॥२३३॥

अथ प्रसिद्धरजतं नार्हत्यभेदेन, किन्तु मानसरजतमेवेत्यनेनान्यथाख्यातिमतमपि
20 निराकृतमित्याह—शुक्तीति ॥ शुक्तिशकले व्यापकत्वेन स्वत एव विद्यमाना रजतता। अभिव्यक्तिं दोषसामग्रीवशात् शुक्तित्वतिरस्कारेणैतीति भाष्यगदितेऽन्तिममते सत्ख्यातिवादेऽपि शुक्तिरपगतशुक्तित्वधर्मकतनुसहिताऽपि न रजतमर्हति; नवीनरजतस्य विरहेण तदभेदायोगादैशरजताभेदभानस्याप्यस्वीकारात्। इति भावः ॥२३३॥

25 [129b] सर्वभुवनप्रथितविभ्रमनिमित्त-
स्वेन्द्रियजवित्तिविषयत्वविरहेण।

भ्रान्तिरियमन्तरुदिता कथमिव स्या-
दित्यथ कथं पुनरीक्षयति दोषम् ॥२३४॥

**अथ** तथाप्यन्योन्यस्मिन्नित्यादिना **गृह्यमाणारोपलक्षण आन्तरेऽध्यासे निरूपित आन्तरोऽयमध्यासोऽलीककल्प एव ; प्रसिद्धाध्यासानन्तर्भावात्, प्रसिद्धाध्यासातिरिक्ताध्याससद्भावे मानाभावादिति मनसि निधाय प्रसिद्धाध्यासस्वरूपे** आहेत्यादिना **पृष्टे** स्मृतिरूप **इत्यादिना सिद्धान्तिना लोकप्रसिद्धस्मर्यमाणारोपे निरूपिते सति पूर्वपक्षी स्वाभिप्रायमाह**—कोऽयमिति । **अत्रोपाश्रितं प्रसिद्धाध्याससामग्र्या अभावादान्तराध्यासो मिथ्येत्याक्षेपमाश्रित्य** कथं पुनरित्या**दिग्रन्थमवतारयति**—सर्वेति ॥ **सर्वलोकप्रसिद्धो यो विभ्रमः, तस्मिन् विभ्रमे यत् निमित्तं स्वेन्द्रियजन्यज्ञानविषयत्वं पुरोवर्तिवस्तुगतं प्रसिद्धशुक्तिरजतस्थले शुक्तिगतत्वेन सिद्धम्, तस्य निमित्तस्यात्मभ्रमस्थलेऽभावाद्** इयमन्तर्भ्रान्तिः कथमिवोदिता स्यादिति **तात्पर्येण** कथं पुनरित्या**दिना ग्रन्थेन निरुक्तं** दोषं ईक्षयति **दर्शयति । इत्यर्थः** ॥२३४॥

[130a] युष्मदुपसञ्जनितवित्त्यविषयत्वाद्
नैव विषयत्वमुपयाति परमात्मा ।
लोकविदितभ्रमनिदानरहितत्वाद्
विभ्रमकथाऽऽत्मनि कृता कथमिव स्यात् ॥२३५॥

**अथ** कथं पुनरित्या**द्याक्षेपग्रन्थभावं दर्शयति**—युष्मदिति ॥ **अयमात्माऽध्यासानास्पदो भवितुमर्हति ; इन्द्रियादिजन्यप्रत्ययाविषयत्वात्, तत्त्वं च युष्मत्पदजन्यप्रत्ययाविषयत्वात्, युष्मदर्थस्यैव प्रत्ययविषयत्वात्, तथैव** युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरित्यत्र **सूचनात्, शुक्तिरजताध्यासे च शुक्ताविन्द्रियजन्यज्ञानविषयीभूतायां पुरोवस्थितत्वेन युष्मत्पदार्हायां रजताध्यासदर्शनात्, प्रकृते चात्मनः पुरोवर्तित्वाभावात्,** आत्मस्वरूपत्वात्, **विषयत्वाभावाच्च कथमिवात्मन्यविद्यादिविषयतद्धर्माणामध्यास इत्याक्षेपभाष्यार्थः ।**

युष्मदुपसञ्जनितवित्त्यविषयत्वाद् आत्मा परं **स्वाभाविकत्वेन समुत्कृष्टं** विषयत्वं नैव

प्राप्नोति। एवं च लोकविदिते ये भ्रमनिदाने पुरोवर्तित्वविषयत्वे, तयोः कारणयोः प्रत्यगात्मन्यभावात् विषयतद्धर्मविभ्रमकथा कथमिव कृता स्यात्। साधनाभावेन कथमपि कर्तुमशक्यत्वात्। इत्यर्थः ॥२३५॥

[130b] अस्मदुपसञ्जनितवृत्तिविषयोऽहं
5 गौर इति विभ्रमपदादिषु सदात्मा।
नैव विषयत्वमखिलास्वपि निदानं
भ्रान्तिषु न खल्वहमिति भ्रमगतं तत् ॥२३६॥

अथ युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषीति पूर्वपक्षवाक्ये युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरिति ग्रन्थतात्पर्यमादायाविषयत्वं प्रत्यगात्मन
10 इति विवक्षामुल्लिख्य तत्तावद् न संभवति; अस्मत्प्रत्ययविषयत्वादात्मन इत्यर्थकम् न तावदित्यादिसिद्धान्तभाष्यं तात्पर्यतो व्याचष्टे—अस्मदिति ॥ गौरोऽहम् काणोऽहम्, बधिरोऽहम् पण्डितोऽहमित्यादिभ्रमस्थानेषु सदा तावत् प्रत्यगात्मा विशिष्टवेषेण अस्मदुपसञ्जनितवृत्तिविषयो भवति अहं ममेत्यादिजनितबुद्धिविषयो भवति। अहमध्यासानन्तरमेवाहं गौर इत्याद्यध्यासेन
15 प्रथमाध्यासे विशिष्टरूपस्य प्रत्यगात्मनोऽस्मत्प्रत्ययविषयत्वेनोत्तराध्यासार्हत्वादात्मसंबन्धिभ्रमत्वावच्छेदेन प्रत्यगात्मनोऽध्यासात् पूर्वं विषयत्वं नेति नियमो नोपपद्यते; गौरोऽहमित्यादिभ्रमविशेषे अहम्, माम्, मयेत्यादिप्रत्ययविषयत्वसंभवात्, विषयविषयि[131a]णोरित्यत्रास्मत्प्रत्ययगोचरत्वेन विषयित्वसाधने विशिष्टवेषेणास्मत्प्रत्ययविषयत्वस्य शुद्धवेषेण विषयित्वस्य
20 विषयिघटितरूपायत्तविषयित्वस्य च विवक्षणात्। अतो भ्रमविशेषेऽस्मत्प्रत्ययविषयत्वसत्त्वात् प्रसिद्धभ्रमहेतुभूतविषयत्वमस्तीत्यान्तरभ्रमविशेषोऽहं गौर इत्यादिः सिद्ध्यत्येव। अथ सर्वेष्वान्तरभ्रमेष्वस्मत्प्रत्ययविषयत्वेनात्मनः सर्वभ्रमाधिष्ठानत्वमस्त्वित्याशङ्क्य मूलाहंभ्रमे विषयत्वं नेति व्यभिचारं दर्शयति—नैवेति ॥ अखिलास्वपि भ्रान्तिषु विषयत्वं नैव निदानं
25 भवितुमर्हति; स्थूलसूक्ष्मकारणशरीरचितामहमित्यैक्यभ्रमे जायमाने ततः पूर्वमस्मत्प्रत्ययविषयत्वाभावात्, अविद्यावृतस्य जडकल्पत्वेन स्वतोऽहमिति

प्रत्ययायोगात्, सूक्ष्मदेहगतप्रफुल्लान्तःकरणयोगेनाविद्यामलतिरस्कारे सत्ये-
कदैव स्थूलसूक्ष्मकारणदेहचितामहमिति भानदर्शनाद् अहमित्याद्यभ्रमे-
ऽस्मत्प्रत्ययविषयत्वं नैव खलु वर्तत इत्यर्थः। तथाच क्वचिदेव विषयत्वं
हेतुरन्वयव्यतिरेकाभ्यां भवति, न सर्वत्रेति तृणारणिमणिन्यायेन हेतोर्विषय-
5 त्वस्य न सर्वत्रापेक्षा। इति भावः ॥२३६॥

[131a]　भानमभिवाञ्छितमिदन्तु निजरूपं
नैव जडयोर्भवति विभ्रमकथेति।
तेन चिदपि द्वयविशेषविषयाहं-
भ्रान्तिरुदिता भवति भास्वरतरैव ॥२३७॥

10 ननु ज्ञानविषयत्वाभावेऽपि क्वचिद् यदि भ्रमः, तर्हि द्वयोर्जडयोर्विना
ज्ञानयोगं भ्रमः स्यादित्याशङ्क्य परिहरति—भानमिति॥ जडयोर्द्वयोर्विना
ज्ञानयोगं विभ्रमकथा न भवतीति हेतोर्भ्रमस्थले भानमपेक्षितम्। तच्च भान-
मान्तरभ्रमस्थलेऽहमित्यत्रात्मनः स्वप्रकाशरूपत्वाद् निजरूपमेव भवति, तत्र
नान्यकृतं भानमपेक्षितम्। आत्मातिरिक्तशुक्तिरजतादिस्थले तु द्वयोरपि
15 जडत्वात् प्रभासमानविभ्रमसद्भावे मानाभावाद् विभ्रमस्यापि भानरूपत्वेन
जडयोः स्वतो भानाभावेन विभ्रमवार्ताया अलीकत्वापत्तेस्तृतीयं चेतन-
मादायैव विभ्रमनिरूपणं विधेयमिति भानमन्यायत्तमपेक्षितम्। आत्मस्थले
तु भानस्य स्वाभाविकत्वादन्यायत्तं नापेक्षितम्। एवं चात्मस्थले निज-
स्वरूपभानसत्त्वेन चित आत्मनोऽचितश्चाविद्यासूक्ष्मस्थूलदेहलक्षणस्य च
20 द्वयस्य विशेषं स्वरूपं विषयीकुर्वाणाऽहंभ्रान्तिः भास्वरतरैव प्रकाशमानैव।
उदिता भवति। तथाच तत्रान्यकृतभानापेक्षा नैव भवतीति भावः। एवं च
अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरिति भाष्यमनया कारिकया व्याख्यातं भवति।
तथाहि—आत्मा तावत् स्वप्रकाशः स्वसक्तं सर्वमपि रविवत् प्रकाशयेदेव,
परन्तु संपूर्णराहुग्रस्तरविवदविद्यावृतज्ञानसुखादिस्वरूपत्वाद् जडकल्प
25 एवात्मा भवति। तथाऽपि सूक्ष्मतनुसंबन्धस्यानादित्वात् तत्र चाविद्या-
तिरस्कारकान्तरपदार्थानां सत्त्वात् तेषामविद्यातिरस्कारकाणां स्थूलदेहे

परिपके लब्धस्थितिकत्वेन प्रफुल्लरूपतयाऽविद्यातिरस्करणे सामान्यतो जाते सामान्यतस्तिरस्कृताविद्याचित्संबन्धात् प्रकाशमानं शरीरत्रयमतिप्रकाशाभावात् चिदचितोरविद्यमानमैक्यं नीरक्षीरवदत्यासङ्गादवगाहमानचित्तवृत्तिरूपा भ्रान्तिश्चैतन्यभास्या भवतीति भ्रमाकारान्तःकरणवृत्तेः प्रागधिकरणभानाभावेऽपि न कापि क्षतिः; ऐक्यावगाहिभ्रममात्रस्यैवापेक्षणात्, अनुभवस्य तथैवोदयात्। इति भावः ॥२३७॥

[132a] वित्तिविषये प्रथमतः सहजरूपात्
भ्रान्तिरपरस्य भवतीति नियमो न।
विभ्रमसमाकलितरूपमवलम्ब्यै-
वाश्रयमतिर्भवति दूरतरगोले ॥२३८॥

अत्र न तावदित्यादिना प्रसिद्धेरित्यन्तेन युष्मत्प्रत्ययापेतस्येत्यादिपूर्वपक्षभाष्यं प्रयतख्यातमिति "अस्मदि"[1]त्यादिश्लोकाभ्यां विवृतम्। संप्रति न चायमस्तीत्यादिना सर्वो हीत्यादिपूर्वपक्षभाष्यं प्रत्याख्यायत इति दर्शयति—वित्तीति ॥ पुरोऽवस्थिते विषये विषयान्तरमध्यसितव्यमिति नियमो नास्ति; अहमित्यान्तराध्यासे पुरोवस्थितांशाभावात्, आत्मनः प्रत्यक्त्वाद् भानमेवापेक्षितमिति "भानमभिवाञ्छितमि"[2]ति श्लोकेन अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरिति भाष्येण च निरूपणात्। प्रथमतो विषये सहजस्वरूपात् सहजरूपमवलम्ब्य ज्ञानविषये पश्चात् तस्मिन् ज्ञातेऽर्थेऽपरस्यार्थस्य भ्रान्तिर्भवतीति नियमो न भवति। तत्र हेतुमाह—विभ्रमेति ॥ दूरतरगोले अतिदूरवर्तिपर्वते। प्रथमतः पर्वतगतरूपेण नीलश्वेतरक्तनिम्नोन्नतत्वादिना रूपेण पर्वते गृहीते पश्चात् तलत्वमलिनत्वमसृणत्वाद्यारोपो नैव जायते, किन्तु विभ्रमसमाकलितरूपम् तलत्वश्यामत्वादिकमारोप्यमाणमवलम्ब्यैव। आश्रयमतिः आरोप्यमाणार्थाश्रयमतिः। भवति। इदं च "दूरतरपर्वतमि"[3]ति श्लोके विशदं निरूपितम्। एवं चादावधिष्ठाने ज्ञाते पश्चादारोप इति कथा वृथा भवति। आरोप्यमाणार्थस्वरूपग्रहकाल एवाधिष्ठानस्यापि ग्रहः, न ततः पूर्वमपि। अत एव अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्तीति भाष्यं सङ्गतं भवति ॥२३८॥

[132b] रूपरहिते न गगने न किल वायौ
नीलमलिनत्वमधिरोपयति कश्चित् ।
रूपवति यन्महति दूरतरशैले
श्याममसृणत्वमधिगच्छति जनौघः ॥२३९॥

5 **अथेदं भाष्यमनुपपन्नार्थकमिति शङ्कते**—रूपेति ॥ रूपरहिते गगने कश्चि**दपि जनो** नीलमलिनत्वं नाधिरोपयति । वायौ **नीरूपे** नाधिरोपयति किल । यत् **यस्मात् कारणात्** । रूपवति महति दूरतरशैले **जनसमुदायः** श्याममसृणत्वं **जानाति** । **इत्यर्थः । तथाच रूपवत्येवारोपदर्शनाद् नीरूपे गगने नीलत्वाद्यारोप-कथनमसङ्गतम् । इति भावः** ।।२३९।।

10 [133a] ऋक्षवलयादुपरि वर्तुलपदार्थे
सावयवके महति भाति मलिनत्वम् ।
सर्वजनसंमतमिदं न गगनं स्याद्
वर्तुलदृढावयवयोगरहितत्वात् ॥२४०॥

**अथ** अप्रत्यक्षेऽपि ह्याकाश **इति भ्रमस्य सर्वलोकसिद्धस्य गगनेऽनुपपद्य-**
15 **मानस्य विषयं विवेचयति**—ऋक्षेति ॥ ऋक्षवलयादुपरि **नक्षत्रवलयादुपरि प्रदेशे** । वर्तुलपदार्थे महति सावयवके । **पदार्थे वस्तुनि** । सर्वजनसंमतं **यथा भवति तथा** । भाति मलिनत्वम् **मसृणत्वम् ; नक्षत्रमण्डलादर्वाक् तदप्रतीतेः** । इदम् **नक्षत्रोर्ध्वं नीलत्वेन प्रतीयमानम्** । गगनं **भवितुं** नार्हति ; **गगने वर्तुला ये दृढावयवाः कठिनावयवाः, तत्सम्बन्धाभावात्, पृथिव्यादावेव**
20 **कठिनवर्तुलत्वादियोगदर्शनात् । तथाच नक्षत्रमण्डलादूर्ध्वं वर्तुलनील-मसृणतया प्रतीयमानं गगनं न भवेत् । इति भावः** ।।२४०।।

[133b] अण्डवलयं श्रुतिषु च स्मृतिषु चोक्तं
तत्र किल दूरतरवर्तिनि पदार्थे ।

नीलमणिनिर्मितकटाहकसमानं
श्यामलतलत्वमसृणत्वमतिरास्ताम् ॥२४१॥

**अथ नक्षत्रमण्डलादूर्ध्वं गगनं न भवति चेत्, किं तद् नीलत्वादिना प्रतीयत इति प्रश्ने तत्स्वरूपं सप्रमाणं दर्शयति**—अण्डेति ॥ अण्डवलयं
5 श्रुतिषु **छान्दोग्यादिश्रुतिषु** "असदेवेदमग्र आसीत्, तत् सदासीत्, तत् समभवत्, तदण्डं निरवर्तत, तत् संवत्सरस्य मात्रामशयत, तद् निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम्, तद् यद् रजतं सेयं पृथिवी यत् सुवर्णं सा द्यौरि"[1]**ति**। "तद्यथा मक्षिकायाः पत्रम्",[2] । "तावानेषोऽन्तराकाश"[3] **इत्यादिषु**। स्मृतिषु च—

"नारायणः परोऽव्यक्तादण्डमव्यक्तसंभवम् ।
10 अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥"[4]
"अप एव ससर्जादौ तासु वीर्यमवासृजत् ।
तदण्डमभवद् हैमं सर्वमन्तस्तमोवृतम् ॥[5]

**इत्यादिषु चोक्तं भवति**। तत्र **अण्डकपाले**। दूरतरवर्तिनि पदार्थे नीलमणिनिर्मितकटाहकसमानं **दूरस्थपर्वत इव नीलत्वादिमतिर्भ्रमलक्षणा भवतु, नतु**
15 **गगने**। **इति भावः** ॥२४१॥

[134a] बालपदमत्र गगनेऽखिलजनानां
कं पुनरथार्थमवलम्ब्य तु समाने ।
तत् कथमिदं भवति भाष्यमिह भाष्यं
सन्नयसमर्पितसमर्थपरमार्थम् ॥२४२॥

20 बालेति॥ **अथ** अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ती**ति बालग्रहणमनर्थकम्; आबालाङ्गनमा च पण्डितं नक्षत्रमण्डलोर्ध्वं नीलतलं मसृणं वर्तुलं चेति प्रतीतेः**। गगने **गगनपदबोधितेऽर्थे**। अखिलजनानाम् **पण्डितपामरजनानाम्**। समाने **बुद्धिविषये**। अत्र **वाक्ये**। बालपदं कं पुनरर्थमुपादाय **प्रवर्तितं भवति**। **तथाच व्यावर्त्याभावाद् बालपदमनर्थकमिति**
25 **भावः**। **एवं च** अप्रत्यक्षेऽपीत्या**दि** भाष्यम्। तत् **तस्मात् पूर्वोक्ताद्**

विसंष्ठुलत्वाद् हेतोः। सन्नयसमर्पितसमर्थपरमार्थम् सन्तो ये नयाः, तैः समर्पितः साधितः समीचीनोऽर्थः, अर्थ्यत इत्यर्थः प्रयोजनम्, यस्येदृशः परमार्थः अबाधितो मानैरर्थो यस्येदृशम्। कथं भाष्यं वक्तव्यं भवति। तथाचाप्रत्यक्षेऽपी-त्यादिभाष्यं योजयितुमशक्यम्। इति भावः ॥२४२॥

5 [134b] अण्डवलयं स्फुटतरं गगनकक्षा-
मम्बुजपतिप्रभृतयो जगदुरार्याः।
तद्गगनमेव यतिराडपि निरक्षं
नीलतलबुद्धिविषयं वदति हृद्यम् ॥२४३॥

अथ निरुक्तदोषमुद्दिधीर्षुरप्रत्यक्षेऽपीतिभाष्यभावं प्रकाशयति— अण्डेति ॥
10 अम्बुजपतिप्रभृतयः सवितृसोमवसिष्ठादयः। आर्याः ज्योतिःशास्त्रा-चार्याः। अण्डवलयम् ब्रह्माण्डवलयम्। गगनकक्षाम् आकाशमर्यादा-भूमिमाहुः——

"खव्योमखत्रयखसागरषट्कनागव्योमाष्टशून्ययमरूपनगाष्टचन्द्राः।
ब्रह्माण्डसम्पुटपरिभ्रमणं समन्तादभ्यन्तराद् दिनकरस्य करप्रसारः॥"[1]
15 "आकाशकक्षा सा ज्ञेया करव्याप्तिस्तथा रवेः॥"[2]

इति। एवं च यतिराट् शङ्कराचार्योऽपि। तद् गगनमेव गौणं गगन-मेवाकाशकक्षालक्षणमेव। निरक्षम् सुवर्णरजतरूपेणाक्षातीतम्, चक्षुरग्राह्यम्— अध्यासात् पूर्वं निजरूपेण चक्षुरवेद्यम्। नीलतलबुद्धिविषयं हृद्यम् मनोज्ञं यथा भवति तथा वदति। तथाच दूरस्थे पर्वत इव दूरवर्तिन्यण्डवलय
20 आकाशकक्षासंज्ञके तलत्वमलिनत्वलक्षणारोप्यधर्मग्रहपूर्वक एव धर्मिग्रह इत्यारोपात् पूर्वमधिष्ठानस्य ज्ञानविषयत्वं नियमेन नापेक्षितम्; तथैव सर्वानुभवदर्शनात्। इति भावः ॥२४३॥

[135a] साधु निजरूपपरिसंवलनपूर्वं
दृष्टिविषयो यदि सरूपमपि वस्तु।

तर्हि तु गृहीतमिह तद्यतिवरेणा-
ध्यक्षमितरत्तु विपरीतमुपनीतम् ॥२४४॥

अथाण्डकपाल आकाशकक्षासंज्ञके रूपवति दृढावयवयुक्ते महापरिमाण-
वत्यप्रत्यक्षत्वकथनं कथं भाष्यगतं गौणमिति योजयति—साध्विति ॥ सरूपमपि
5 वस्तु यदि निजरूपरिसंवलनपूर्वम् निजरूपसम्बन्धग्रहपूर्वकं साधु यथा भवति
तथा दृष्टिविषयो भवति, तर्हि तद् वस्तु यतिवरेण आचार्येणाध्यक्षं गृहीतं भवति।
इतरत्तु रूपवदपि निजरूपेण सह यदि न गृहीतं चक्षुषा, तत्तावद् विपरीतम्
अप्रत्यक्षम् स्वसङ्केतेनोपनीतम् गृहीतं भवति। तथाचाकाशसंज्ञकाण्डकपाल-
स्येहाप्रत्यक्षत्वकथनं स्वसङ्केतसिद्धमाचार्याणाम्। इति भावः ॥२४४॥

10 [135b] पित्तपरिवीतनयनस्य ननु कम्बौ
भ्रान्तिरथ पीततममेतदिति बुद्धिः।
कम्बु धवलं भवति पीतमिव दोषा-
दित्यथ विभेदकलनेन तु विकल्पः ॥२४५॥

ननु सर्वजनानामपि गगने तलमलिनत्वभ्रमस्य सत्त्वाद् बाला इति
15 पदमसङ्गतम्; सर्वे जनास्तलमलिनताद्यध्यस्यन्तीत्येवोचितत्वादित्युक्तं दोष-
मुद्दिधीर्षुर्गृह्यमाणादिस्थलीयज्ञानं विभजते—पित्तेति ॥ पित्तद्रव्येण परि-
वीतनयनस्य पुरुषस्य कम्बौ शङ्खे एतत् पीततममिति बुद्धिर्द्वेधा भवति—पीत-
द्रव्यशङ्खयोर्भेदाग्रहपूर्वकः, भेदग्रहपूर्वकश्चेति। यस्य पुरुषस्य भेदाग्रहपूर्वकं
शङ्खे पीतमिदमिति ज्ञानम्, तत् तस्य पुरुषस्य भ्रमः। यस्य पुरुषस्य
20 शङ्खे श्वेत एव चक्षुर्गतपित्तदोषात् पीतमिदमिति भासत इति भेदग्रह-
पूर्वकमेव पीतमिदमिति ज्ञानम्, तस्य पुरुषस्य तद् ज्ञानं विकल्पात्मकं
भवति। भेदाग्रहपूर्विका पीततममेतदिति बुद्धिर्भ्रान्तिः। कम्बु धवलं स्वतः
दोषात् पीतमिव भवतीति विभेदकलने सति स विकल्पो भवति। इति
श्लोकार्थः ॥२४५॥

[136a] अण्डवलयं हि कलधौतमयमेत-
न्नीलमिव भाति नयनांशुपरिणामात् ।
ईदृशविभेदमतिशून्यजनदृष्टा
भ्रान्तिरिति वक्तुमिह बालपदमुक्तम् ॥२४६॥

5 अथ शङ्खे पीतमिदमिति द्विविधं ज्ञानमुपादाय बालपदप्रयोजनं दर्शयति—अण्डेति ॥ शङ्खे पीतमिदमिति ज्ञानवत् कलधौतमयम् रूप्यसुवर्णमयं श्वेत-पीतरूपयुतं ब्रह्माण्डवलयं नयनांशोर्ग्रन्थादावुक्तरीत्या नीलरूपपरिणामाद् नीलमिव भाति । वस्तुतः श्वेतपीतरूपवदिति भेदग्रहे सति नीलं गगनमिति ज्ञानं विकल्पात्मकम्, भेदग्रहाभावे नीलं गगनमिति ज्ञानं तु भ्रम एव ।
10 एवं चेदृशविभेदमतिशून्यजना ये भवन्ति, ते विवेकबुद्धिरहितत्वाद् बाला भवेयुः । तथाच बालानां भेदग्रहरहितानामेव नीलं नभ इति ज्ञानं भ्रमः, भेदग्रहवतां विवेकिनां नीलं नभ इति ज्ञानं विकल्प इति विकल्पभिन्नं ज्ञानं भ्रान्तिरिति परिग्रहीतुं बालपदमिह अप्रत्यक्षेऽपीति भाष्ये कथितम् । इति भावः ॥२४६॥

15 [136b] पूर्वमपि केचिदिति भेदमतिशून्या-
भेदमतिरेव गदिता भ्रम इतीह ।
स्पष्टमविवेकवचसा च मतभेदः
स्वोदितपरिष्करणसिद्धिमुपलब्धुम् ॥२४७॥

अथ विवेकाग्रहपूर्वकविपरीतज्ञानं भ्रमः, विवेकग्रहपूर्वकविपरीतज्ञानं तु
20 विकल्प इति न बालभाष्य एव विवक्षितम्, पूर्वमपि पदे पदे विवक्षितमिति सूचयितुमध्यासभाष्यलक्षणस्थप्रकारविभेदं दर्शयति—पूर्वमपीति ॥ पूर्वमपि कथं पुनरित्यादिभाष्यात् पूर्वमपि । केचिदिति भाष्याभ्याम् तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति । केचित्तु यत्र यदध्यासः, तद्विवेकाग्रहनिबन्धनो भ्रम इति लक्षणा-भ्याम् । अविवेकवचसा च इतरेतराविवेकेनेति वचसा च । स्पष्टम् असन्दिग्धं

यथा भवति तथा। इह अस्मिन् प्रकरणे। भेदमतिशून्याभेदमतिरेव भेदाग्रह-
विशिष्टा द्वयोरभेदधीरेव भ्रम इति कथिता भवति। तथाच पूर्वग्रन्थ इतरे-
तराविवेकदशाभवं द्वयोरभेदज्ञानं भ्रम इति कथनव्याजेनेतरेतरविवेक-
दशाभवं ज्ञानं विकल्परूपं ज्ञानमिति सूचितं भवति। ननु भेदाग्रह-
5 विशिष्टाभेदमतिर्भ्रम इति केचिदित्यादिग्रन्थतो लभ्यत इत्युक्तम्, तदयुक्तम्;
तं केचिदिति वाक्ये शुक्तौ रजतत्वाध्यासो भ्रम इति तावदन्यथाख्यातिवादः
परिगृहीतः, त[137a]त्र भेदाग्रहांशोऽभेदमत्यंशश्च नोपात्त एव। केचित्त्विति-
वाक्ये ग्रहणस्मरणात्मकं ज्ञानद्वयं भेदाग्रहविशिष्टं भ्रम इत्यख्यातिवादः
सङ्गृहीतः, तत्राप्यभेदमत्यंशो न गृहीत एव। एवं "व्यापी"[1]त्यादिश्लोकाभ्यां
10 विव्रियमाणे अन्ये त्वितिवाक्येऽपि दोषमाहात्म्यात् स्वभावतः शुक्तिपदार्थेऽभि-
व्यक्तशुक्तित्वानभिव्यक्तिः सर्वपदार्थेष्वपि स्वभावानभिव्यक्तस्य रजतत्व-
स्याभिव्यक्तिर्भ्रम इति यः सत्ख्यातिवादः, तत्र न भेदाग्रहांशः, नवा पुनरभेद-
बुद्धिश्च। स्मृतिरूप इति स्वमतेऽपि इतरेतराविवेकेनेति निर्देशेन भेदाग्रहांशा-
परिग्रहेऽप्यभेदमत्यंशः स्पष्टं न गृहीत एव। तथाच कथमिव विवेकाग्रह-
15 विशिष्टाभेदग्रहो भ्रम इतीह कथ्यत इति। अत आह—मतभेद इति॥ योऽयं
मतभेदस्त्रिविध उपात्तः, स तावत् स्वोदितस्य लक्षणस्य सपरिष्करस्य
परिष्करणसिद्धिम् निष्कर्षसिद्धिमवाप्तुमेव भवति। अयमाशयः—स्मृतिरूप
इति स्वमतरीत्यैवाध्यासे सिद्धभावे सति दूषणविनिर्मुक्तपरमतोपन्यास-
स्तावत् मतान्तरैकवाक्यतासिद्धये भवितुमर्हति। अत एव सर्वथाऽपि त्वन्य-
20 स्यान्यधर्मावभासतां न व्यभिचरतीत्येकवाक्यताप्रदर्शनं सङ्गतं भवति; परत्र
पूर्वदृष्टावभास इत्यस्य परशुक्तिविषयावच्छेदेन पूर्वं दृष्टस्य चैतन्यभासितस्य
पश्चात् सूक्ष्मीभावेन भावनारूपस्यावभासः स्थूलीभावेन प्रकाशनं चैतन्या-
यत्तमित्यर्थात्। मनःपरिणामलक्षणस्य रजतस्य शुक्त्यवच्छिन्नस्य चूर्ण-
लेपस्य भित्त्या सहेव शुक्त्यभिन्नत्वेनैव भानस्य सर्वानुभवसिद्धत्वाद् धर्मिणो-
25 रभेदप्रत्यय आरोप्यमाणगत[137b]धर्मस्याधिष्ठानगतत्वप्रत्ययादन्यस्यान्य-
धर्मावभासता वर्तत एव। तं केचिदिति द्वितीयेऽन्यथाख्यातिमते तु अन्यस्य
शुक्तिशकलस्यान्यरजतधर्मरजतत्वभानं स्पष्टमेव। अन्ये त्विति चतुर्थमतेऽपि
तस्यैव विपरीतधर्मवत्त्वं शुक्तित्वविपरीतरजतत्वाभिव्यक्तिमत्त्वेऽन्यस्य वस्तुतः
शुक्तिशकलस्य शुक्तित्वतिरस्कारेणान्यधर्मरजतत्वावभासताऽस्त्येव। केचि-

त्विति तृतीयमते विवेकाग्रहविशिष्टं ग्रहणस्मरणात्मकं ज्ञानद्वयमिति कथनात्
शुक्ताविदमिति ज्ञानात् रजतमिति रजतांशे स्मरणात् शुक्तिविशेष्यकरजतत्व-
प्रकारकज्ञानाभावेनान्यस्यान्यधर्मावभासता यद्यपि न प्रतीयते ; तथाप्युत्तर-
त्रेदं रजतमिति ग्रहणस्मरणात्मकज्ञानद्वयेन व्यवहाराद् विवेकाग्रहणविशिष्टं
5 ग्रहणसहितं स्मरणमेवान्यस्य शुक्तिशकलस्य अन्यधर्मं रजतत्वमवभासयति
इदं रजतमिति व्यवहारनिवर्तनद्वारेत्येवंरूपेणान्यधर्मावसताऽस्त्येवेति न
काऽप्यनुपपत्तिः। तथाच मतान्तराणामिहोपन्यासः साधनतः फलतश्च
साम्यसम्पत्तये ; स्वरूपतोऽपि साम्ये मतभेदानुपपत्तेः। एवं च भेदाग्रहः
परमत इव स्वमतेऽपि भ्रमत्वनियामक इति भेदग्रहस्थलीयसंनिध्यादि-
10 दोषायत्तासेदग्रहव्यावर्तनाय प्रकृतभाष्ये बालपदमुचितम्। इति भावः ॥२४७॥

[138a] व्यापितनवो जगति जातिगुणधर्मा
व्यञ्जकतयैषु ननु कस्यचन कश्चित्।
आश्रयतया प्रकृतितो भवति चार्थ-
स्सृष्टिरियमीशनियतेर्विविधभेदा ॥२४८॥

15 अथान्येत्विति मतरीत्याऽपि स्वमते भेदाग्रहादिवैशिष्ट्यं ज्ञापयितुं तन्मतभावं
श्लोकाभ्यां दर्शयति—व्यापीति ॥ जातिगुणधर्माः जातयो घटत्वपटत्वादि-
लक्षणाः, गुणा नीलपीतमधुरत्वादयः, धर्मा अखण्डलक्षणाः, करणत्वेन्द्रियत्वा-
दयः, एते सर्वे। जगति व्यापितनवः व्यापिन्यस्तनुवो येषां ते व्यापितनवः।
व्यापका इति यावत्। देशभेदेन विद्यमानेषु घटपटादिषु युगपद् घटत्व-
20 पटत्वादीनां गगनवत् सम्बन्धस्य जगद्व्यापितामन्तराऽनुपपत्तेः। एवं च
जात्यादिषु घटत्वादिषु जगद्व्यापकेषु घटत्वस्य पटे पटत्वस्य घटे सम्बन्धा-
विशेषाद् व्यवहारसाङ्कर्यं स्यादित्याशङ्क्याह—व्यञ्जकतयेति ॥ एषु जात्यादिषु।
कस्यचित् जात्यादेः। कश्चनार्थस्तद्धर्माश्रयत्वेन प्रकृतितः स्वभावतः व्यञ्जकतया
भवति। एवं च न घटः पटत्वस्य व्यञ्जकः, न वा पटो घटत्वस्येति विवेकः।
25 सर्वस्य सर्वव्यञ्जकत्वाभावे हेतुमाह—सृष्टिरिति ॥ इयम् प्रपञ्चलक्षणा सृष्टि-

रीशनियतेः ईशसुबन्धिनियतशक्तेर्नानाविधभेदा भवति । तेन न कापि विरोधः । इति भावः ॥२४८॥

[138b] व्यञ्जयति वस्तुविपरीतमपि धर्मं
भेदमतिहीनविपरीतमतिदोषः ।
5 अन्यमतमेवमुदितं ननु चतुर्थं
स्वीयमतसंमतिकृते द्वयवदन्यत् ॥२४९॥

व्यञ्जयतीति ॥ यत्र यदध्यासः शुक्तौ रजताध्यासो लोकसिद्धः, तस्यैव शुक्तिखण्डस्यैव विपरीतधर्मत्वकल्पनामाचक्षते शुक्तित्वविपरीतरजतत्वधर्मस्य कल्पनाम्, अभिव्यक्तिं वदन्तीत्यर्थः । एतमेवार्थं श्लोकार्धेनाह । वस्तुविपरीतमपि
10 धर्मम् वस्तु शुक्तिः, तदुचितो धर्मः शुक्तित्वम्, तद्विपरीतो धर्मः शुक्तौ विद्यमानोऽप्यनभिव्यक्तत्वात् तत्र तद्विपरीतो धर्मो भवति रजतत्वम्, तत् । भेदमतिहीनविपरीतमतिदोषः भेदाग्रहविशिष्टविपर्ययबुद्धिसम्बन्धिदोष एव शुक्तित्वतिरस्कारपूर्वकं व्यञ्जयति । स्वीयमतिसंमतिकृते स्वमतसंमतिसम्पत्त्यर्थम् । केचित्त्वितिमतद्वयवदन्यत् चतुर्थम् अन्येत्विति कथितं मतमुद्भूत् ।
15 इत्यर्थः ॥२४९॥

प्रावृतिचितौ तनुतनुस्तनुरसूक्ष्मे-
त्येतदखिलं सततमप्ययुतसिद्धम् ।
तेन सकलैक्यविषया भवति वृत्तिः
फुल्लमनसाऽऽवृतिविहीनचितिभास्या ॥२५०॥

20 एवमविरुद्धः प्रत्यगात्मन्यनात्माध्यास इति निगमनभाष्यमाश्रित्यान्तराध्यासं सङ्गृह्य दर्शयति—प्रवृतिचिताविति ॥ अविद्याचितौ तनुतनुः सूक्ष्मदेहः । असूक्ष्मा तनुः स्थूलशरीरम् । इदं सर्वमप्ययुतसिद्धं सततमपि भवति । तेन नीरक्षीरयोरिव स्फटिकजपाकुसुमयोरिव च सम्बन्धात् सकलानां चितो देहानां चैक्यविषया फुल्लमनसा स्थूलभावापन्नमनसा कृत्वा । आवृतिविहीनया चित्या

तिरस्कृताविद्यावरणया चिता भास्या सत्येव चित्तस्य वृत्तिर्भवति। एवं चाहमित्यान्तरभ्रम उपपन्नः। इति भावः ॥१५०॥

[139b] सन्ति बहुधा ननु विपर्ययविभेदा
दूरतरसंनिहितसक्तविषयादेः।
5 संस्करणसञ्जनितविभ्रमविभेदे
विद्विषयता ननु भवेदपि निदानम् ॥२५१॥

अथ प्रसिद्धे स्मर्यमाणारोपे या सामग्री पुरोवर्तित्वज्ञानविषयत्वादिलक्षणा, सा तावदहमित्यान्तरभ्रमे नेति कथं स भ्रमः स्यादिति न शङ्कनीयम्; भ्रमस्यानेकविधत्वात्, तत्तद्भ्रमे सामग्र्यास्तृणारणिमणिन्यायेन भिन्नभिन्न-
10 त्वादित्याह—सन्तीति ॥ विपर्ययविभेदाः भ्रमविशेषा बहुप्रकारेण सन्ति। भेदेन सत्त्वे निमित्तमाह—दूरतरेति ॥ दूरतरो विषयश्चन्द्ररविनक्षत्रब्रह्माण्डकपाल-पर्वतशुक्त्यादिः। संनिहितो विषयो जपासंनिहितस्फटिकादिः। सक्तविषयो नीरसंमिश्रक्षीरादिः। आदिपदग्राह्यो विषयश्चलन्नौकास्थपुरुषादेस्तीरस्थवृक्षादिः, भूमिष्ठपुरुषादेश्चलदभ्रवर्तिचन्द्रादिः। एवमन्योऽपि यथायथं विषयो ग्राह्यः।
15 एतादृशविषयभेदाद् भ्रमा भवन्ति। एवं च तत्तद्भ्रमेषु साधनानां विभिन्न-जातीयत्वात् स्मर्यमाणारोपभ्रमे साधनीभूतस्य भ्रमान्तर[139a]स्थले सद्भावेऽपि न क्षतिः। नहि स्मर्यमाणारोप एव भ्रमः, न गृह्यमाणारोप इति वक्तुं शक्यम्; भ्रमत्वेन व्यवहारस्योभयत्रापि सर्वजनसंमतत्वात्, तस्मिंस्तस्मिन् भ्रमे साधनभेदेनोपपत्तिसम्भवात्। एवं च संस्करणसञ्जनित-
20 विभ्रमविभेदे संस्कारप्रभवे शुक्तिरजतादिभ्रमे। विद्विषयता ज्ञानविषयत्वम्। निदानम् कारणम्। भवेदपि इदमिति सदृशशुक्तिज्ञाने "सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका"[1] इति संस्कारोद्बोधादिदं रजतमितिज्ञानोदयादित्यर्थः। अत्रापि सङ्ग्रहेण ज्ञानविषयत्वं कारणं युक्तितो भवितुं नार्हतीति सूच्यते। तथाहि—प्रथमतः शुक्तेरिदमिति ज्ञानानन्तरं सादृश्यज्ञानात् संस्कारोद्बोधेन
25 पश्चादिदं रजतमिति ज्ञानं कस्यापि नैवानुभवगोचरः, परन्तु चक्षुर्विषय-संप्रयोगसमनन्तरमेवेदं रजतमिति ज्ञानमुत्पद्यमानमनुभूयते। तत्र शुक्तिवद्

रजतस्यापि पुरोवर्तित्वाविशेषाद् रजतगतमेवेदन्त्वमिदम्पदेन निर्दिश्यतेऽनुभूयते च, न शुक्तिगतम्; मानाभावात्। अस्तुवा शुक्तिगतेदन्त्वमेवेदं रजतमिति प्रतीतम्, परन्तु पुरोवर्तीदमो ज्ञानं रजतज्ञाने कारणमित्यत्र प्रमाणमेव नोपलभ्यते; इदमो वाग्द्वयं ज्ञानानुदयात्। शुक्तिरजतेऽपि "नवचोऽधिकरणार्थमि"[1]ति श्लोकेऽपि न शुक्तिगतमिदन्त्वं भासते, किन्तु रजतगतमेवेति प्रागेव निरूपितम्, तत एव तदनुसन्धेयम्। इति दिक् ॥२५१॥

[140a] संनिहितसक्तविषयभ्रमविभेदे
सा खलु न कारणविधां समुपयाति।
तत्क्षणत एव किल चित्तपरिणामोऽ-
भेदविषयो भवति नैव हि विलम्बः ॥२५२॥

अथ विषयतायाः स्मर्यमाणारोपसाधनत्वेऽपि गृह्यमाणारोपादौ न साधनत्वमित्याह—संनिहितेति॥ जपाकुसुमस्फटिकस्थले संनिहितविषये नीरक्षीरस्थले सक्तविषये च लोहितः स्फटिक इति क्षीरमिदं शुद्धमिति च बुद्धौ सा ज्ञानविषयता कारणविधाम् कारणप्रकारम् न समुपयाति; प्रथमतः स्फटिकं ज्ञात्वा पश्चाद् लोहितः स्फटिक इति, आदौ सामान्यतो नीरं ज्ञात्वा पश्चादिदं क्षीरमिति बुद्धेरसम्पादनात्। तत्क्षणत एव स्फटिकज्ञानकाल एव। चित्तपरिणामः लौहित्यरूपः स्फटिकाभेदावगाही समुपलभ्यते। इदमितिनीरज्ञानमेव क्षीरमवगाहमानं दृश्यते, न खलु तत्र क्षणविलम्बो दृश्यते, येन विषयता भ्रमे हेतुरिति कल्प्येत। तस्माद् नेदृशे भ्रमे विषयता हेतुः। इति भावः ॥२५२॥

[140b] बाह्यकरणाकलितचित्तपरिणामौ
सद्विषयशून्यविषयौ चिदवभास्यौ।
ऐशविषयोऽणुविषयस्य सकलांशेऽ-
प्याविशति चेत् प्रमितिरत्र न परत्र ॥२५३॥

अथ प्रत्यक्षस्थले प्रमाप्रमाविभागं दर्शयति—बाह्येति ॥ बाह्यकरणाकलित-चित्तपरिणामौ चक्षुरादिबाह्येन्द्रियवृत्तिसंवलितौ चित्तस्य अन्तःकरणस्य द्वौ परिणामौ। सद्विषयशून्यविषयौ विषयसमेतो विषयरहितश्चेति द्विविधावपि। चिदवभास्यौ तिरस्कृतावरणचित्प्रकाश्यौ भवतः। तत्र सद्विषयः परिणामः 5 प्रमा, तद्भिन्नस्त्वप्रमेति विभागः। तमेव विशेषतो दर्शयति—ऐशेति ॥ ऐशो विषय ईशसृष्टः प्रपञ्चः। अणुविषयस्य जीवसृष्टप्रपञ्चस्य सर्वांशेऽप्यात्मप्रदत्वेनाविशति चेत्, तर्हि तत्रावेशस्थले ज्ञानं जायमानं प्रमैव, सर्वांशेऽप्यनावेशस्थले परत्र जायमानं ज्ञानं न प्रमा। इति योजना ॥२५३॥

[141a] लोहितमणीन्दुचलनादिमतिभेदोऽ-
10 भावन इति प्रथित एव जगतीषु।
स्वप्नमयवेदनमनेकविधमन्त-
श्चित्रतरभावनमपेतविषयं च ॥२५४॥

अथ स्मृतिरूपः परत्र पूर्वदृष्टावभास इति लक्षणं सर्वभ्रमसाधारणमेवास्तु, न स्मर्यमाणारोपमात्रलक्षणमिति शङ्कां परिहरति—लोहितेति ॥ लोहित-15 मणिमतिभेदो लोहितः स्फटिक इति बुद्धिभेदः। इन्दुचलनमतिभेदो मेघे चलति चन्द्रश्चलतीति बुद्धिभेदः, तीरवृक्षाश्चलन्तीत्यादिबुद्धिभेदश्च। अभावनः भावना वासना संस्कारः, स हेतुत्वेन न विद्यते यस्य, सोऽभावनः। इति जगतीषु प्रसिद्ध एव ; लौहित्यचलनादिपरिणामस्यान्तःकरणबाह्यकरणगतस्य सद्योजातस्य पुरःस्फूर्तिकस्यासङ्कुचितस्य विद्यमानस्यैव स्फटिकचन्द्रा-20 वच्छेदेन प्रतीयमानत्वसम्भवात्। तस्माद् गृह्यमाणारोपः सर्वोऽप्य-वासन एव। एवं चाहमित्यान्तरभ्रमोऽपि गृह्यमाणारोपरूप एवेति तत्र स्मर्यमाणारोपस्य सामग्र्यभावेऽपि न क्षतिः। अथ स्वप्नस्वरूपविकल्प-रूपं दर्शयति—स्वप्नमयेति ॥ स्वप्नस्वरूपं वेदनं ज्ञानम्। अनेकविधम् उच्चाव-चानेकप्रकारम्। चित्रतरा भावना वासना यस्य विचित्रवासनाभवम्। 25 अन्तः शरीरान्तरुपजायमानम्। अपेतविषयं च ईशप्रपञ्चानाश्रितं चेद्दृशं

विकल्पलक्षणं ज्ञानं भवति। एतेन स्वप्नो न भ्रमः, न प्रमा, किन्तु ज्ञानान्तरमिति तत्र भ्रमलक्षणाभावेऽपि न दोषः। इति ध्वनितम् ॥२५४॥

[141b] जाग्रति मनोरथमयं यतनपूर्वं
प्राज्यतरवासनमसद्विषयभेदम्।
5 रूपकवितर्कगरणादिमतिभेदो
यत्नजनितो भवति कल्पितविकल्पः ॥२५५॥

अथ जाग्रति संपद्यमानमनोरथरूपकादिस्वरूपं विवेचयति—जाग्रतीति॥ जाग्रत्काले प्राज्यतरवासनम् प्रभूतवासनाजन्यम्। असद्विषयभेदम् अधिष्ठानारोप्यात्मकविशिष्टैशविषयरहितम्। यतनपूर्वम् यत्नपूर्वकम्। मनोरथमयं ज्ञानम्। 10 यत्नजनितो रूपकमतिभेदो मुखं चन्द्र इति ज्ञानभेदः। वितर्को यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यादित्यादिलक्षणः। निगरणमतिभेदो "वापी काऽपि स्फुरति गगन"[1] इत्यादिर्मुखस्तननाभ्यादिलक्षणैरधिष्ठानोपेतः। कल्पितविकल्पः बलात् सम्पादितविकल्परूपो भवति ॥२५५॥

एकविषये ननु विरुद्धविविधार्था-
15 कारविषया भवति संशयमयी धीः।
सद्विषयशून्यविषयत्वघटनाभ्या-
मेकतरकोटिरपि सत्यसतिका वा ॥२५६॥

अथ संशयस्वरूपं दर्शयति—एकेति॥ एकविषये वस्तुतः प्रकाण्डे। संशयमयी धीः संशयात्मकं ज्ञानम्। विरुद्धविविधार्थाकारविषया विरुद्धा ये विविधा 20 अर्थाकाराः, तावदवगाहिनी किमयं स्थाणुः पुरुषो वा, किं लम्बमानं वस्त्रं पुरुषो वेत्यादिलक्षणा भवति। तत्राप्येका कोटिः सत्यैव भवति सर्वसम्मता, विरुद्धकोटित्वात्, एकाधिकरणे कोट्यन्तरसामानाधिकरण्यायोगात्। द्वितीया कोटिस्तु सती वाऽसती वा स्यात्। पुरोवर्तिनि प्रकाण्डे स्थाणुत्वसत्त्वात् सद्विषयत्वेन सती कोटिः। शून्यविषयत्वघटनेन लम्बमानवस्त्रत्वस्य

प्रकाण्डेऽभावात् विषयाभावाद् द्वितीया कोटिरपि पुरुषत्ववदसतीत्यवसेयम्। एवं चेदं संशयरूपं भ्रमप्रमादिभ्यो विजातीयमेवेति सूचितम्। इति दिक् ॥२५६॥

[142a] अन्यविषयाविषयिणी विषयलेपा-
5 दक्षजनिता प्रमितिरर्थपदरूढा।
आकृतिगुणादिगणमव्यभिचरन्ती
चित्स्फुरणसंवलितचित्तभववृत्तिः ॥२५७॥

अथ पूर्वं विवेचितं प्रत्यक्षप्रमालक्षणं सङ्गृह्य दर्शयति—अन्येति ॥ पुरोवर्तिविषये बाह्येन्द्रियवृत्तिलेपेन जातत्वादक्षजनिता प्रमितिः अर्थपदरूढा
10 पुरोवर्तिवस्तुसंस्पर्शवती। अन्यविषयाविषयिणी पुरोवर्तिवस्त्वतिरिक्तविषयासंस्पर्शिनी पुरोवर्तिपदार्थगता। आकृतिगुणादिगणमव्यभिचरन्ती आकृत्यन्तरादिना पुरोवर्तिवस्त्वाच्छादनपूर्वकं पुरोवर्त्याकृत्यादिगणमपरित्यजन्ती। चित्स्फुरणसंवलितचित्तभववृत्तिर्भवति चैतन्याभिव्यक्तिशबलचित्तोभयवृत्तिर्भवति। इत्यर्थः ॥२५७॥

15 [142b] भ्रान्तिरिह भिन्नविषयोल्लिखितबुद्धि-
र्बाह्यकहृषीकखचिताखचितभेदा।
चिद्विलसिताऽपि हि पुनश्चिदवभास्या
काचिदितरा किल तदैव चितिवेद्या ॥२५८॥

अथ भ्रमस्वरूपमपि प्राग् निरूपितं सङ्गृह्य दर्शयति—भ्रान्तिरिति ॥
20 पुरोवर्त्यपुरोवर्तिविषयाद् भिन्नेन पुरोवर्त्यपुरोवर्तिसाधारणेन विषयेणोल्लिखिता आस्कन्दिता बुद्धिर्बाह्येन्द्रियखचिताखचितभेदा अधिष्ठानारोप्यांशयोर्द्वयोरपि बाह्येन्द्रियसंवलिता द्वयोरप्यसंवलितत्वेनारोप्यासंवलितत्वेन च तद्भिन्ना चेति रूपद्वयवती काचिद् भ्रान्तिर्वासनापूर्वावस्थायामनुभवादिचिद्विलसिताऽपि पुनश्चिदवभास्या वासनावस्थानन्तरप्रफुल्लावस्थायां पुनरपि

चिद्भास्या भवति। इतरा भ्रान्तिः किल पूर्वं चिदवभासिता सती। तदैव चितिवेद्या भ्रान्तिकाल एव चितिगम्या भवति। एतेन शुक्ताविदं रजतमिति बुद्धिः जपासंनिहितस्फटिके लोहितः स्फटिक इति बुद्धिश्च क्रमेण परिगृहीता भवति। इति वेदितव्यम् ॥२५८॥

5 [143a] पण्डितवराः कथितविभ्रममविद्या-
माहुरजडात्मचितिबोधमपि विद्याम्।
नैव पुनराश्रयमुपाश्रयति बन्धो
भ्रान्तिविषयस्य गुणदोषयुगलेन ॥२५९॥

अथ तमेतमेवमित्यादिभाष्यम्, तत्रैवं सतीत्यादिभाष्यं च पूर्वोत्तरार्धाभ्यां
10 सङ्ग्रहेण विवृणोति—पण्डितेति ॥ कथितविभ्रमम् तथाऽप्यन्योन्यस्मिन्नित्यादिनोपपादितमध्यासम् पण्डितवरा अविद्यामाहुः। अजडात्मचितिबोधमपि जडपदार्थविलक्षणस्वरूपचैतन्यप्रतिफलनयुतवृत्तिमपि विद्यामाहुरित्यन्वयः। भाष्यं तु सुगमयोजनम्। नैवेति ॥ भ्रान्तिविषयस्य आरोपितस्य पदार्थस्य। गुणदोषयुगलेन बन्धः योगः। आश्रयम् भ्रमाधिष्ठानम्। नैवाश्रयति न स्पृशति।
15 अध्यस्तपदार्थकृतबन्धो नाधिष्ठानमवलम्बते। इति गोलार्थः। अत्रापि तत्रैवं सतीति भाष्यं सुयोजनमेव ॥२५८॥

विभ्रममिमं परिकल्प्य तमुपेतं
शास्त्रमखिलं श्रुतिशिरःप्रभृति नूनम्।
सर्वजनसंव्यवहृतिश्च विषयं स्वं
20 साधयति संसरणमुक्तिपदभेदम् ॥२६०॥

अथ तमेतमेवमित्यादेर्मोक्षपराणीत्यन्तस्य भाष्यस्य सङ्ग्रहेण भावं दर्शयति—विभ्रममिति। तमेतमध्यासं पुरस्कृत्य लौकिकाः प्रमाणादिव्यवहाराः प्रवृत्ताः, विध्यादिशास्त्राणि च प्रवृत्तानीति भाष्यान्वयः। इमम् निरुच्यमानम्। विभ्रमम् अध्यासम्। परिकल्प्य स्वीकृत्य। तमुपेतम् तत्तदधिकारिणं प्राप्तम्।

शास्त्रमखिलं श्रुतिशिरःप्रभृति **वेदान्तादिलक्षणम्** । सर्वजनसंव्यवहृतिः **सकललोकव्यवहारश्च** । संसरणमुक्तिपदभेदं स्वं विषयम् **संसारमुक्तिस्थानभेदं स्वविषयम्** । साधयति नूनम् **निश्चयः** । **इत्यन्वयः** ॥२६०॥

[143b]　शास्त्रमखिलं तदुदितापि किल चर्या
5　प्राणिनिकराकलितदेहमुखयात्रा ।
सर्वमपि विभ्रमनिदानमतिवेत्तुं
पृच्छति कथं पुनरिति स्फुटविभागम् ॥२६१॥

**अथ** कथं पुनरित्यादिभाष्यं **तद्भावोल्लेखपुरस्सरमवतारयति**—शास्त्रमखिलमिति ॥ शास्त्रमखिलम् **विधिनिषेधोपासनाज्ञानपरादि निखिलं शास्त्रम्** ।
10 शास्त्रोदिता **नित्यकाम्योपासाज्ञानलक्षणा चर्या । प्राणिनिकराकलिता शरीरपुत्रभार्यागृहपशुक्षेत्रादियात्रा** । सर्वमपि **विभ्रममूलकमित्येतद्धेतुं सम्यग् ज्ञातुं** कथं पुनरितिग्रन्थेन **स्पष्टविभागं** पृच्छतीत्यन्वयः । **प्रत्यक्षादीनि मानानि केन प्रकारेणाविद्यावद्विषयाणीति प्रकारप्रश्नपरं भाष्यं योजनीयम्** ॥२६१॥

मानमपि मेयमपि मातृनिकरश्चे-
15　त्यादि सकलं कथितविभ्रमसहायम् ।
इत्थमुपचिन्त्य हृदि युक्तिनिकरेणा-
भ्युत्तरयति स्फुटमथोच्यत इतीह ॥२६२॥

**अथोच्यत इत्यादि** शास्त्राणि चेत्यन्तं **भाष्यमुत्तरपदमवतारयति**—मानमपीति ॥ मानमपि **प्रत्यक्षादिलक्षणमपि** । मेयमपि **घटपटगिरिसमुद्रादिलक्षणमपि** ।
20 मातृनिकरश्च **प्रमातृसमुदायश्चेत्यादिकम् । आदिपदेन करणादिसकलकारकादिपरिग्रहः । इत्यादिकं** सकलमपि **कथिताध्याससहायं भवति** । युक्तिनिकरेणेत्थम् **उक्तरीत्या** । हृदि **चित्ते परिचिन्त्य** । अथ **प्रश्नानन्तरम्** । उच्यत **इत्यादिना ग्रन्थेन** । इह **प्रश्ने विषये** । स्फुटम् **असन्दिग्धमभ्युत्तरयति** । **इत्यन्वयः** ॥२६२॥

[144a] चित्सकलसंहननसंहतिसमुत्थै-
कात्म्यमतितो निखिलमानपरिनिष्ठा ।
केनचिदधिष्ठिततया रथवदेत-
च्चेष्टत इति प्रथितमेव वपुरादि ॥२६३॥

5 अथ प्रत्यक्षादिनिखिलमानादीनां निरुक्ताध्यासावलम्बेन स्वकर्मप्रवृत्तिरिति सयुक्तिकं द्वाभ्यां श्लोकाभ्यां विशदयति—चिदिति ॥ प्रावृतीति ॥ निखिलमानपरिनिष्ठा निखिलानां प्रत्यक्षादिमानानां परितः स्वस्वकार्येषु निष्ठा, फलोन्मुखाव्यभिचरितप्रवृत्तिः चित्सकलसंहननसंहतिसमुत्थैकात्म्यमतितो भवति । चित् चितिः सकलसंहननानि स्थूलसूक्ष्मकारणशरीराणि, तेषां चतुर्णां
10 संहत्या अयुतसिद्धसंहत्या नीरक्षीरवदविवेकेन समुत्था या ऐकात्म्यमतिः, तयाऽहमित्येवंरूपया भ्रान्त्या भवतीत्यन्वयः । अथ भ्रान्तिं विनाऽपि प्रवृत्तिस्संहननस्यास्त्वित्याशङ्क्य देहस्य जडत्वात् चेतनेनाधिष्ठितत्वमन्तरा प्रवृत्त्ययोगाच्च चेतनाधिष्ठानेनैव रथादिप्रवृत्तेर्दर्शनात् प्रकृते देहप्रवर्तकश्चेतनोऽपेक्षितः । चेतनश्च प्रफुल्लज्ञानवान् । प्रफुल्लं ज्ञानं चाहमिति चेतनाचेतनैक्य-
15 विषयज्ञानमेवेति देहादिप्रवृत्तिरहमिति भ्रममूलैव । तदेतदाह—केनचिदिति ॥ एतद्वपुरादि केनचित् चेतनेनाधिष्ठिततया रथवत् चेष्टत इति लोकप्रथितमेव । इत्यन्वयः ॥२६३॥

[144b] प्रावृतिसमावृततनुर्न खलु चेतो-
व्यापृतिविशेषमपहाय ननु माता ।
20 तद्भ्रमवदाश्रयणतो निखिलमान-
व्यापृतिरिति स्फुटतयैवमनुमेयम् ॥२६४॥

अथ चेतनः स्वप्रकाश एवेति स्वत एव चेतनत्वेनाहमित्यध्यासेन ज्ञानवत्तया चेतनत्वलक्षणप्रमातृत्वसम्पादन किमर्थमित्याशङ्क्य परिहरति—प्रावृतीति ॥ प्रावृत्या अविद्यया समावृततनुश्चितिर्जडकल्पा प्रमातृरूपा भवितुं

नार्हति। चेतसा प्रफुल्लेनाविद्यातिरस्कारे सति प्रमातृरूपा भवेत्। चेतो-व्यापृतिविशेषमपहाय माता भवितुं न खल्वर्हति। एवं चाविद्यातिरस्काराय स्थूलदेहे सूक्ष्मदेहाभिव्यक्तिरपेक्षिता। एवं च स्थूलदेहाभिव्यक्ते सूक्ष्मदेहे सत्यविद्यातिरस्कारात् चिद्देहानामैक्यावगाहिनी अहमिति भ्रान्तिर्भवेदेव; सर्वांशेऽप्यविद्यातिरस्काराभावेनाविद्यमानैक्यभानसंभवात्, चिदचितोर्विस्पष्टं भानाभावात्। तत् तस्मात् कारणात्। भ्रमवदाश्रयणतः अहमित्यादिभ्रमवदाश्रयणतः। प्रमातृप्रेर्यतया निखिलप्रत्यक्षादिमानव्यापारो भवतीति। एवम् उक्तरीत्या जडकल्पतामविद्यावरणेन प्राप्तस्याहमित्यध्यासादेव सर्वप्रवृत्तयो भवन्तीति अनुमेयम् युक्त्याऽवसेयमित्यर्थः। अत्र भाष्यम्—देहेन्द्रियादिष्विति ॥ अविद्यावृतत्वेन जडकल्पस्य पुरुषस्य स्थूलदेहाप्रादुर्भावेन तत्राभिव्यक्तिमप्राप्तस्य प्रादुर्भावे वा भ्रमादिना तत्रानभिव्यक्तिमुपयातस्य चित्तस्य प्रफुल्लावस्थाया अभावेनाहंममाभिमानेन देहेन्द्रियादिविषयकेणा[145a]ध्यासलक्षणेन हीनस्य चेतयितृत्वाभावेन प्रमातृत्वानुपपत्तौ प्रमात्रनधिष्ठितत्वेन प्रमाणप्रवृत्त्यनुपपत्तेः प्रमाणप्रवृत्त्यर्थं देहेन्द्रियादिषु कर्मपरिपाकवशादभिव्यक्तेष्वहमाद्यध्यास एष्टव्य एव। प्रमातृत्वमन्तरा प्रमाणप्रवृत्त्यनुपपत्तिमेव विशदयति—नहीति ॥ इन्द्रियव्यापारद्वारैव प्रत्यक्षादिव्यवहारः, न तत्परिहारेण। इन्द्रियव्यापारश्च प्रमातृकृताधिष्ठानात्। नचाहमित्यध्यासमन्तरा प्रमातृत्वरहितरूपेणेन्द्रियादि व्यापारयितुं समर्थ इत्यर्थः। अहमित्याद्यध्यासपरिकरं दर्शयति—नचैतस्मिन्निति ॥ एतस्मिन् सर्वस्मिन् स्थूलसूक्ष्मकारणदेहसूक्ष्मदेहान्तर्गतेन्द्रियवर्गादावसत्यसङ्गस्य स्वप्रकाशस्य निरवशेषं सर्वावभासकस्य प्रमातृत्वं परिच्छिन्नज्ञानवत्त्वेन परिच्छिन्नेन्द्रियदेहादिप्रवर्तकत्वं न संभवेत्; निरवच्छिन्नज्ञानरूपस्यासङ्गस्याविद्यामालिन्यावरणमन्तरा परिच्छिन्नज्ञानेन्द्रियादिसङ्गानुपपत्तेः, इन्द्रियादिसङ्गमन्तरा च परिच्छिन्नप्रवृत्त्ययोगात्। असङ्गे स्वप्रकाशे चाविद्यासम्बन्धः—

> "जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा।
> अविद्या तच्चितोर्योगः षडस्माकमनादयः॥"[1]

इति परिभाषयाऽविद्याया अघटितार्थघटकत्वाभ्युपगमात्। अविद्यावति चेन्द्रियादीनां जन्यः सङ्गो घटते। तथाचाविद्यावृतस्य जडकल्पस्य

सूक्ष्मदेहस्य स्थूलदेहावच्छेदेनाभिव्यक्तौ सत्यामन्तःकरणप्रफुल्लत्वे सत्य-
विद्याया अंशतस्तिरस्कारे देहेन्द्रियादिभिरयुतसिद्धसम्बन्धात् चित्सकलदेह-
साधारण्येनैक्यावगाह्यहमित्यध्यासो जायते। तदध्यासवत्प्रमातृप्रेरणेने-
न्द्रियादिप्रवृत्तिरिति वर्तुलार्थः। उपसंहरति—तस्मादिति ॥ सुगमम् ॥२६४॥

5 [145b] इष्टविषये तदितरत्र च पशूनां
भेदमतिहीनविपरीतमतिपूर्वम्।
संव्यवहृतिर्ननु तथैव पुरुषाणां
लोकविषये व्यवहृतिर्मतिमतां च ॥२६५॥

अथ पश्वादिरित्यादि निश्चीयत इत्यन्तं भाष्यं सङ्ग्रहेण योजयति—इष्टेति ॥
10 इष्टविषये तदितरत्र चानिष्टविषये। पशूनां भेदमतिशून्यविपरीतमतिपूर्वम्
भेदाग्रहविशिष्टाहंभ्रमादितः। संव्यवहृतिः प्रवृत्तिनिवृत्त्यादिलक्षणा भवति
ननु। तथैव मतिमताम् विवेकवतां देहातिरिक्तात्मज्ञानवतामपि जनानाम्।
लोकविषये जगदन्तर्गतशब्दादिविषये। व्यवहृतिः व्यवहारो भोजनगमनादि-
लक्षणो भेदमतिहीनविपरीतमतिपूर्वमेव भवति। भोजनगमनादिकाले देहाति-
15 रिक्तात्मज्ञानापेक्षाया अभावात् केवलदेहात्मज्ञानमात्रादेव भोजनाभोजना-
द्युपपत्तेर्भेदाग्रहविशिष्टाहंभ्रम एव व्यवहारहेतुरिति भावः। अत्र भाष्यम्—
पश्वादिभिश्चेति ॥ पश्वादिभिरिति भाष्यकृतां सङ्ग्रहवाक्यम्। तथाहीत्यादि
तस्यैव विवरणम्। लौकिकव्यवहारेषु व्युत्पन्नानामपि पुरुषाणां पश्वादिभिः
सह इत्यध्याहृत्याविद्यावद्विषयाण्येव प्रत्यक्षादीनीत्यनुषज्य वा योजनीयम्।
20 विवेकिपुरुषीयलौकिकालौकिकव्यवहारः, शुद्धचिदात्मभेदाग्रहविशिष्टविपरीत-
ज्ञानपूर्वकः, व्यवहारत्वात्, पश्वादिव्यवहारवदिति प्रकरणेनानेनानुमानं
सूचितम्। भाष्यं तु सुगमयोजनम् ॥२६५॥

[146a] शास्त्रजनितव्यवहृतावतनुदेहा-
न्येतरकलोकगमनाद्युचितजीवः।

ज्ञातुमुचितो नो खलु निरस्ता-
शेषकलुषोऽद्वयपरात्मचिदखण्डः ॥२६६॥

अथ शास्त्रीयव्यवहारे पक्षैकदेशे भेदाग्रहविशिष्टविपरीतज्ञानपूर्वकत्वं बाधितं भवति, शरीरभिन्नत्वेन परलोकगाम्यात्मग्रहावश्यम्भावादित्याशङ्क्य स्थूलशरीरात् सूक्ष्मकारणशरीरविशिष्टप्रमात्रात्मनो भेदग्रहेऽपि देहत्रयभिन्नत्वेन चिदात्मनो ग्रहाभावात् शुद्धचिदात्मभेदाग्रहविशिष्टविपरीतज्ञानपूर्वकत्वबाधाभावाद् न कोऽपि दोष इत्याह—शास्त्रेति ॥ शास्त्रजनितव्यवहृतौ ज्योतिष्टोमादिकरणलक्षणायाम्। अतनुदेहान्येतरकलोकगमनाद्युचितजीवः स्थूलदेहादन्य इतरकलोकः स्वर्गादिः, तद्गमन उचितो जीवः सूक्ष्मकारणदेहविशिष्टोऽधिकारसिद्धये ज्ञातुमुचितो भवति। तादृशविशिष्टात्मभेदाग्रहो न साध्ये निविष्टः, किन्तु शुद्धचितिभेदाग्रह एव। स च शुद्धात्मा परलोकगमनाय न ज्ञातव्य एव। अत एवाह—नो खल्विति ॥ निरस्ताशेषकलुषः देहत्रयभिन्नः। अद्वयपरात्मचिदखण्डः द्वितीयरहितः परात्मा चिद्रूपोऽखण्डो न ज्ञातुं परलोकगमनायोचितः। तथाच शुद्धचिद्भेदाग्रहविशिष्टविपरीतज्ञानपूर्वकत्वं शास्त्रीयव्यवहारेऽपि वर्तत इति न पक्षैकदेशे बाधः ॥२६६॥

[146b] नाधिकृतिरूपमुपयाति परात्मै-
क्यात्मकमखण्डसुखचिद्घनमनन्तम्।
यद्यदधिकारघटकं भवति तत्तद्
ज्ञेयमधिकृत्य नतु रूपमिदमेकम् ॥२६७॥

उक्तमेवार्थं विशदयति—नेति ॥ परमात्मैक्यात्मकमखण्डसुखचिद्घनमनन्तम् परमात्मैक्यस्वरूपमखण्डं सुखं चिद्घनम् चिदेकतानम्, अनन्तम् पूर्णम्। अधिकृतिरूपम् अधिकारस्वरूपम्। न प्राप्नोति; येनावश्यं कर्मठेन ज्ञातव्यं भवेत्। यद्यदधिकारघटकं तत्तद् ज्ञेयं भवेत्। इदमेकमखण्डं रूपं तावदधिकृत्य नतु। रूपमधिकारविघटकम्; अकर्तृतया ज्ञाते कर्ताऽहं कर्मणीति प्रवृत्त्ययोगात्। अतोऽधिकारायोग्यमित्यर्थः। तथाच शुद्धचिद्भेदाग्रहविशिष्टविपरीतज्ञान-

पूर्वकत्वं सर्वव्यवहारेऽप्यस्तीति न क्वापि बाधः। न वेदान्तेत्यादिभाष्यं तु सुगमयोजनम् ॥२६७॥

[147a] नित्य इति शुद्ध इति सत्सुखचिदात्मा
विग्रहविभिन्न इति निश्चयवतोऽपि।
5 सर्वतनुभिः फलपरादयुतसङ्गाद्
देहघटिता व्यवहृतिर्भवति सर्वा ॥२६८॥

अथाखण्डात्मतत्त्वज्ञानमधिकारविरोधीत्युक्तम्। तत्रेदं विचारणीयम्—यदखण्डात्मतत्त्वज्ञानम्, तत् प्रारब्धावशेषाभावाद् निरवशेषमविद्यानिरसनसमर्थं चेत्, तर्हि तत्समकालं देहत्रयस्यापि निवृत्तेर्विदेहकैवल्याद् लौकिकेऽ-
10 लौकिके वा कर्मणि तावदधिकारो निवर्तत एव। यदितु प्रारब्धावशेषेण शरीरमास्ते, तर्हि प्रारब्धशेषानुसारेणाविद्याशेषानुवृत्तेः "भूयश्चान्ते विश्वमायानिवृत्तिरि"[1]ति श्रुतेर्जातज्ञानस्य निरवशेषाविद्यानिवर्तकत्वाभावात् समाधितो जीवन्मुक्तत्वाद् जीवन्मुक्तिदशायां ज ड भ र त या ज्ञ व ल्क्य ज न का दे-लौकिके कर्मणि देहयात्रालक्षणे तत्तदाश्रमोचिते चालौकिके कर्मणि प्रवृत्ति-
15 दर्शनेनाधिकारविरोधकता वक्तुमनुचितैवाखण्डार्थविज्ञानाय। अतो यत्नानधीनोपाधिदोषाद्यापन्नविकल्पभ्रान्तिसाधारणायत्नपूर्वकविपरीतज्ञानमविद्यापदगम्यं लौकि[147b]कालौकिकव्यवहारहेतुरित्यग्रिमभाष्यभावं निबध्नाति—
नित्य इतीति॥ सत्सुखचिदात्मा नित्यो भवतीति शुद्धः **निर्दोषो** भवतीति विग्रहविभिन्न इति **देहत्रयविभिन्न इति** निश्चयवतोऽपि **जनस्य** सर्वतनुभिः **सहायुत-**
20 **सिद्धसङ्गात्** फलपरात् **फलोन्मुखात्** देहघटिता **सूक्ष्मस्थूलदेहघटिता** व्यवहृतिः **स्वप्नजाग्रद्रूपा** सर्वाऽपि **लौकिकभेदा जीवन्मुक्तस्य** भवती**ति योजना। अत्र** प्राक् च तथाभूतेत्यादि**प्रकरणे** "ब्राह्मणो यजेते"[2]त्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते। अध्यासो नामातस्मिंस्तद्बुद्धिरित्यवोचामेति **पठितम्**। "ब्राह्मणो यजेत"[3] "राजा राजसूयेन स्वाराज्यकामो
25 यजेते"[4]**त्यादौ स्थूलदेहातिरिक्तात्मज्ञानस्य दृढतरस्याधिकारिविशेषणत्वेनापेक्षितत्वादीदृशे स्थूलदेहभेदग्रहे सत्यप्यात्मनि वर्णाश्रमवयोऽवस्थाविशेषाध्या-**

समाश्रित्य प्रवर्तन्त इति स्थूलदेहाद्यध्यासस्यात्मनि निर्देशात् अध्यासो नामातस्मिंस्तद्बुद्धिरिति भेदग्रहकालसाधारणविकल्पज्ञानस्यापि परिग्रहप्रदर्शनाद् भेदग्रहकाले राजा ब्राह्मण इति तत्तद्देहाभेदज्ञानस्य विकल्पज्ञानरूपत्वौचित्यात् तदज्ञानसाधारण्येनैवाध्यासपदप्रवृत्तिप्रदर्शनात् तादृशज्ञानस्यैवाविद्यापदेन निर्देशपूर्वकं शास्त्रादिप्रवृत्तिहेतुत्वप्रदर्शनाद् विकल्पज्ञानसाधारणमेव विपरीतज्ञानमुक्तलक्षणं प्रवर्तकमिति सूचितम्। एवं च जीवन्मुक्तिदशायां ज न क ज ड भ र ता दीनां देहाद्यतिरिक्ताशनायाद्यतीतासंसार्यात्मज्ञानेऽपरोक्षज्ञानात् परिपक्वे स्थितेऽपि प्रारब्धशेषतोऽविद्यालेशानुवृत्त्यभ्युपगमेनायुतसिद्धसम्बन्धात् समाध्यतिरिक्ते काले लोहितः स्फटिक इति ब्राह्मणोऽहम् क्षत्रियोऽहम् परिव्राड् इत्यादिविकल्पज्ञानोदयसम्भवाद् ज न क ज ड भ र ता देराश्रमोचितकर्मदेहयात्रादौ प्रवृत्तिरुचितैवेति विपरीतज्ञानमेव प्रवर्तकम्, न भेदाग्रहोऽपीति सिद्धम् ॥२६८॥

[148b] तत्तदधिकारघटनाद् भवितुमर्ह-
त्याश्रमपरिग्रहणमप्युचितमेव ।
शास्त्रविहितं नियतमाचरणमत्र
ज्ञानदुरितापहृतये लषितमेव ॥२६९॥

[148a]अथ जीवन्मुक्तानां लौकिकेऽलौकिके च कर्मणि शुद्धात्मज्ञाने सत्यपि विकल्पात्मकज्ञानात् प्रवृत्तिर्भवतीत्युक्तम्, तत्रालौकिकं कर्म कथं भवितुमर्हति ; "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरि"[1]ति "पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती"[2]ति सर्वकर्मसंन्यासविधानादित्याशङ्क्य "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते ॥"[3] इति क्षत्रियादेस्तुरीयाश्रमनिषेधाद् ज न का दीनां गृहिणां तत्त्वनिष्ठासमाम्नानात् सर्वेषामपि शुद्धचेतसां तत्त्वज्ञानाधिकारसम्भवात् तत्तद्वर्णाश्रमोचितधर्माकरणे प्रत्यवायोदयेन ज्ञानोदयप्रतिबन्धकापत्तेस्तत्त्वज्ञानोन्मुखानामपि स्वस्वाश्रमोचितविहितनित्यकर्मानुष्ठानमावश्यकम् । संन्यासिनामपि ब्रह्मचार्यसाधारणकर्मत्यागो गृहस्थाश्रम इव गृहिकर्मत्यागः, वनिन इवाश्रमत्रयोचिता-

**साधारणधर्मत्यागस्तुरीयाश्रमे विहितेऽपि गृहिणि ब्रह्मचारिमात्रासाधारण-धर्मातिरिक्तयज्ञादिवत्, वनिनि गृह्यसाधारणकर्मातिरिक्ततपोवत्, भिक्षौ तदाश्रमत्रयकर्मातिरिक्तकर्मण :—**

"स्नानं शौचं तथा भिक्षा नित्यमेकान्तसेवनम्।"[1] "सर्वेषु वेदेष्वारण्यमावर्तयेत्, उपनिषदमावर्तयेत्"[2] 'स्वशाखोपनिषद्गीतां विष्णोर्नामसहस्रकम्। श्रीरुद्रं प्रणवं चैव नित्यमावर्तयेद् यतिः।"[3] "यः शतरुद्रीयमधीते सोऽग्निपूतो भवती"[4]**त्यारभ्य** "अत्याश्रमी सकृद् वा जपेत्, अनेन ज्ञानमाप्नोति संसारार्णवनाशनमि"[5]**त्यादिप्रमाणेभ्यस्तुर्याश्रमोचितकर्मणामपि समाम्नानेन तत्त्यागे च प्रत्यवायेन ज्ञानप्रतिबन्धापत्तेस्तत्तदाश्रमोचितं कर्मावश्यमादरणीयमित्याह**—तत्तदिति ॥ तत्तदधिकारघटनात् **ब्रह्मचर्य-गार्हस्थ्यवनित्वसंन्यासोचिताधिकारस्य तस्मिंस्तस्मिन् पुरुषे घटनात्।** उचितम् **तत्तदधिकारोचितम्** आश्रमपरिग्रहणं भवितुमर्हति। अत्र **परिगृहीताश्रमेषु। विहितं** नियतं **नित्यं तदा**चरणम्। **तद् ज्ञानस्य यद् दुरितं प्रतिबन्धकम् तदपहतये** लषितमेव **वाञ्छितमेव। तथाच नित्यानुष्ठानाभावे प्रत्यवायेन ज्ञानोदयप्रतिबन्धापत्तेरप्रतिबन्धसम्पत्तये नित्याचरणमपेक्षितम्। इति भावः ॥२६९॥**

[149a]

तत्त्वमतयः क्रमश एवमुपजाताः
प्राक्तृतिलवान् परिहरन्ति परिपाकात्।
शक्तिमनुरुध्य तनुपातसमयोत्था
शेषमपि नाशयति वीततनुमुक्त्यै ॥२७०॥

**अथ ज्ञानप्रतिबन्धकनिवृत्तये तत्तदाश्रमोचितनित्यनैमित्तिकाचरणमपेक्षितमित्युक्तम्, तत्र प्रतिबन्धकरहिताद् ज्ञानाद् किं भवतीति प्रश्ने तत्फलभेदं दर्शयति**—तत्त्वेति ॥ "तस्य तावदेव चिरमि"[6]**ति श्रुतिप्रामाण्याद् मन्दतममन्दतरमन्दपक्वपक्वतरपक्वतमतया ज्ञानानामुत्पत्तेरवश्याभ्युपेयत्वात्** तत्त्वमतयः **अखण्डतत्त्वबुद्धयः** क्रमशः **क्रमेणोप**जाताः **सत्यः** एवम् **चिरश्रुत्यादिरीत्या** परिपाकात् **परिपाकमाश्रित्य क्रमेण** प्राक्तृतिलवान् **अविद्यातूलान् स्वस्वसामर्थ्यानुरोधेन** परिहरन्ति **सामर्थ्यानुरोधेनाल्पमधिकं वाऽविद्यातूलान्**

निराकुर्वन्ति । देहपतनोत्था शरीरपातकालभवा तत्त्वमतिस्तीव्रतमा वीततनु-मुक्त्यै विदेहकैवल्याय शेषमपि सारभूताविद्याशेषमपि नाशयति ; "भूयश्चान्ते विश्वमायानिवृत्तिरि"[1]ति श्रुतेः । एवं च परिपाकभेदेन ज्ञानमविद्यालेशान् निवर्तयत् प्रारब्धसमाप्तौ तीव्रतमं सद् निरवशेषमविद्यां नाशयतीति विदेह-कैवल्यं भवति । इति भावः ॥२७०॥

[149b] शेषमलनाशकपरात्ममतिरन्त्या
शासननिषिद्धकरणोत्थदुरितेन ।
व्याहतजनिर्भवति पूर्वमतयोऽपि
म्लानतनवो न खलु तूलमलभेत्त्र्यः ॥२७१॥

अथ परिपक्वज्ञानोदयेनाविद्यातूलानां नाशे समुपक्रान्ते सति प्रारब्धपरिपाक-वशादाश्रमानुचितनिषिद्धाचरणे सति ज्ञानमविद्यां किं निवर्तयेदित्याशङ्क्या-विद्यानिवर्तकतावच्छेदकजातिमद् ज्ञानमेव नोदेति, पक्वतमज्ञानं जातमपि निषिद्धाचरणभवदुरितप्रतिबद्धं कार्योन्मुखमेव न भवतीत्यह—शेषेति॥ शासननिषिद्धकरणोत्थदुरितेन आश्रमानुचितशास्त्रनिषिद्धार्थाचरणजनितदुरितेन । अन्त्या शरीरपातसमयजनियोग्या । शेषमलनाशकपरात्ममतिः अवशिष्टाविद्या-विनाशकाखण्डबुद्धिः । व्याहतजनिर्भवति तदानीमविद्यानिवर्तकतावच्छेदकजाति-विशिष्टज्ञानमेव नोदेति । शरीरपातात् पूर्वं जाता अपि तत्त्वबुद्ध्योऽविद्या-निवर्तकतावच्छेदकजातिमत्योऽपि सत्यो दुरितेन प्रतिबद्धाः सत्यस्तूलाविद्या-मलानां विभेत्त्र्यो न भवेयुरेव । इत्यन्वयः ॥२७१॥

[150a] अद्वयपरात्ममतयः प्रतिनिरुद्धो-
त्पत्तिकतयोन्मिषितशक्तिपरिहीनाः ।
नित्यपरिलुप्तिजनितेन दुरितेन
प्रावृतिविभेदनिपुणा नहि भवेयुः ॥२७२॥

अपरोक्षज्ञानाविर्भावात् पूर्वं परोक्षज्ञानसमय आश्रमानुचितकर्माचरणे पुन-र्जीवन्मुक्तिसम्पादकापरोक्षज्ञानानामेवानुदयात् तूलाविद्याविलयाभावाद् जीव-

न्मुक्तता दूरापास्तेत्याह—अद्वयेति ॥ नित्यनमित्तिककर्मानाचरणभवदुरितेना-द्वयाखण्डात्मबुद्धयः प्रतिबद्धजनिमत्त्वाद् हेतोः उन्मिषितशक्तिपरिहीनाः अविद्या-निवर्तनक्षमसामर्थ्यशून्याः प्रावृतिविभेदनिपुणाः अविद्यालेशनिवारणसमर्था न भवेयुः । साक्षात्काराणामेवाप्रादुर्भावेन जीवन्मुक्त्यवस्थैव तस्यालीकप्राया ।
5 इति भावः ॥२७२॥

यावदिह वेदनवशेन विशरीरां
नाश्रयति मुक्तिमथ तावदपि तस्य ।
मातृकृतसंसृतिरनेकविधदेहो-
पाध्ययुतसङ्गतिवशेन नियतैव ॥२७३॥

10 अथ निष्प्रतिबन्धसाक्षात्कारे जातेऽपि देहपातपर्यन्तं प्रमातृत्वमनुवर्तमान-मेव भवतीत्याह—यावदिति ॥ तत्त्वज्ञो वेदनवशेन यावद् विशरीरां मुक्तिम् विदेह-कैवल्यं नाश्रयति, तावद् जीवन्मुक्तस्यापि तस्य जनस्य मातृकृतसंसृतिः प्रमातृत्वाय-त्तसंसारः नियतैव भवति। तत्र हेतुमाह—अनेकेति ॥ अनेकविधाः स्थूलदेहसूक्ष्मदेहयोः सन्ति ; स्थूलदेहानां कर्मवशेन देवतिर्यगादिभेदेन
15 नानात्वात् सूक्ष्मदेहस्य च पञ्चप्राणमनोबुद्धिदशेन्द्रियादिसमन्वितत्वेन नानाविधत्वात् तादृशदेहलक्षणोपाधिना सहायुतसिद्धसङ्गतित्वात् प्रमातृकृत-संसृतिर्नियतैव । तथाच विदेहकैवल्यं देहोपाधिसंसर्गेण प्रमातृत्वमस्ति । इति भावः ॥२७३॥

[150b] शासनवशेन परमार्थमिदमेवा-
20 मातृवपुरित्यवितथं विदितमस्तु ।
आतनुविपातमपि जागरसुषुप्ति-
स्वप्नमपि मातृ नियतं लसदपारम् ॥२७४॥

ननु सकलत्वचां परिशोधनेनाहमखण्डस्वरूप इति ज्ञाने कथमादेहपातं प्रमातृत्वस्थितिरित्याशङ्क्य प्रमातृत्वस्थितावनुभवं प्रमाणयति– शासनेति ॥

"तत्त्वमसि"[1] "अहं ब्रह्मास्मी"[2] त्यादिशास्त्रवशेन अमातृवपुरेव परमार्थम् अबाधितम् इति निरन्तराभ्यासेन विदितं भवतु। परन्तु प्रमातृत्वविलयो देहोपाधिसत्त्वे न जायत एव। आदेहपातमपि जागरसुषुप्तिस्वप्नम् समाहार-द्वन्द्वः, जाग्रत्स्वप्नसुषुप्तिनिचयस्वरूपम्। लसत् . प्रकाशमानम्। अपारम् 5 अनन्तम्, बहुविधं प्रमातृ नियतं तिष्ठति, अखिलजनसिद्धं तत्त्वनिष्ठा-नामपि जायमानम्, तत्त्वनिष्ठैरपि स्वीयत्त्वेनानुभूयमानम्। ततोऽनुभवानु-रोधाद् विदेहकैवल्यपर्यन्तं प्रमातृत्वं तिष्ठत्येव। इति भावः ॥२७४॥

[151a] सन्ततमपि स्फुटतया भवतु चिन्ताऽ-
नन्तसदमातृचिदखण्डमिति सिद्ध्यै।
10 चिन्तनमिदं च सदुपाधि तदुपाधा-
वातनुविपातमपि तिष्ठति हि माता ॥२७५॥

प्रमातुर्विदेहकैवल्यपर्यन्तमवस्थानमेव विशदयति—सन्ततमपीति ॥ अनन्त-सदमातृचिदखण्डमिति ॥ अनन्तम् त्रिविधपरिच्छेदरहितम्, नाशरहितं वा, सत् कालत्रयाबाध्यम्, अमातृ प्रमातृत्वादिसकलधर्मशून्यम्, चित् ज्ञानस्वरूपम्, 15 अखण्डम् भेदरहितापरिमितरूपं भवत्विति सिद्ध्यै विदेहकैवल्याप्त्यै। चिन्ता अनुसन्धानं निदिध्यासनलक्षणम्। सन्ततमपि स्फुटं भवतु। परन्तु इदं चिन्तनं निदिध्यासनादिलक्षणम्। सदुपाधि सन् उपाधिर्यस्य, अन्तःकरणस्थूल-देहादिलक्षणम्; स्थूलसूक्ष्मदेहादि विनाऽध्यसनादेरयोगात्। तत् तस्मात् कारणात्। उपाधौ निरुक्ते सति। आतनुविपातम् विदेहकैवल्यपर्यन्तमपि। 20 माता प्रमाता। तिष्ठत्येव हि। इति विवेचनीयम् ॥२७५॥

[152a] पूर्णपरमार्थसदखण्डसुखभासोऽ-
ध्यक्षमपि वेत्तुरनिशं भवति भिक्षोः।
यत्पतनमाशु च निषिद्धचरणेना-
नाचरणमेव नियतं वचनतोऽतः ॥२७६॥

[151b] अथ जनकादिसदृशानां क्षत्रादीनां तत्त्वनिष्ठानामपि नित्यकर्मणां शास्त्ररीत्या त्यागाभावेन तदननुष्ठाने प्रत्यवायोद्भवेनान्तिमः साक्षात्कारो मध्यमः साक्षात्कारश्च प्रतिबद्धः सन् कार्यमविद्यानिवर्तनं मा करोतु, ब्राह्मणस्य तु सर्वकर्मत्यागेन तुरीयाश्रमविधानात् तस्य नित्य-
5 नैमित्तिककर्माभावात् तदननुष्ठानेन प्रत्यवायानुदयात् प्रतिबन्धकाभावात् तत्त्वसाक्षात्कारोदयेनाविद्यातूलनिवृत्तिसम्भवादन्तिमसाक्षात्कारस्य च देहपातकाले निराघाटत्वात् शेषाविद्याविलयेन विदेहकैवल्यमनायाससाध्यमेव किं न भवेदिति प्रश्ने तत्रापि तुरीयाश्रमोचितधर्माणां भिक्षाचरणादीनां पातित्याधायकशास्त्रनिषिद्धकर्माचारणाभावसहितानां वचनैराम्नानात् "तद्भू-
10 तस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः"[1] "संन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेत्तु यः। स चरेत् कृच्छ्रमश्रान्तः षण्मासान् प्रत्यनन्तरम् ॥"[2] "वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेत। भिक्षुर्वानप्रस्थवत् सोमवृद्धिवर्जं स्वशास्त्रसंस्कारश्च"[3] "संन्यस्याग्नीन् न पुनरावर्तयेत। सौवर्णादीनां नैव परिग्रहेदि"[4]ति मानानां निषिद्धाचरणनिवर्तकानां सत्त्वाद् यतेरपि स्वाश्रमो-
15 चितचर्ययैवावस्थाने साक्षात्काराद्विद्यानिवृत्तिः, नेतरथेत्याह—पूर्णेति ॥
पूर्णम् व्यापकम्, परमार्थम् कालत्रयाबाध्यम्, अत एव सदखण्डम् अद्वयं सुखम्, भाः प्रकाशरूपः, तस्य। अध्यक्षम् प्रत्यक्षं यथा भवति तथा। वेत्तुः ज्ञातुस्तत्त्वनिष्ठस्य। भिक्षोः यतेः। निषिद्धचरणेन प्रतिषिद्धार्थानुष्ठानेन। यत् यस्मात् कारणात्। पतनमाशु भवति। अतो हेतोर्निषिद्धानाचरणमेव निरुक्त-
20 वचनतो नियतं भवति। एवं च निषिद्धानाचरणसंवलितभिक्षाटनादिकर्म यतेरपि नियतम्। तदभावे च प्रत्यवायादिलक्षणदुरितेन साक्षात्कारप्रतिबन्धः क्षत्रादीनामिव समान एव। इति भावः ॥२७६॥

[152b] कर्मबहुलं त्रिविधमाश्रममुपात्तं
कामतदभावसमसद्म परिभूय।
25 भिक्षुपदमन्तिममनाकलितदोषं
ब्राह्मणवरः श्रयति संसृतिनिवृत्त्यै ॥२७७॥

अथ यदि तुरीयाश्रमेऽपि कर्म स्यात्, तर्हि सर्वकर्मत्यागेन तुरीयाश्रम-

वर्णनं कथं योजनीयमित्याशङ्क्य तद्योजनप्रकारं दर्शयति—कर्मेति ॥ कर्मबहुलम् कर्मभिर्बहुलम्, प्रचुरकर्मकम्—ब्रह्मचर्ये वेदाध्ययनतदभ्यासगुरुशुश्रूषादिकर्मबाहुल्यम्, गार्हस्थ्ये ज्योतिष्टोमदर्शपूर्णमासचातुर्मास्यवैश्वदेवबलिहरणादिकर्मबाहुल्यम्, वनेऽह्नोरात्रादिषु तपस्यादिबाहुल्यम्, एवंविधम्
5 त्रिविधमाश्रमम् "ब्रह्मचारी भवेद् गृही भवेद् वनी भवेदि"[1]ति श्रुतिसमुपात्तम्। कामतदभावसमसद्म कामः इच्छा लोकपदार्थादिविषया, तदभावः कामत्यागः, तयोः समं सद्म स्थानम्; काम्यकर्मणो नित्यनैमित्तिककर्मणश्चानुष्ठाने तत्राधिकारात्। अतस्तादृशमाश्रमत्रयं परिभूय विधिपूर्वकं परिहृत्य। भिक्षुपदमन्तिमम् तुरीयाश्रमम्। अनाकलितदोषम् कर्मबाहुल्यात् कामनादिरहितम्
10 संसृतिनिवृत्त्यै। ब्राह्मणवरः शुद्धान्तःकरणो ब्राह्मणः। श्रयति गृह्णाति। तथाचाश्रमत्रयविहितकर्मत्याग एव विधिपूर्वकमाम्नातः श्रुतिषु स्मृतिषु, नतु यत्युचितकर्मत्यागोऽपि। तथाच स्वाश्रमोचितधर्मानाश्रयणे प्रत्यवायात् साक्षात्कारप्रतिबन्धो भवेदेव। इति भावः ॥२७७॥

[153a] ज्ञानसरणावुचितमेव हि समस्तं
15 कर्म कथितं भवति भैक्षचरणादि।
त्यागवचनानि विहितत्रिविधधर्म-
स्कन्धमयपर्वसमुदायविषयाणि ॥२७८॥

उक्तमेवार्थमुपसंहृत्य बुद्ध्युपारोहाय दर्शयति—ज्ञानेति ॥ ज्ञानमार्गे तदाश्रमस्य ज्ञानानुकूलस्य उचितमेव भैक्षचरणादि समस्तं कर्म विहितप्रतिषिद्ध-
20 लक्षणं श्रुतिस्मृतिसमाम्नातम्। कर्मत्यागवचनानि तु "त्यजतैव हि तद् ज्ञेयं त्यक्तुः प्रत्यक् परं पदमि"[2]त्यादीनि "त्रयो धर्मस्कन्धा"[3] इति विहितो यस्त्रिविधधर्मस्कन्धः, तद्रूपाणि यानि पर्वाणि "ब्रह्मचर्यं समाप्य गृही भवेद् गृही भूत्वा वनी भवेदि"[4]ति समाम्नातकर्मस्थानानि तत्समुदायविषयाणि विज्ञेयानि। तथाच निरुक्तोऽर्थो निरवद्यः। इति सिद्धम् ॥२७८॥

25 नित्यमखिलं हृदयशोधनसमर्थं
वेदननिदानरहितस्य तु जनस्य।

सद् भुवनसाधनमपि क्रमसरण्याऽऽ-
प्नोति ननु बोधपथमप्यपहृतैनः ॥२७९॥

**अथ नित्यस्य फलभेदान् विशदयति**—नित्यमिति ॥ **तत्तदाश्रमोचित**मखिलं नित्यं हृदयपरिशोधनसमर्थं **भवति चित्तपरिशोधकं भवति ज्ञानसाधनीभूत-**
5 **शमादिश्रवणादिरहितस्य पुरुषस्य । ज्ञानवतः पुंसस्तु साक्षात्कारोदयप्रति-बन्धकप्रत्यवायपरिहारफलकमिति प्रोक्तमेव । तदेव नित्यमन्तःकरणशोधक-मपि** सद् भुवनसाधनमपि **भवति । इदमेव नित्य**मपहृतैनः सत् **परिहृतकल्मषं सत्** बोधपथमपि **ज्ञानमार्गमपि प्राप्नोति क्रममार्गेण** ; "अनेकजन्मसंसिद्धस्ततो याति परां गतिमि"[1]**ति स्मृतेः** ॥२७९॥

10 [153b] कर्मजनिते त्रिदशलोकफलभेदे
संसरणमेव ननु कामुकजनस्य ।
श्रौतवचनानि तमेतमितिपूर्वा-
ण्यर्थमिममेव शतशो विशदयन्ति ॥२८०॥

कर्मेति ॥ कामुकजनस्य **तु** कर्मजनिते **स्वर्गफलभेदे** संसरणमेव **भवति** । श्रौतेति ॥
15 "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेने"[2]**त्यादिकानि** श्रौतवचनानि शतश इममेवार्थं **नित्यमेनःशोधकम्, शोधनद्वारा जिज्ञासाजनकं सद् लोकसाधनम्, कामना चेत् संसरणसाधनमित्यादिलक्षणमर्थं** विशद-यन्ति **प्रकाशयन्ति । इत्यर्थः** ॥२८०॥

पक्वतमवेदनमनंशकमविद्या-
20 नाशनसमर्थमुदितं भवति यस्य ।
तस्य तु समस्ततनुबन्धनविनाशा-
न्मूलमलनाशवशतस्त्वरितमुक्तिः ॥२८१॥

**अथ परिपक्वतमज्ञानस्य फलं सद्यो विदेहकैवल्यमित्याह**—पक्वतमवेदनमिति ॥

यस्य **पुरुषस्य**। अनंशकम् **निरवशेषम्**। अविद्यानाशनसमर्थपक्वतमवेदनम् **अतिपक्वज्ञानम्**। उदितम् **प्रादुर्भूतं** भवति ; **मूलमलस्य निरवशेषविनाशात्**। समस्ततनुबन्धनविनाशात् **समस्तदेहविलयात्, स्थूलसूक्ष्मदेहयोरपि विलयात्**। तस्य **पुरुषस्य**। **पक्वतरवेदनसमकालमेव त्वरिता विदेहलक्षणा मुक्तिर्भवति**।
5 **इत्यर्थः** ॥२८१॥

[154a] पक्वतरवेदनमथो फलसमाप्तौ
तावदिति विश्रुतचिरश्रुतिवशेन ।
मूलमलखण्डनमिदं निरवशेषं
कर्म फलसिद्धिमुखमेव निरुणद्धि ॥२८२॥

10 **अथ पक्वतरवेदनकालं दर्शयति**—पक्वतरेति ॥ "तस्य तावदेव चिरं यावद् न विमोक्ष्ये। अथ संपत्स्य"[1] इति विश्रुतचिरश्रुतिवशेन **प्रारब्धकर्मफलसमाप्तौ समाप्तिसमये शरीरपातसमये पक्वतरवेदनस्योदयो भवति। ननु सत्यां सामग्र्यां शरीरपातात् पूर्वमेव प्रारब्धकर्मभोगकाले पक्वतरं वेदनं कस्माद् न भवतीत्याशङ्क्य परिहरति**—मूलेति ॥ निरवशेषं मूलमलखण्डनम् **मूलमल-**
15 **नाशकम्**। इदं पक्वतमवेदनं **फलसिद्धावुन्मुखं प्रारब्धं** कर्मैव निरुणद्धि **प्रतिबध्नाति**। **इतरथा जीवन्मुक्तिदशायामेव पक्वतरवेदने सति तदानीमेव निरवशेषं मूलमलविनाशेनासङ्ग आत्मन्यविद्याया एवेतरासञ्जकत्वेन निरवशेषाविद्याविलय आसञ्जकाभावात् प्रारब्धकर्मसम्बन्धायोगेनेश इवाकिञ्चित्करं प्रारब्धमिति सद्यः शरीरपातेन विदेहकैवल्यमेव स्यात्, न तथोपलभ्यते,** "तस्य तावदेवे"[2]**ति**
20 **श्रुतिरपि व्याकुप्येत। अतः प्रारब्धसमाप्तिसमय एव पक्वतरवेदनं भवति। इति भावः** ॥२८२॥

[154b] कर्मशकले फलपरेऽपि पुरतः स्यात्
प्रायणत एव मलतूलविलयोऽपि ।
आत्मसुखभानमपि तावदविशेषा-
25 न्मुक्तिरपि जीवत इतो भवति काचित् ॥२८३॥

अथ जीवन्मुक्तव्यवस्थाप्रकारं दर्शयति—कर्मेति ॥ कर्मशकले फलपरेऽपि प्रारब्धकर्मशेषे फलोन्मुखेऽपि । प्रायणतः देहपातात् । पुरत एव मलतूलविलयोऽपि भवति मलैकदेशनाशोऽपि कर्मभोगोऽपि भवति ; सर्वाविद्याविलय एव प्रागुक्तानिष्टाप्रसक्तेः, एकदेशविलये तदप्रसक्तेः । एवं चाविद्यालेशविलये-
5 नावरणाल्पतयाऽऽत्मसुखभानमप्यविशेषात् सामान्यात्मना भवति । इतः अस्मादेव तूलविलयात् । काचिन्मुक्तिर्जीवतो भवति । इति भावः ।.२८३॥

[155a] युक्तिकृतभेदधिषणोऽप्ययुतयोगा-
दैक्यमतिमान् वितनुते भुवनयात्राम् ।
शास्त्रकृतभेदमतिमानपि हि शास्त्रा-
10 दैक्यधियमाप्य ननु कर्म तनुते च ॥२८४॥

अथ शुक्तिविषयजतभेदग्रहः प्रवृत्तिप्रतिबन्धकः, तदभावः प्रवृत्तौ कारणम् , शरीरस्थले तु देहात्मनोर्भेदग्रहेऽपि नित्यसम्बन्धाद् विकल्पलक्षणैक्यज्ञाना-दखिलयात्राऽपि लौकिकालौकिकलक्षणा भवतीत्याह—युक्तीति ॥ नित्य-सम्बद्धत्वात् शरीरात्मनोर्युक्तिकृतभेदबुद्धिरपि जनोऽयुतयोगेन नियतसम्बन्धेन
15 शरीरात्मैक्यमतिमान् सन् भुवनयात्रां लौकिकलक्षणां वितनुते करोति । शास्त्रकृतभेदमतिमानपि "न जायते म्रियते वा विपश्चिद् नायं कुतश्चिद् न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे"[1] इत्यादिशास्त्रकृतभेद-बुद्धिमानपि । "ब्राह्मणो बृहस्पतिसवेन यजेत"[2] "राजा राजसूयेन स्वाराज्यकामो यजेत"[3]त्यादिलक्षणात् शास्त्रादैक्यधियमाप्य "ज्योतिष्टोमेन स्वर्गकामो यजेत"[4]-
20 त्यादिकमनुवर्तते चेत्यन्वयः । तथाच विकल्पविज्ञानं तत्र व्यवहारे तन्त्रम् । इति भावः ॥२८४॥

[155b] स्यादुपकृतेरपकृतेरपि विशेषाद-
न्वयवशेन गृहवन्निखिलयात्रा ।
ऐक्यधिषणाऽयुतसमाजवशासिद्धा
25 सर्वविषयव्यवहृतावुपकरोति ॥२८५॥

अथ शुक्तिरजतादाविष्टभेदग्रहे प्रवृत्तिरुचिता यथा न जायते, तथा शरीरादाविष्टात्मभेदग्रहे सत्यात्मत्वप्रयुक्ता प्रवृत्तिर्न स्यात्; भेदग्रहस्य प्रतिबन्धकत्वादित्याशङ्क्य मा भूदात्मत्वप्रयुक्ता प्रवृत्तिः, उपकार्योपकारकभावप्रयुक्ता तु प्रवृत्तिर्भवति; गृहस्यात्मत्वाभावेनात्मत्वप्रयुक्तप्रवृत्त्यभावेऽपि पुरुषगृहयो-
5 रुपकार्योपकारकभावात् तत्प्रयुक्तप्रवृत्तिदर्शनादित्याह—स्यादिति॥ शरीराद् रोगाद्यनुपहतादात्मनो लौकिकवैदिककर्मसूपकारात् रोगाद्युपद्रुतशरीरादात्मनो निरुक्तकर्मस्वपकारदर्शनाद् विशेषादन्वयवशेन नियततरात् सम्बन्धविशेषाद् गृहेण तुल्यं सर्वयात्राऽपि भवेत्। अयुतसिद्धसम्बन्धसिद्धैक्यबुद्धिस्तु विकल्परूपा सकलविषयव्यवहारेऽपि सर्वशेषिलक्षणात्मज्ञानरूपेणोपकरोति।
10 इत्यर्थः ॥२८५॥

[156a] जातसुत इत्यसितकेश इति राजा
ब्राह्मण इति श्रुतिभिरैक्यपरिबन्धात्।
नो लसदुपाधिरवमानयति भेद-
ज्ञप्तिमिह विग्रहचिदैक्यमतिभेदः ॥२८६॥

15 अथ शरीरात्मनोर्भेदग्रहोऽभेदग्रहेणाप्रामाण्यास्कन्दितः क्रियताम्, अभेदग्रहस्य प्रवर्तकत्वदर्शनादित्याशङ्का नावतरणीया; अभेदग्रहस्य शरीरसंनिध्युपाधिप्रयुक्तत्वेन भेदबुद्धेरनौपाधिकत्वेन भेदबुद्ध्यैवाभेदबुद्धेर्बाध्यत्वौचित्यात्। नच—अप्रामाण्यशङ्कास्कन्दिताभेदबुद्धेः कथं प्रवर्तकत्वमिति—वाच्यम्; उपकार्योपकारकबुद्धेरेव प्रवर्तकत्वात्, आत्मग्रहविधयैवाभेद-
20 ग्रहस्योपयोगात्, इति हृदि निधायाभेदबोधकमानानि दर्शयति—जातेति॥ "जातपुत्रः कृष्णकेशोऽग्नीनादधीत"[1] "ब्राह्मणो बृहस्पतिसवेन यजेत"[2] "राजा राजसूयेन स्वाराज्यकामो यजेत"[3]त्यादिभिः श्रुतिभिः शरीरात्मैक्यज्ञानभेदो भवन् भेदबुद्धिं नो अवमानयति अप्रामाण्यशङ्कास्कन्दितं न करोति प्रागुक्तरीत्या। इति भावः ॥२८६॥

[156b] प्रावृतिविलेशपरिभञ्जनसमर्था
25 तत्त्वमतिरित्यधिकृतौ न हि निविष्टा।

नो खलु तमोलवनिहन्तृ लघु तेजो
ध्वान्तवपुरुद्दलयतीति मतिरस्ति ॥२८७॥

ननु नासंसार्यात्मज्ञानमधिकारेऽपेक्ष्यते ; अनुपयोगात्, अधिकारविरोधाच्चे-
त्युक्तम्। तत्र स्थूलशरीरातिरिक्तात्मज्ञानस्यैव लोकान्तरे देहान्तरभोग्य-
5 फलजनककर्माधिकार उपयुक्तत्वेन शुद्धात्मज्ञानस्य तत्रानुपयोगादिति कथनं
समञ्जसमेव। शुद्धात्मज्ञाने सत्यधिकारविरोधकथनं तावदसङ्गतम् ;
ज न का दीनां तत्त्वज्ञाने सत्यपि नित्यकर्माद्याचरणदर्शनेन कर्माचरणविरोध-
स्य वक्तुमशक्यत्वात्। एवं चाधिकारविरोधादिति भाष्यं कथं योजनीयमिति
प्रश्ने तद्योजनप्रकारं दर्शयति—प्रावृतीति ॥ अयमाशयः—शरीरपातसमय-
10 भवतत्त्वसाक्षात्कारस्यान्तिमस्य प्रारब्धस्थितिहेतुभूतस्यानुवर्तमानस्य सारभूत-
स्याविद्यांशस्य निवर्तकत्वेन तन्निवर्तकतावच्छेदकविलक्षणजातिमत्तया
विदेहकैवल्यसम्पादकत्वेन विदेहदशायामधिकारविरोधित्वस्य सिद्धतया-
ऽन्तिमसाक्षात्कारात् पूर्वमपि जातानां साक्षात्काराणामविद्यानिवर्तकतया
तन्निवर्तकतावच्छेदकजातिमत्त्वेन शरीरसत्त्वदशायां प्रारब्धानुरोधेनाविद्या-
15 नुवृत्त्या स्थूलसूक्ष्मदेहाभ्यामयुतसिद्धसम्बन्धसत्त्वेन विकल्पज्ञानाद[157a]न्ति-
माविद्यानिवर्तकसाक्षात्कारोत्पत्तिप्रतिबन्धकप्रत्यवायलक्षणदुरितनिवृत्तये तत्त-
दाश्रमाद्युचितनित्यनैमित्तिककर्माचरणे देहधारणादिपरे लौकिके व्यवहारे च
सत्यपि संसारप्रवर्तकाविद्यातूलनिवर्तकतावच्छेदकजातिमतां साक्षात्काराणा-
मन्तिमसाक्षात्कारपूर्वभाविनामधिकारनिर्वाहकाविद्यातूलविघटकत्वेनाधिकार-
20 प्रतिकूलानामधिकारशरीरे प्रवेशायोगात्, तमो द्रव्यमिति पक्षे मध्याह्न-
चण्डकरप्रभायाः सर्वथा सकलतमोनिवर्तकत्वेऽपि मन्दान्धकारस्थलेऽल्प-
प्रकाशेन तमोऽवयवानां केषाञ्चिदल्पतेजःसामर्थ्यानुरोधेन विनाशितत्वेन
तमोऽन्तरांशसत्त्वेऽपि तत्राल्पतेजसो विद्यमानस्य तमःसमानाधिकरणस्य
विद्यमानतमोंऽशोपष्टम्भकत्वायोगात्, तमोनिवर्तकतावच्छेदकजातिमत्त्वात्,
25 तथैवेहाप्युपपत्तेः, अधिकारहेतुभूताविद्यानाशकतावच्छेदकजातिमत्त्वादिति।
तत्त्वमतिः अन्तिमसाक्षात्कारपूर्वभाविनी साक्षात्कारात्मिका तत्त्वमतिः।
प्रावृतिविलेशपरिभञ्जनसमर्था अविद्यातूलविनाशसमर्था कर्माधिकारशरीरे न निविष्टा
भवितुमर्हति ; विरोधिनः प्रतिद्वन्द्विशरीरघटकत्वायोगात्। तत्र दृष्टान्तमाह—

नो खल्विति ॥ लघु तेजस्तमोलवनिहन्तृ सद् ध्वान्तशरीरमुद्दलयतीति । नो खलु मितिः मानमस्ति । तस्मात् तत्त्वं शुद्धं कर्माधिकारविरोधीति साधूपपन्नमेव । इति दिक् ॥२८७॥

[157b] उक्तमुपसंहरति विभ्रमविशेषं

5 प्रागिति वचोभिरुपपादनमिषेण ।

सोऽयमिह संसृतिलतोग्रविषकन्दः

पक्वतरवेदनधनञ्जयविदाह्यः ॥२८८॥

अथ प्राक् च तथाभूतात्मविज्ञानादित्यादिभाष्यार्थस्य प्रागेव गतार्थत्वात् पुनरुक्तिरिति भाष्यमिदं प्रागुक्तार्थवैशद्यपरं सदुपसंहारपरमित्याह—उक्त-
10 मिति ॥ तथाहीत्युपपादनव्याजेन प्रागित्यादिवचोभिरुक्तं विभ्रमविशेषम्— अन्योन्यस्मिन्नित्यादिना विवेचितमुपसंहरति बुद्धिस्थैर्याय पुनर्वदति । सोऽयम् अध्यासः । इह वेदान्तशास्त्रे । संसृतिलतोग्रविषकन्दः संसारलताया उग्रः क्रूरतरो विषकन्दः । सोऽयं कन्दः पक्वतरवेदनम् साक्षात्कारविशेषः, स एव धनञ्जयोऽग्निः, तेन विदाह्यः विशेषेण दग्धुमर्हः । अत्र भाष्यम्—प्रागिति ॥
15 निरवशेषमविद्याविनाशकाद् ज्ञानात् पूर्वं शास्त्रं भ्रमविकल्पान्यतरलक्षणाविद्यावद्विषयत्वं नातिवर्तते । तथाहीत्यादिवाचि वर्णाश्रमवयोऽवस्थाविशेषाध्यासो भ्रमविकल्पसाधारणः । अध्यासो नामेतिपदमतस्मिंस्तद्बुद्धिरिति निर्देशाद् भ्रमविकल्पसाधारणमेव ॥२८८॥

[158a] सर्वतनुचिन्मयमिहास्मदधिशब्दं

20 शुद्धचिति मातरि तु तत्र हृदयस्थान् ।

इन्द्रियगतान् पृथुलदेहपरिणद्धान्

पुत्रमुखगानपि हि पश्यति गुणौघान् ॥२८९॥

अथ तद्यथा पुत्रेत्यादेरन्तःकरणादिष्वध्यस्यतीत्यन्तस्य भाष्यस्य भावं सङ्गृह्य दर्शयति—सर्वेति ॥ जनः शुद्धचिति अस्मदधिशब्दम् अस्मत्पदाभिधेयम् ।

सर्वतनुचिन्मयम् **सर्वास्तनवः स्थूलसूक्ष्मकारणदेहाः, चिच्च, एतन्मयम् एतद्विकारभूतं प्रमातारमहमित्यादिसप्तविभक्तिभिरपि** पश्यति **अवलोकयति। अनेना**हम्प्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं सर्वसाक्षिणमन्तःकरणादिष्वध्यस्यतीति **भाष्यं विवृतं भवति। तत्राहम्प्रत्ययी प्रमाता देह-**
5 **त्रयचिन्मयः। अनेन चितो देहेषु देहानां चिति च तादात्म्याध्यासः कथितो भवति।** मातरि तु तत्र **प्रमातरि तस्मिन् परस्परतादात्म्याध्यासवति देहत्रयचिद्रूपे** हृदयस्थान् **अन्तःकरणस्थान् बाह्येन्द्रियगतान् स्थूलदेहगतान् पुत्रादिगतांश्च** गुणौघान् **परस्परतादात्म्याध्यासेन हेतुना** पश्यति **अवलोकयति। पुत्रभार्यादिषु विकल्पाभेदज्ञानात् तद्गतवैकल्यादीनात्मनि पश्यति। एवं**
10 **स्थूलदेहधर्मान् कार्श्यादीन् बाह्येन्द्रियधर्मान् मूकत्वादीन्, अन्तःकरणधर्मान् सङ्कल्पादींश्च स्वस्मिन् पश्यति, स्वस्वरूपचैतन्यलक्षणं धर्मं चान्तःकरणादिषु पश्यति। भाष्यमेतदर्थकं सुगमम्।** एवमयमनादिरनन्त **इत्यादिना बुद्धौ प्रतिफलनाय निरुक्तोऽध्यासः सङ्क्षेपेण पुनरनूदितः। इति विवेकः ॥२८९॥**

[158b] ति त्ति रि शि रो मुखवचांसि निखिलानि
15 भ्रान्तिमुदितां ननु विमोचयितुमाशु।
वेदनमुपार्ज्य सदखण्डचिदभीद्धं
सत्सुखचिदम्बुनिधिमज्जनफलाप्त्यै ॥२९०॥

अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्त **इति भाष्यं विवृणोति**—ति त्ति री ति ॥ सत्सुखचिदम्बुनिधिमज्जनफलाप्त्यै **कालत्रयाबाध्य-**
20 **सुखज्ञानसमुद्रस्नानप्राप्त्यै।** सदखण्डचिदभीद्धम् **अबाधितत्रिविधपरिच्छेदविनिर्मुक्तचैतन्यदीप्तम्।** वेदनम् **ज्ञानम्।** उपार्ज्य उदिताम् **कथिताम्** भ्रान्तिमाशु मोचयितुं **ति त्ति रि शि रो मुखानि वचांसि भवन्ति। तानि चात्राद्रियन्ते। इति भावः ॥२९०॥**

[159a] भावमिममद्वयपरं श्रुतिशिखानां
25 कुलचन कुलचन भिक्षुपठनीये।

दर्शयति सूत्रनिचये स्फुटवचोभि-
र्व्या स इति भाष्यकृदिह प्रविविनक्ति ॥२९१॥

यथाचायमर्थः सर्वेषां वेदान्तानाम्, तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्याम **इति भाष्यभावं विशदयति**—भावमिति ॥ "पा रा श र्य शि ला लिभ्यां भिक्षुनट-
5 सूत्रयो"[1]**रिति स्मरणाद्** भिक्षुपठनीये सूत्रनिचये **चतुरध्यायीलक्षणे** व्या सः स्फुटवचोभिः क्वचित् **कचित्** श्रुतिशिखानाम् **वेदान्तानाम्** इमम् **अतिप्रसिद्धम्** अद्वयपरं भावं दर्शयतीति भाष्यकृद् **विवेचयति । इति गोलार्थः** ॥२९१॥

चेतनमनेकमवलम्ब्य क पि ला द्यै-
र्वास्तवमहो विरचितानि निखिलानि ।
10 शासनवराणि तदयुक्तमिति शास्त्रं
व्या स कृतमेकपुरुषार्थमिति मो क्षे ॥२९२॥

अत्र "अथातो ब्रह्मजिज्ञासे"[2]**त्यादिलक्षणे शास्त्रे सकलश्रुत्यैकमत्येनात्मैकत्वं प्रतिपाद्यत इति** अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तय **इत्यादिना** प्रदर्शयिष्याम **इत्यन्तेन भाष्येणोक्तम्, तद् युक्तमेव; श्री म हा भा र ते शा-**
15 **न्ति प र्व णि मो क्ष ध र्मे शुद्धाद्वैतमेव व्या स कृत ब्र ह्म सू त्रा णामर्थः, न द्वैतमिति स्पष्टं प्रतिपादनादित्याह त्रिभिः श्लोकैः**—चेतनमिति ॥ **अत्रायं सङ्ग्रहः**—"यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं यद् भूतयोनिं परिपश्यन्ति धीराः"[3] "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह
20 विश्वम्"[4] "यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति"[5] "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः"[6] "ब्रह्मैवेदममृतं पुरस्ताद् ब्रह्म पश्चाद् ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मै[159b]वेदं विश्वमिदं वरिष्ठमि"[7]**ति मु ण्ड क श्रुतीः परिगृह्य**
25 **श्री भ ग व द्गीतायां पञ्चदशेऽध्याये ।**

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥"[1]

5 इति क्षरो भूतवर्गः, अक्षरो भूतयोनिः, तदतिरिक्तो दिव्यः पुरुषश्चेति निरूपितम्। तत्र लोके प्रत्यक्षादिमानैः कापिलादिभिश्च पुरुषनानात्वं प्रकटीकृतम्। "तत्त्वमसि"[2] "अथात आत्मादेश एव"[3] "आत्मैवाधस्तात् पुरश्चक्रे द्विपदं पुरश्चक्रे चतुष्पदः"[4] "पुरः स पक्षी भूत्वा परः पुरुष आविश"[5] दित्यादावेक एव पुरुषः सामाम्नायते। तत्र पुरुषनानात्वपक्षे मुण्डकश्रुतिगमितं
10 भूतयोनित्वं कस्यचित् पुरुषस्य "ब्रह्मैवेदं विश्वमिदं वरिष्ठम्"[6] "दिव्यो ह्यमूर्त"[7] इत्याम्नातं श्रैष्ठ्यमपरस्य पुरुषस्य घटते कस्यचित्। यदितु पुरुषैक्यमेव, तर्हि पुरुषभेदाभावात् कः पुरुषो वरिष्ठः कः पुरुषो योनिः; पदार्थभेदस्यैवाभावेन निर्गुणत्वसगुणत्वविरुद्धधर्मविशिष्टार्थभेदस्यैव वक्तुमशक्यत्वाद् मुण्डकश्रुतिरियमसङ्गता स्यात्, इति हृदि निधाय जनमेजयेन—

15 "बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु।
को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते॥"[8]

इति प्रश्नः प्रवर्तितः। अत्र कोट्योर्मध्ये या पुरुषत्वकोटिः, तत्र पुरुषभेदाभावाद् योनिश्रेष्ठपुरुषौ विरुद्धौ सगुणनिर्गुणलक्षणौ कौ भवतः, कावपि न भवत इति श्रुत्यसाङ्गत्यं कथं परिहरणीयमित्याशयः। तदनन्तरं च
20 वैशम्पायनेन—

"बहवः पुरुषा लोके साङ्ख्ययोगविचक्षणाः।
नैतमिच्छन्ति पुरुषमेकं कुरुकुलोद्वह॥
बहूनां[160a] पुरुषाणां च यथैका योनिरुच्यते।
तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम्॥
25 नमस्कृत्वा च गुरवे व्यासायामिततेजसे।
तपोयुक्ताय दान्ताय वन्द्याय परमर्षये॥
इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव।
ऋतं सत्यं च विख्यातमृषिसिंहेन भाषितम्॥

उत्सर्गेणापवादेन ऋषिभिः क पि ला दिभिः ।
अध्यात्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ॥
समासतस्तु यद् व्या सः पुरुषं त्वेकमुक्तवान् ।
तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः"[1] ॥

5 इति समाम्नातम्। अत्र "बहवः पुरुषा लोक"[2] इत्यनेन प्रत्यक्षादिलौकिक-प्रमाणसिद्धमेव पुरुषनानात्वं नोपदेशगम्यम्। इदमेव लौकिकं नानात्वं स्वीकृत्य साङ्ख्ययोगविचक्षणाः का पि ल पा त ञ्ज ल का णा द गौ त-मीयादयः। एतम् त्वया पृष्टम् एकं पुरुषं नेच्छन्ति। बहूनामिति। "तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति। भूतयोनिमि"[3]त्यादिश्रुतिषु यथा 10 येन प्रकारेण पुरुषाणां योनिरुच्यते, तेन प्रकारेण तमेकं श्रेष्ठं पुरुषं निर्गुणं गुणाधिकं मायोपाधिकत्वेन सत्त्वादिगुणैरधिकम्, अत एव विश्वं प्रपञ्चात्मकं "ब्रह्मैवेदं विश्वमिदं वरिष्ठमि"[4]तिश्रुत्युपात्तं व्याख्यास्यामीत्यर्थः। अनेन "को ह्यत्र पुरुषः। को वा योनि"[5]रिति प्रश्नद्वयोत्तरमपीह सङ्गृहीतम्;

"आधारं तु प्रवक्ष्यामि एकस्य पुरुषस्य ते ।
15 बहूनां पुरुषाणां स यथैका योनिरुच्यते ॥
तथा तं पुरुषं विश्वं परमं सुमहत्तमम् ।
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम ॥
सगुणो निर्गुणो विश्वो ज्ञातदृश्यो ह्यसौ स्मृतः।"[6]

इत्यादिनोत्तरत्रोत्तरद्वयस्याप्येकावलम्बनेन निरूपणात्। [160b] एकस्य 20 पुरुषस्य सगुणलक्षणस्याधारं शुद्धं वक्ष्यामीत्यर्थः। बहूनां पुरुषाणां स परमात्मा श्रुत्या येन प्रकारेण योनिरुच्यते, तेनैव प्रकारेण तं पुरुषं विश्वं विराजं प्रथमं हि र ण्य ग र्भं सुमहत्तमं मयोपाधिकमीशं क्रमेण पूर्वपूर्व-प्रविलापनेन निर्गुणं ज्ञातारः स्वयमपि वि श्व तै ज स प्रा ज्ञ शु द्धे षु पूर्वपूर्व-प्रविलापनेन निर्गुणाः सन्तः सनातनं मूलरूपं प्रविशन्ति प्रविशन्तीव। 25 एकीभूता भवन्तीति गोलकार्थः। नमस्कृत्वेति॥ शुद्धाद्वैतविद्याया विशिष्ट-तमत्वात् तदुपदेशो गुरुनमस्कारपूर्वक एवोचित इति विद्योत्कर्षः सूचितः। इदमिति॥ पु रु ष सू क्त म् पुरुषस्य सगुणनिर्गुणलक्षणस्य सुष्ठूक्तम्, न मु ण्ड क-ए व, किन्तु सर्ववेदेषु ऋतं सत्यं च विख्यातं सगुणनिर्गुणार्थकत्वेनर्तसत्यरूपं सूक्तमेव विख्यातं प्रसिद्धम्। ऋषिसिंहेन व्या से न सर्ववेदालोडनेन

"अथातो ब्रह्मजिज्ञासे"[1]त्यादिना भाषितम् निरूपितम्। उत्सर्गेणेति ॥ उत्सर्गापवादसंवलितानि क पि ला दिभिः क पि ल प त ञ्ज लि गौ त म क णा-दादिभिः शास्त्राणि "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थ"[2] इत्यादिना
5 "अथ योगानुशासनमि"[3]त्यादिना "प्रमाणप्रमेये"[4]त्यादिना "अथातो धर्मं व्याख्यास्याम"[5]इत्यादिना चाध्यात्मचिन्तामाश्रित्य कथितानि भवन्ति। अत्र क पि लादिभिरनेकपुरुषवाद आहतः, व्या से न पुरुषैक्यमाहृतम्, तदेवाहं वक्ष्य इत्यनेन मतान्तरं जघन्यम्, व्या स मतमेव पारमार्थिकमिति गमितम्। अध्यात्मचिन्तामाश्रित्य शास्त्राणीत्युक्तेः पुराणेषु क पि ला दिमतसत्त्वेऽपि
10 पुराणानामन्यनिबन्धत्वात् तत्राध्यात्मचिन्तामात्राप्रस्तावात् शास्त्रपदस्वारस्यात् सूत्राण्येवात्र तत्तद्भिरचितानि ग्राह्याणि शास्त्राणीति। एवं च तत्प्रवाहे पठितं "समासत"[6]स्त्विति वाक्य"मृषिसिद्धेन भाषितमि"[7]त्यपि वाक्यं व्या स कृत-भिक्षुसूत्रपरमेव, न पुराणसाधारणवचनमात्रपरम्। अस्तु वा पुराणसाधारण-वचनपरं शास्त्रादिपदम्; तथाऽपि व्या स मतत्वेनैक्यपरत्वमेव "अथातो
15 ब्रह्मजिज्ञासे"[8]ति शास्त्रस्यापेक्षितमिति दिक्। ततोऽग्रे—"अत्राप्युदाहरन्तीम-मितिहासं पुरातनमि"[9]त्यादिना महता प्रबन्धेन रु द्र ब्र ह्म संवादं प्रस्तुत्या-खण्डार्थो निरूपितः। तानि वचनानि तत एवानुसन्धेयानि। गौरवादु-परम्यते ॥ चेतनमिति वार्तिकम्। क पि ला द्यैर्वास्तवमनेकं चेतनमवलम्ब्य निखिलानि शास्त्राणि कृतानि, तदयुक्तमिति एकपुरुषार्थम् एक एव पुरुषोऽर्थो यस्येदृशं
20 शास्त्रं भिक्षुसूत्रलक्षणं व्या स कृतमिति मो क्ष ध र्मे श्रूयते। तेन चतुरध्यायीयं सकलश्रुत्यन्तावलम्बेनाखण्डार्थप्रधाना। इति भावः ॥२९२॥

[161a] चेतनविभेदमतमेतदतिहेयं
ज्ञापयितुमद्वयमतात् प्रथममेव।
देशिकमहीकरणमादरणमस्मिन्
25 सूचयितुमेव नु विनेयकृतमत्र ॥२९३॥

पुरुषभेदमतं हेयमेव, अद्वैतमतमेव ग्राह्यमित्यत्र ज न मे ज य वै श म्पा-य न संवादगतं लिङ्गमाह—चेतनेति ॥ चेतनविभेदमतम् पुरुषनानात्वमत-

मत्यन्तहेयमिति ज्ञापयितुमद्वयमतकथनात् पूर्वं देशिकमहीकरणम् गुरु-नमस्कारादिलक्षणं विनेयकृतम् व्या स शिष्य वै श म्पा य न कृतम् अस्मिन् अद्वैतमत आदरणं सूचयितुमेव। नु वितर्के भवति। इत्यर्थः ॥२६३॥

5 [161b] सर्वनिगमान्तवचसां समरसत्वात्
साधु पुरुषैक्यमिह सादरमुपात्तम्।
ब्र ह्म शि व वादकथया कथितमग्रे
व्या स कृतशास्त्रविदितं ननु पुमैक्यम् ॥२९४॥

अत्राद्वैतमेव वै श म्पा य न वचनेन व्या स सूत्रार्थत्वेन सिद्ध्यतीत्याह—
10 सर्वेति॥

"इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव।
ऋतं सत्यं च विख्यातमृषिसिंहेन भाषितम्॥"[1]

इति निर्देशात् सर्वेषां वेदान्तानां समरसत्वेन विरोधमन्तरा समानार्थकतया साधु सम्यगबाधितमेव पुरुषैक्यमिह संवादे समुपात्तं भवति। तेन शास्त्रमिद-
15 "मथात"[2] इत्याद्यमखण्डार्थकमेव भवतीत्यर्थः। इदमेवा"त्राप्युदाहरन्ती"[3] त्यादौ निरूपितमित्याह—ब्र ह्मे ति॥ व्या स कृतशास्त्रेण भिक्षुसूत्रेण विदितं पुमैक्यम् अग्रे प्रश्नोत्तरवाक्याग्रे ब्र ह्म शि व योर्या वादकथा, तया कथितम् निरूपितम्—"निर्गुणं निर्गुणा भूत्वा"[4] "सगुणो निर्गुणो विश्व"[5] इत्यादिनेति निरवद्यम् ॥२६४॥

20 [162a] नाद्वयपरं सकलमेतदिति मत्वा
सूत्रनिकरं वदति सप्तमिकयेह।
सप्तमिकयाऽधिकरणे निगदिते स्यात्
कुत्रचन कुत्रचन चेति घटना हि ॥२९५॥

अत्र तथा वयमेनां शारीरकमीमांसां व्याख्यास्याम इत्यनुक्त्वा अस्यां शारीरक-

मीमांसायां प्रदर्शयिष्याम **इति पाठात् सर्वाधिकरणावच्छेदेन नाद्वैतं प्रदर्श्यते, किं तर्हि, क्वचित् क्वचिदेवेति सूचनायास्यामिति सप्तम्या निर्देश इत्याह**— नेति ॥ **सकलमेतद् भिक्षुसूत्रं नाद्वयपरं भवितुमर्हति ; अद्वयातिरिक्त-पञ्चाग्निविद्यादीनामपि निरूपणात्, इति मत्वा** सूत्रनिकरं सप्तमिकया अस्यां शारीरकमीमांसाया**मिति** इह **वाक्ये भाष्यकृद्** वदति । सप्तमिक्याऽधिकरणे **सूत्र-लक्षणे निर्दिष्टे सति कुत्रचित् कुत्रचिदित्यर्थघटना भवेद्।** हि **अस्मिन् वने आम्रं दर्शयिष्याम इत्युक्ते क्वचित् क्वचिदाम्रस्तिष्ठतीति सिद्ध्येत्, एतद्वनमाम्रं दर्शयिष्याम इत्युक्ते तु सर्वं वनमाम्रमयमित्युक्तं स्यात्, तद्वद् मा भूदिति सप्तमी समादृता । इति भावः ॥२६५॥**

[162b] सूत्रमिदमादिममथात इति शास्त्रेऽ-
स्मिन्निति विशेषरहितं गुरुवरोऽयम् ।
वक्ति पुरतो विविधयोजनतयैतद्
वक्तुमखिलैरपि मतैः स्वमतशुद्ध्यै ॥२९६॥

वेदान्तमीमांसाशास्त्रस्य व्याचिख्यासितस्येदमादिमं सूत्र**मिति प्रथमसूत्रावतारणभाष्ये प्रतिज्ञापरम्, विचारपरम्, तत्कर्तव्यतापरमित्यादिविशेषनिर्देशं विना** आदि-म**मिति सामान्यरूपेण निर्देशात् सूत्रयोजनानि बहूनि पूर्वपक्षरूपाणि सन्ति, सिद्धान्तयोजनं चास्तीति ज्ञापितं भवतीत्याह**—सूत्रमिदमिति ॥ अस्मिन् **भिक्षुशास्त्रे ।** "अथातो ब्रह्मजिज्ञासे"[1]**ति** सूत्रमादिमं **भवतीति** विशेषरहितम् **प्रतिज्ञापरमित्यादिविशेषरहितम् ।** गुरुवरोऽयम् **श्री श ङ्क र भगवत्पादः । पुरतः अग्रे विवेचनावसरे ।** एतत **सूत्रमखिलैरपि मतान्तरै**र्विविधयोजनतया **कथयितुं स्वमतपरिष्करणाय** वक्ति । **तथाच परमतमनूद्य तन्निराकारणेन स्वमतं परिष्कृतं वक्तुं सूत्रे विशेषांशो नोक्तः । विशेषांशग्रहणे मतान्तर-शङ्कानवतारेण तद्दूषणसूचनं सङ्ग्रहेण न स्यात् । इति भावः ॥२९६॥**

[163a] सर्वमतरीतिमनुसर्तुमिह सूत्रेऽ-
ग्रे च परमत्र विशयादि न निरुक्तम् ।

संशयपुरःसरमुपात्तमिह चेत्स्या-
न्निर्णयवशात् परमतं न घटितं स्यात् ॥२९७॥

अथ—

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
5 निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥"[1]

इत्यधिकरणलक्षणस्य सर्वसम्मतत्वात् प्रकृते सूत्रेऽधिकरणत्वसम्पत्तये संशयादिकं किमिति नोक्तमित्याशङ्क्यानुक्तौ प्रयोजनमाह—सर्वेति ॥ इह परत्र सूत्रे च जिज्ञासासूत्रे जन्मादिसूत्रे च सर्वमतरीतिम् सर्वमतयोजनाभेदम् अनुसर्तुम् परिग्रहीतुम् संशयादिकमिह न परिगृहीतम् । परिगृहीतं चेत्, संशये 10 कोटिद्वयस्य विशेषरूपत्वाद् मतान्तरयोजनं निर्णयवशादन्यतमपक्षनिर्णयाद् घटितं न स्यात् । अतः संशयादि न निबद्धम् । इति भावः ॥२९७॥

आदिममिदं श्रुतिवचोविवृतये चे-
त्सर्वमपि भाष्यवचनं समुचितं स्यात् ।
नैवमिति यद्यपरपक्षपरमेतत
15 तर्हि हि परस्परविरुद्धघटनं स्यात् ॥२९८॥

अथ जिज्ञासासूत्रार्थत्वेन बहुषु पक्षेषु सत्सु कतमः सिद्धान्तपक्षः कतमे पूर्वपक्षा इति निर्णयाभावात् सर्वेऽपि पक्षाः समा एव स्युरित्याशङ्क्य सिद्धान्तपक्षं सयुक्तिकं दर्शयति—आदिममिति ॥ आदिममिदं सूत्रं जिज्ञासालक्षणम् श्रुतिवचोविवृतये श्रुतिवाक्यव्याख्यानाय भवति चेत्, तर्हि सर्वमपि 20 प्रकृतसूत्रभाष्यवचनं समुचितम् सङ्गतार्थतया भवेत् । नैवमिति ॥ श्रुतिव्याख्यापरं न भवतीति यदि पक्षान्तरपरमेव भवेत्, तर्हि भाष्यमिदं परस्परविरुद्धघटनमेव भवेत् । तस्मात् श्रुतिव्याख्यानपरमेवेति कल्प एव सिद्धान्तः । इति भावः । भाष्यं श्रुतिव्याख्यानपक्ष एव स्वरसमिति दर्शयिष्यामः ॥२९८॥

[163b] आश्रवपरं प्रथमसूत्रमिति केचित्
25 सच्चिदमलाद्वयविचारपरमन्ये ।

केचन विवेचनपराः प्रतिपदिच्छा-
सम्पदनुवादनपरं परमिहाहुः ॥२९९॥

अथ सिद्धान्तपक्षवत् पक्षान्तराण्यपि दर्शयति—आश्रवेति ॥ आश्रवपरम् ब्रह्मविचारोऽधिक्रियत इति प्रतिज्ञापरं प्रथमसूत्रमिति केचिदूचुः। अन्ये साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मविचारो भवति, ब्रह्मविचारः कर्तव्य इति वेतीदं सूत्रं विचारपरमाहुः। केचन तु वाक्यविवेचनपराः साधनचतुष्टय-सम्पत्त्यनन्तरं प्रतिपदिच्छासम्पदनुवादनपरम् ज्ञानेच्छासम्पत्त्यनुवादपरम् परम् उत्कृष्टं यथा भवति तथा प्राहुः। इत्यन्वयः ॥२९९॥

ति त्ति रि गिरीव न परल विशयादि-
स्सर्ववचनान्यपि समानि विषयाः स्युः।
ति त्ति रि वचस्युपनते विशयपूर्वेऽ-
न्यानि वचनान्यविषया इति मतिः स्यात् ॥३००॥

अथ "तद् विजिज्ञासस्व। तद् ब्रह्मे"[1]ति ति त्ति रि वचसि लक्ष्यार्थप्रत्यभि-ज्ञानात् ति त्ति रि वाक्यमिदं विषयतया भाष्ये किमिति नोदाहृतमित्याशङ्क्या-नुदाहरणे निमित्तमाह—ति त्ति री ति ॥ सर्ववचनानि "परीक्ष्य लोकानि"[2]ति "श्रोतव्य"[3] इति "तद् विजिज्ञासस्वे"[4]ति। एवमन्यान्यपि समानि समानार्थानि विषया भवन्ति, नैकैव ति त्ति रि गीः, परन्तु ति त्ति रि गिरीव परल विशायदिर्नो-देति। एवं च ति त्ति रि वचसि विशयपूर्वे संशयपूर्वपक्षादावुपनते सति नम्रे सति तत्रैवाधिकरणस्य सावयवं विश्रान्तेर्मु ण्ड का दी नि वचना-न्येतत्सूत्राविषया इति भ्रमः स्यात्। तद्द मा भूदिति ति त्ति रि वचनमपि नोदाहृतम्। इति विवेचनीयम् ॥३००॥

[164a] अन्यमतयोजनमपाकरणमेषा-
मात्ममतसाधनमनाकलितदोषम्।

अश्रवणमेकसरणिश्रयणरीते-
रार्यवचसां गतिरियं जयति रम्या ॥३०१॥

अथैतत्सूत्रभाष्यं बह्वर्थकत्वेन गूढव्यङ्ग्यत्वेन च गभीरार्थत्वाद् विलक्षणं कवनमिति महयति—अन्येति ॥ अस्मिन् सूत्रेऽन्यमतयोजनम् मतान्तरयोजनम्, 5 एषाम् मतानाम् अपाकरणम् निराकरणम्, अनाकलितदोषम् अस्पृष्टदोषम् आत्ममतसाधनम् सिद्धान्तस्वीयमतसाधनम्, अत्रेदं मतमत्रेदं मतमिति एकसरणिश्रयणरीतेः एकतरमार्गश्रयणमर्यादायाः अश्रवणम् श्रवणाभाव इत्यादि-गहनार्थत्वादार्यवचसाम् देशिकवचनानाम् गतिः उत्तमकाव्यमर्यादा रम्या लोकोत्तरा जयति सर्वोत्कर्षेण प्रकाशते। एवं च गहनतरैतद्भाष्यभाव-10 परिज्ञानं देशिककृपयैव सम्प्रदायतः श्रवणाद् भवति, नान्यथा। इति भावः।३०१॥

[164b] सन् वदति सन्विधिसमुल्लिखितवाञ्छा-
मित्युपकल्प्य कथयन्त्यथपदार्थम्।
नाधिकृतिरर्थ इह नो खलु परत्वे-
15 च्छाविषयचर्चनमसौ न कृतिसाध्या ॥३०२॥

अथ "अथातो ब्रह्मजिज्ञासा"[1]। तत्राथशब्द आनन्तर्यार्थः परिगृह्यते, नाधिकारार्थः; ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्यं सभावं व्याचष्टे—सन् वदतीति ॥ "धातोः कर्मणः समानकर्तृकादिच्छायां वे"[2]ति सन्विधिशास्त्रेण समुल्लिखितां वाञ्छां ब्रह्मजिज्ञासेति सन् वदतीति उपकल्प्य विचार्य ब्रह्मज्ञाने-20 च्छाऽत्र विवक्षितेति मनसि निधायाचार्या आनन्तर्यार्थमथपदार्थं कथयन्ति। अधिकृतिः अधिकार इह नाथपदार्थः—ब्रह्मज्ञानेच्छेहाधिक्रियत इति; "अथ शब्दानुशासनम्"[3] "अथ योगानुशासनमि"[4]त्यादावनुशासनस्याधिकार्यत्वात्, उत्तरत्र शब्दयोगचर्चादर्शनात्, प्रकृते यद्यथपदमधिकारार्थं स्यात्, तर्ह्युत्तरत्र तच्चर्चा कृता स्यात्। न ह्युत्तरत्र ज्ञानेच्छाचर्चनमुपलभ्यते। किञ्च शब्दानु-25 शासनम् शब्दचर्चनम्, तदुत्तरत्र कृतिसाध्यमुपलभ्यते। तद्वद् जिज्ञासा-

ऽधिकृता चेत्, जिज्ञासा कृतिसाध्योत्तरत्र दृश्येत। न च दृश्यते। तस्माद् नाधिकारोऽथपदार्थ इह भवितुमर्हति ॥२०२॥

[165a] नाथपदवाच्यमिह मङ्गलमुपेयं
वाक्यविषये हि न तदन्वितमिहार्थे।
5 मङ्गलमथेतिपदसंश्रवणमेवा-
र्थाद् भवति नाथपदवाच्यमिदमेव ॥२०३॥

मङ्गलस्य च वाक्यार्थे समन्वयाभावात्। अर्थान्तरप्रयुक्त एव ह्यथशब्दः श्रुत्या मङ्गलप्रयोजनो भवतीति **भाष्यं योजयति**—नेति॥ मङ्गलमथपदवाच्यं नोपेयम्। वाक्यविषयेऽर्थे तद् **मङ्गलं** नान्वितं **भवति**। हि **मङ्गलं जिज्ञासा भवतीति**
10 **कथने प्रयोजनाभावात्, जिज्ञासाया दधिदूर्वादिदर्शनवद् मङ्गलत्वबोधकमानाभावेन वाक्यार्थस्य बाधितत्वात्,**

"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥"[1]

**इति श्रवणतो मङ्गलप्रयोजनकावित्येवेष्टत्वात्, इतरथा मङ्गलं जायत इति**
15 **वक्तव्येऽथ जायत इत्यपिप्रयोगापत्तेः। अतो मङ्गलं नाथपदार्थः। इति वर्तुलार्थः** ॥२०३॥

[165b] निर्मलमनन्तरमथेतिपदवाच्यं
पूर्वविदिताश्रयणमप्यथ तदेव।
सन्नभिहितं तु यदनन्तरभवं तत्
20 किं भवति कीदृगिति सम्प्रति विचार्यम् ॥२०४॥

**अथ** अथशब्द आनन्तर्यार्थ **इति भाष्यार्थमनुवदन्** पूर्वप्रकृतापेक्षायाश्च फलत आनन्तर्याव्यतिरेकादिति **भाष्यं पक्षान्तरस्यानन्तर्येऽन्तर्भावपरं विवृण्वन्** सति चेति **भाष्यमवतारयति**—निर्मलमिति॥ अथेतिपदवाच्यमनन्तरम् **आनन्तर्यम्** निर्मलम् **निर्दोषं भवति**। अथ **प्रकृतापेक्षत्वमेवाथपदार्थोऽस्त्वित्याशङ्क्य**

प्रकृतापेक्षत्वमानन्तर्यात्मकमेव पर्यवस्यतीत्येतदेवाह—पूर्वेति ॥ पूर्वविदिता-
श्रयणमपि तदेव आनन्तर्यमेव। अत्र श्लोकेऽथपदं पक्षान्तरपरम्। सन्निति ॥
जिज्ञासेतिसनाऽभिहितमिच्छा वा इच्छाधीनविचारो वा यदनन्तरभवम्
यस्मादनन्तरं जायमानं भवति, तदानन्तर्यप्रतियोगि किं वस्तु भवति, कीदृक्
5 किम्प्रकारकं तद् भवतीति सम्प्रति आनन्तर्याव्यतिरेकादिति विचारोत्तरकाले
विचार्यं भवति। अत्र भाष्यम्—सति चानन्तर्यार्थत्वे यथा धर्मजिज्ञासा पूर्ववृत्तं
वेदाध्ययनमपेक्षते, एवं ब्रह्मजिज्ञासाऽपि यत् पूर्ववृत्तं नियमेनापेक्षते तद् वक्तव्यमिति।
इदं च सन्नभिहितमित्यर्थेन विवृतप्रायं भवति। धर्मजिज्ञासाया नियमेन
पूर्ववृत्तं वेदाध्ययनम् "अथातो धर्मजिज्ञासे"[1]त्यत्राथशब्दानन्तर्यप्रतियोगि यथा
10 भवति, तथा "अथातो ब्रह्मजिज्ञासे"[2]त्यत्राप्यथशब्दार्थानन्तर्यप्रतियोगि किञ्चिद-
पेक्षितम्। तत् किं भवेत्। तद् वक्तव्यम्। इत्यर्थः ॥३०४॥

[166a] अध्ययनमत्र बहिरङ्गमविशेषा-
त्संनिहितसाधनपरिग्रहणयोगे।
सङ्ग्रहणमर्हति कदाऽपि न किलैत-
15 त्तेन तदनन्तरमितीह नहि वाच्यम् ॥३०५॥

अथ धर्मविचारो वेदाध्ययनमन्तरा न भवेदिति यथा धर्मविचारात्
पूर्वनियतं वेदाध्ययनमानन्तर्यप्रतियोगितया स्वीकृतम्, तथा ब्रह्मविचारस्यापि
वेदाध्ययनं विनाऽनुपपत्तेर्वेदान्तोपनिषद्विचारात्मकत्वात् तस्य, तत्रापि
वेदाध्ययनमेवानन्तर्यप्रतियोगि भवत्विति शङ्कापरिहाराय प्रवर्तितम्—
20 स्वाध्यायानन्तर्यं तु समानमिति भाष्यम्। तत्र तावदनेन भाष्येण सा शङ्का
न निवार्यते; धर्मब्रह्मजिज्ञासयोर्द्वयोरपि वेदाध्ययनसाध्यत्वात्, वेदाध्यय-
नस्य जिज्ञासाद्वयसाधारणत्वाद् धर्मजिज्ञासायामिव ब्रह्मजिज्ञासायामप्यान-
न्तर्यप्रतियोगित्वसम्भावनया धर्मजिज्ञासानन्तर्यप्रतियोगित्वमपि न स्यादिति
शङ्कां भाष्यस्यास्य न्यायविशेषप्रदर्शकत्वेन परिहरति—अध्ययनमिति ॥ यद्यपि
25 धर्मब्रह्मजिज्ञासयोः साधारणं वेदाध्ययनमङ्गं भवति; तथाऽपि ब्रह्मजिज्ञासायां
वेदाध्ययनं बहिरङ्गम्। संनिहितं चान्यदङ्गं वर्तत एव साधनचतुष्टयलक्षणम्।

**एवं च संनिहितसाधनानन्तर्ये सम्भवति व्यवहितसाधनानन्तर्यपरिग्रहोऽनुचित इति न्यायेनानन्तर्यप्रतियोगितया** संनिहितसाधनपरिग्रहणयोगे **सति** एतत् **व्यवहितसाधनं वेदाध्ययनमानन्तर्यप्रतियोगितया** कदाऽपि **ग्रहणं** नार्हति किल । तेन **हेतुना वेदाध्ययनानन्तरमिति प्रकृते** न वाच्यम् । **इत्यन्वयः** ॥३०५॥

5 [166b] पूर्वनियतं सदथ धर्मविषये तु
स्यात्प्रतिविबन्धि ननु वेदपठनं स्यात् ।
धर्मपरचर्चनमिह प्रथमवृत्तं
स्यादपि परं त्वनियतं भवति तद्धि ॥३०६॥

**अथ** नन्विह कर्मावबोधानन्तर्यं विशेष **इति पूर्वपक्षभाष्यम्**, न ; धर्मजिज्ञासायाः
10 प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति **सिद्धान्तभाष्यं च सङ्ग्रहेण तात्पर्यतो विवृणोति**—पूर्वेति ॥ तद्वेदपठनम् **जिज्ञासाद्वयसाधारणं वेदपठनम्** धर्मविषये पूर्वनियतं सत् प्रतिविबन्धि **आनन्तर्यप्रतियोगि** स्यात् । ननु **निश्चयेन** । इह **ब्रह्मजिज्ञासाविषये** धर्मपरचर्चनम् **धर्मविचारो ब्रह्मजिज्ञासातः** प्रथमवृत्तं स्यादपि । **तेनानन्तर्यप्रतियोगित्वं तस्य सम्भावितमपि । परन्तु** तत् **धर्मचर्चनम् ब्रह्म-**
15 **जिज्ञासातः पूर्वं नियतं न** भवति । **अनेन श्लोकेन** नन्वित्यादि नेत्यन्तं **भाष्यं विवृतं भवति** ॥३०६॥

धर्मपरचिन्तनमृतेऽपि परमात्मै-
क्यविषयं भवति चिन्तनमनर्घ्यम् ।
वेदपठनादधिगतोपनिषदंशो
20 ब्रह्मविषयं ननु विचारमधिगच्छेत् ॥३०७॥

**ब्रह्मजिज्ञासातः पूर्वं धर्मविचारो न नियत इत्येतद् विशदयति**—धर्मेति ॥ **धर्मचिन्तन**मृतेऽपि परमात्मैक्यविषयम् **जीवेशैक्यविषयम्** अनर्घ्यम् **सर्वोत्तममविद्यानिवर्तनक्षमं** चिन्तनं भवति । वेदपठनात् **सर्ववेदाध्ययनात्** अधिगतोपनिषदंशः **प्राप्तोपनिषद्भागो जनो जन्मान्तरकृतपुण्यपुञ्जपरिपूतहृदयः**

ब्रह्मविषयं विचारमधिगच्छेदेव प्राप्नुयादेव । अनेन धर्मजिज्ञासाया इत्यादि भाष्यं विवेचितं भवति । इति वेदितव्यम् ॥३०७॥

[167a] वेदपदतोऽन्तपदमत्र यतिराजो
हेतुमुपपादयितुमेव समवोचत् ।
5 वेदशिरसोऽध्ययनमात्मविषयायां
हेतुरुचितो ननु विचारभुवि तीव्रः ॥३०८॥

अथ अधीतवेदान्तस्येत्यत्र भाष्येऽन्तग्रहणं किमर्थम्, अधीतवेदस्येत्यनेनैव सर्ववेदपरिग्रह उपनिषदंशस्यापि परिग्रहादित्याशङ्कयान्तग्रहणप्रयोजनं दर्शयति—वेदेति ॥ वेदपदतः परस्तादन्तपदमत्र भाष्ये यतिराजः श्री श ङ्क रा-
10 चा र्यः ब्रह्मजिज्ञासाहेतुस्वरूपं विशिष्य दर्शयितुमेव समवोचत । उपनिषदं-शस्यैव ब्रह्मविचारहेतुत्वम्, न तु कर्मकाण्डवेदभागस्यापीत्याह—वेदेति ॥ वेदशिरसः वेदान्तस्य अध्ययनमात्मविषयायां विचारभुवि ज्ञानभुवि उचितस्तीव्रो मुख्यो हेतुः । ननु निश्चयेन । हेतुगर्भविशेषणत्वेन अधीतवेदान्तस्येत्यन्तग्रहणं कृतमिति न कोऽपि विरोधः । इति भावः ॥३०८॥

15 [168b] यत् पतितापहरणं नियतमेतद्
विश्रुतमथोपनयनं यदनुविद्यम् ।
तन्न नियतं महति साधकवरे स्यात्
संन्यसनमत्र पुरतश्च परतश्च ॥३०९॥

[167b]अथाधीतवेदान्तस्येत्यन्तग्रहणे क्रमेणाधीते वेद उपनिषदंशोऽप्यधीत
20 एव भवति, परन्त्वन्तग्रहणमुपनिषदंशस्यासाधारणसाधनतासूचनायेत्युक्तम्, तत् किमर्थं तथोच्यते । क्रमेण "अष्टवर्षं ब्राह्मणमुपनयीत । तमध्यापयीते"[1]ति सर्ववेदाध्ययनाभावेऽपि प्रथमत एवोपनिषदध्ययनं यस्य, तदभिप्रायेणा-धीतवेदान्तस्येति कथितम् । तथाहि आरणके—"सोपनयनादूर्ध्वं स तानि प्राग्वा त्यजेदि"[2]ति नित्यकर्मणां संन्यासस्तावदुपनयनादूर्ध्वं प्राग्वा विहितः ।

एवं च जन्मान्तरकृतपुण्यपुञ्जेन सञ्जातवैराग्यस्योपनयनात् प्राक् संन्यासे सत्य"ष्टवर्षमि"[1]त्यादिशास्त्राधीनक्रमवेदाध्ययनाप्रसक्तेः प्रागेव संन्यासिनः "सर्वेषु वेदेष्वारण्यमावर्तयेत्। उपनिषदमावर्तयेदि"[2]त्युपनिषदध्यनविधानादुपनयनात् प्राक् कृतसंन्यासोऽधीतवेदान्त एव भवति, नाधीतवेद इति प्रकारान्तरे-
5 णैवान्तग्रहणं सार्थकमिति। तदेतद् न सम्भवति। तथाहि—द्विविधमुपनयनम्, पतितसावित्रीकत्वापहरणम्, विद्याङ्गं चेति। "आषोडशाद्ब्राह्मणस्य। आ विंशात् क्षत्रियस्य। आ चतुर्विंशाद् वैश्यस्य। अत ऊर्ध्वं पतितसावित्रीका भवन्ति। नैनानुपनयेत्। नाध्यापयेत्। नैतैः सह संवसीते"[3]ति पातित्याभावकरमुपनयनमाद्यम्। "शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः
10 पप्रच्छ"[4]। "महाशाला महाश्रोत्रियाः तान् ह्यनुपनीयैवोवाच। प्रतिलोमं वा एतद् यद् ब्राह्मणः क्षत्रियमुपेयात्[168a]व्येव त्वा ज्ञपयिष्यामी"[5]त्यादौ विद्याङ्गभूतमुपनयनं कृताकृतं समाम्नातम्। यत्तावदाद्यं पातित्यापहरणाय विहितम्, तत्तावत् त्रैवर्णिकानां नियतमेव भवति। तस्मिन्नुपनयने जाते क्रमेणाक्रमेण वा तथैव वैदिकाचाराध्ययनं प्राप्तमेवेति वेदान्तग्रहणं प्रागुक्तरीत्यैव
15 हेतूपपादनपरं योजनीयम्। तत्तद्विद्याङ्गभूतमुपनयनं तु कृताकृतमित्यपि नियतम्। तदेवोपनयनं "स खलु वेदार्थं विद्वान् सोपनयनादूर्ध्वं स तानि प्राग्वा त्यजेदि"[6]त्यारणकवाचि परिगृहीतं भवति। गुरुसविधे ब्रह्मविद्यार्थं गमनानन्तरं वा ब्रह्मचर्याद्याश्रमत्रयविहितस्योचितान्यतमस्य प्राप्तस्य त्यागः, गमनात् पूर्वं वा संन्यास इति किलारणकवागर्थः। इतरथा "स खलु
20 वेदार्थं विद्वानि"[7]ति कथनमनर्थकं स्यात्। तस्माद् नित्योपनयनानन्तरं प्रायः सर्ववेदाध्ययनादापाततो वेदार्थं विद्वान् नित्यानित्यवस्तुविवेकवैराग्यादिसम्पत्त्या गुरूपसदनात् प्राग्वोर्ध्वं वा सम्भाविताश्रमानाश्रमोचितकर्म संन्यसेदिति। तथाच नित्योपनयनात् प्राक् संन्यासविधिपरमारणकवाक्यमित्येतदनुचितमेव। यदपि "सर्वेषु वेदेष्वारण्यमावर्तयेत्। उपनिषदमावर्तयेदि"[8]-
25 त्युपन्यासविधिपरमारणकवाक्यमिति, तदनुचितमेव। यदपि "सर्वेषु वेदेष्वारण्यमावर्तयेत्। उपनिषदमावर्तयेदि"[9]त्युपनिषद्भागाध्ययनविधिरिति, तदपि नातीव रमणीयम्। अत्राधीतस्यावृत्तिरेवोच्यते, नापूर्वं विधीयते; आवृत्तिपदस्यापूर्वविधिपरत्वे लक्षणापत्तेः। तदेतत् त्रिभिः श्लोकैर्विशदयति। तत्रादौ नित्योपनयनम्। पश्चाद् विद्याङ्गोपनयनम्। विद्याङ्गोपनयनात् प्रागूर्ध्वं

वा संन्यास इति च निरूपयति—यदिति ॥ यत् पतितापहरणम् पतितसावित्री-
कत्वापहरणदक्षम् एतदुपनयनं नियतं विश्रुतं श्रुतिस्मृतिषु । यत् तावदनुविद्यम्
विद्यामनुरुध्य वर्तमानम् , तत्तावद् न नियतम् कृताकृतम् । "महाशाला
महाश्रोत्रियाः । तान् हानुपनीयैवोवाच"[1] "ब्राह्मणः क्षत्रियमुपेयादि"[2]ति च । महति
5 जने साधकवरे नियतं न स्यादित्यन्वयः । अत्रेदशोपनयनविषय आरणको-
दितं संन्यसनं पुरतः विद्याङ्गोपनयनात् पुरतश्च परतश्च विहितं भवति ।
इत्यर्थः ॥३०९॥

[169a] आरणकवाग् वदति वेदमवलम्ब्य
न्यासमनुविद्यमुदितोपनयनात्प्राक् ।
10 ऊर्ध्वमपि नैयमिकतो न खलु यस्मात्
खल्विति समस्तभुवनप्रथितवेद्यम् ॥३१०॥

पूर्वोक्तसंन्यासमेवोपनयनपौर्वापर्यांशेन विवेचयति—आरणकेति ॥ "स खलु
वेदार्थं विद्वान् सोपनयनादूर्ध्वं स तानि प्राग्वा त्यजेदि"[3]त्यारणकवाक् वेदमवलम्ब्य
"स खलु वेदार्थमि"[4]ति वेदमधीतमाश्रित्य । अनुविद्यम् विद्यां लक्ष्यीकृत्य ।
15 विहितादुपनयनात् प्रागप्यूर्ध्वमपि वा संन्यासं वदति नो खलु । नैयमिकात्
नित्याद् नित्यनिवर्तकात् पुरतः परतो वा संन्यासं वदति । यस्मात् कारणात्
खल्विति वाक्यं समस्तभुवनप्रथितवेद्यम् न्यायविचारं विनैव सर्वजनानामपि
पण्डितपामरलक्षणानां प्रथितवेद्यम् प्रसिद्धवेद्यम् । बोधकमिति यावत् ।
तथाच नायं शास्त्रार्थः सन्दिग्धः, किन्तु निर्णीत एव । इति भावः ॥३१०॥

20 आरणकवेदशिरसोरपि विशेषा-
दभ्यसनमेव विहितं यदनुघस्रम् ।
नैव पुनरध्ययनमत्र विहितं त-
ल्लाक्षणिकता च न विधौ समुचिताऽपि ॥३११॥

यत्तावदुक्तम्—"सर्वेषु वेदेष्वारणमावर्तयेत् । उपनिषदमावर्तयेदि"[5]ति वाक्यं
25 संन्यासिनमुद्दिश्यापूर्वमध्ययनमारणोपनिषद्विषये विधत्त इति, तदयुक्तमि-

त्याह—आरणकेति ॥ आरणोपनिषदोरावर्तयेदित्यनुदिनमभ्यास एव विहितो भवति, न त्वपूर्वमध्ययनं विधीयते। किञ्च "न विधौ परः शब्दार्थ"[1] इति लाक्षणिकताऽऽप्यावर्तनपदस्याप्यध्ययने नोचिता। इति गोलार्थः ॥३११॥

[169b] अव्यभिचरन् भवतु कर्मपरिबोधो
5 ब्रह्मपरिचिन्तनमनन्तरमतोऽस्तु ।
एकफलकेषु बहुषु क्रमविशेषो
माननियतो नहि विचारयुगलेऽस्मिन् ॥३१२॥

यत्तावत् धर्मजिज्ञासायाः प्रागपीति वाक्ये ब्रह्मजिज्ञासातः पूर्वं न नियता धर्मजिज्ञासेत्युक्तम्, तदयुक्तम्; क्रमेणैव वेदाध्ययनात् तेनैव क्रमेण
10 स्वाध्यायविधिना विचारप्रापणाद् ब्रह्मजिज्ञासातः पूर्वं कर्मजिज्ञासा नियतैवेति शङ्कते—अव्यभिचरन्निति ॥ उक्तरीत्या कर्मपरिबोधोऽव्यभिचरन् भवतु पूर्वभावी, ब्रह्मपरिचिन्तनमतः अस्मात् कर्मबोधादनन्तरम् अस्तु भवतु। एवं च व्यभिचारात् कर्मावबोधानन्तर्यं नाथपदार्थ इत्यसङ्गतमिति भावः। उक्तं दोषं सार्धेन श्लोकेन समुद्धरन् यथेत्यादिग्रन्थमवतारयति—एकेति ॥ एकफलकेषु
15 एकसाध्यकेषु बहुषु साधनेषु कर्तव्येष्वेकप्रयोगपरिगृहीतेषु "अग्नीषोमीयं पशुमालमेत"[2] "एकादश पशोरवदानानि। तानि द्विर्द्विरवद्यति। हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः"[3] इत्यत्रावदानानां "श्रुत्यर्थपठनस्थानमुख्यप्रावृत्तिकाः क्रमा"[4] इति पाठक्रमायत्तानुष्ठानक्रमादानन्तर्यनियमः। एवं "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"[5] त्यादौ दर्शपदवाच्यानां त्रयाणां पूर्णमासपदवाच्यानां च त्रयाणामङ्ग-
20 भूतानां प्रयाजानूयाजानां प्रधानाङ्गयोश्चानन्तर्यनियमो मानाधीनक्रमायत्तो भवति। तथाचैकप्रयोजनकेष्वेकप्रयोगपरिगृहीतेषु मानायत्तक्रमेणानन्तर्यनियमो भवतीति गोलार्थः। एवं च हृदयाद्यवदानेष्विव मीमांसयोरानन्तर्यनियमे नियामकः प्रमाणायत्तक्रमविशेषो नास्तीत्यर्थः। एतेन यथा च हृदयाद्यवदानानामित्यादिभाष्यं शेषशेषित्वांशसमेतं विवृतं भवति ॥३१२॥

25 [170a] अङ्गविधमेतदिदमङ्गिविधमित्थं
चाधिकृतिरन्यविषयाऽधिकृतजन्तोः ।

इत्यनुचितं भवति मानविरहेणे-
त्यादिशति देशिकमणिः खलु यथेति ॥३१३॥

अथ शेषेत्यादिभाष्यभावं विशदयन् यथा चेत्यादि सर्वं भाष्यं युगपद-वतारयति—अङ्गेति ॥ मीमांसयोर्मध्य एकमङ्गप्रकारमितरदङ्गिप्रकारम्, प्रयाजानूयाजा इव दर्शपूर्णमासाविव चेति। इत्थं च अन्यविषयाधिकृतजन्तोः अन्यविषयेऽधिकृतिः "एष वा प्रथमो यज्ञो यज्ञानां यद् ज्योतिष्टोमः। अथैतेनेष्ट्वाऽन्येन यजेते"[1]ति ज्योतिष्टोमाधिकृतस्यैवान्यक्रतावधिकार इति च एकजिज्ञासाधि-कृतस्यापरजिज्ञासाधिकार इत्येतन्मानविरहेणानुचितं भवति। एवं च मीमांसयोरानन्तर्यनियमः क्रमे मानाभावादनुचित इति देशिकमणिः श्री-शङ्करवर्यो यथेत्यादिना आदिशति उपदिशतीत्यर्थः। एतेन शेषशेषित्व इत्यादिभाष्यं विवृतप्रायं विज्ञेयम् ॥३१३॥

[170b]　बोधकगिरोः फलविचार्यवपुषां चा-
त्यन्तमपि दीप्तितमसोरिव विभेदात्।
नैव नियमात् समुचिता क्रमविवक्षा
धर्मपरमात्मपरचिन्तनयुगस्य ॥३१४॥

अथ मीमांसयोः क्रमनियमो नेत्यत्र हेत्वन्तरं फलजिज्ञास्यभेदाच्च चोदना-प्रवृत्तिभेदाच्चेति सूत्ररूपं भाष्यद्वयं सविवरणं श्लोकाभ्यां विवृणोति—बोधकेति ॥ बोधकगिरोः कर्मब्रह्मवचसोः प्रवर्तकत्वाप्रवर्तकत्ववैलक्षण्यात् फलवपुषोरनुष्ठान-साध्यत्वज्ञानलभ्यत्ववैलक्षण्यात् विचार्यवपुषोः साध्यत्वसिद्धत्ववैलक्षण्या-दत्यन्तं दीप्तितमसोरिव प्रकाशतमसोरिव विभेदाद् वैजात्यात् धर्मपरमात्मपर-चिन्तनयुगस्य धर्मब्रह्ममीमांसायुगलस्य नियमेन क्रमविवक्षोचिता न भवति। एकजातीयत्वे सत्येकनिरूपणानन्तरं प्रसङ्गात् तत्सजातीयमन्यदपि निरूपणार्हं भवेन्नियमेन। नचैकजातीयत्वमस्ति। इति भावः ॥३१४॥

[171a]　एकविध एव यदि वेद्यनिकरः स्या-
न्माननिचयोऽपि यदि तादृशगुणेद्धः।

एकफलको यदि विवेच्यसमवाय-
स्तर्हि नियमेन भवति क्रमविवक्षा ॥३१५॥

उक्तमेवार्थं विशदयति—एकेति ॥ यदि वेद्यनिकरः जिज्ञास्यसमुदायः एकविध एव स्यात् एकजातीय एव स्यात्, माननिचयोऽपि प्रमाणसमुदायोऽपि 5 यदि तादृशगुणेद्धः एकविधत्वगुणसमिद्धः स्यात्, विवेच्यसमवायः जिज्ञास्य-समुदायः यदि एकफलकः एकजातीयफलकः स्यात्, तर्हि नियमेन क्रमविवक्षा भवति; प्रसङ्गसङ्गत्योक्तरीत्या निरूपणसम्भवात्। तथाचैकजात्याभावाद् न क्रमो घटते। इति भावः ॥३१५॥

वेदविदितत्वपुरुषाभिलषितत्वा-
10 म्नायमयताभिरियमेकविधता तु।
त्रिष्वपि तथासति परात्मपरचिन्ता
धर्मपरचिन्तनपरा भवतु भव्या ॥३१६॥

अथ फलजिज्ञास्यमानभेदेन क्रमनियमो नेत्युक्तमाक्षिपन् फलजिज्ञास्यभेदाच्च चोदनाप्रवृत्तिभेदाच्चेति भाष्यद्वयमप्यसङ्गतार्थमिति सूचयति—वेदेति ॥ 15 फलजिज्ञास्यभेदाच्चेति भाष्यात् पूर्वमुपकार्योपकारकभावप्रयुक्तक्रमायत्तानन्तर्य-नियमो नेति वर्णितम्, फलवाक्यप्रभृति तु धर्ममीमांसायां द्वादशलक्षण्याम्

"सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते॥"[1]

इति [171b]सङ्गतिप्रयुक्तानन्तर्यमिव प्रकृतेऽपि प्रसङ्गादिसङ्गतिप्रयुक्तानन्तर्यं 20 वक्तव्यम्, तद् न सम्भवति; फलादिवैजात्येन प्रसङ्गादिसङ्गतेरेवाप्रसक्तेरिति कथितम्। तदेतद् मन्दम्, फलजिज्ञास्यमानेष्वेकजातीयत्वसम्भवेन प्रसङ्गादि-सङ्गतेः सम्भवात्, जिज्ञास्ययोः कर्मब्रह्मणोः साध्यत्वसिद्धत्वलक्षणावान्तर-भेदस्य सत्त्वेऽपि वेदविदितत्वलक्षणैकधर्मवत्त्वात्, मानयोरपि नियोजक-त्वानियोजकत्वभेदेऽप्याम्नायमयत्वलक्षणैकधर्मवत्त्वात्, फलजिज्ञास्यमानेषु 25 त्रिष्वपि मीमांसयोरियं निरक्तैकविधता वर्तत एव। एवं च सति परा-

त्मपरचर्चा धर्मपरा या चिन्ता, तत्परा भव्या प्रतिबन्धरहितत्वेन कुशला भवतु। एवं च कर्मजिज्ञासानन्तर्यं ब्रह्मजिज्ञासायाः कुतो नियमेन न भवति। तस्मात् फलेत्यादिभाष्यं दुरुपपादम्। इति भावः ॥३१६॥

[172b] एकपुरुषेण रचिते यदि तु चर्चे
5 संश्रवसमाश्रयणतः क्रमविवक्षा।
तर्हि भवतीह पुरुषौ रचयितारौ
तत्क्रमविवक्षणकथा ननु मुधैव ॥३१७॥

[172a]किञ्च द्वादशलक्षण्यामिव सङ्गत्यधीनानन्तर्यनियमनिराकरणायेदं भाष्यं भवितुं नार्हति; द्वादशलक्षण्यामिवानन्तर्यनियामकाभावेन तत्प्रसक्ते-
10 रेवायोगादित्याह— एकेति ॥ मीमांसयोः प्रसङ्गसङ्गतिमन्तरा सङ्गत्यन्तर-प्रत्याख्यानात्, सङ्गत्यन्तरसत्त्वे कार्यकारणभावादेर्वक्तुं शक्यत्वेऽपि तस्यैवा-भावाभ्युपगमाद्, "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानी"[1]त्यादौ "अथानुमानं निरूप्यते"[2] "अथोपमानं निरूप्यते"[3] "अथ शब्दो निरूप्यते"[4] इत्यादौ सङ्गत्या पूर्वनिरूपणानन्तरमुत्तरं निरूप्यत इत्यर्थपर्यवसानात्, द्वादशलक्षण्यामपि
15 "अथातः शेषलक्षणम्"[5] "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे"[6]त्यादौ सङ्गतिभेदेन पूर्वनिरूपणानन्तरं क्रियत इत्यध्याहारेणानन्तर्यलाभात्, तत्र पूर्वोत्तरग्रन्थ-योरेककर्तृकत्वदर्शनात्, तत्रैव प्रतिज्ञामवलम्ब्य पूर्वनिरूपणोत्तरमुत्तरं निरूप्यत इत्यर्थलाभात् प्रकृते पुरुषभेदेन व्या से न कर्मनिरूपणानन्तरं ब्रह्मविचारः क्रियत इति प्रतिज्ञा कर्तुमशक्यैव; एककर्तृकस्थल एव तथा
20 दर्शनात्। तदेतदाह—एकेति ॥ एकपुरुषेण द्वे चर्चे यदि रचिते भवतः, तर्हि तत्र संश्रवसमाश्रयणतः प्रतिज्ञांशाश्रयणेन पूर्वनिरूपणानन्तरमुत्तरं निरूप्यत इति क्रमविवक्षा भवति। इह मीमांसाद्वयस्थले तु द्वौ जै मि नि व्या सौ रचयितारौ। तथाच कर्तृभेदात् पूर्वनिरूपणानन्तरमुत्तरं निरूप्यत इति क्रमविवक्षणकथा मुधैव ननु वृथैव निश्चयेन भवति। तथाच कर्त्रैक्याभावेन
25 जिज्ञासयोरानन्तर्यनियामकक्रमाप्रसक्तेस्तत्प्रसङ्गस्यैवाभावेन क्रमनिराकरण-परं फलेत्यादिभाष्यमेव नोत्थातुमर्हति। इति भावः ॥

यद्वा—फलजिज्ञास्यमानेष्वेकविधत्वसत्त्वात् प्रसङ्गसङ्गत्या जिज्ञासयोः क्रमनियमोऽस्तु, इति फलेति चोदनेति भाष्यद्वयाक्षेपपरा "वेदे"[1]तिकारिका। अथ फलजिज्ञास्यमानानामेकविधत्वात् प्रसङ्गसङ्गत्या जिज्ञास्ययोः क्रमनियमोऽस्तु, इत्याक्षेपं परिहरति—एकेति॥ एकेन द्वे यदि चर्चे रचिते
5 तर्हि प्रतिज्ञां समाश्रित्य पूर्वनिरूपणोत्तरमुत्तरं निरूप्यत इति क्रमो भवेदपि। इह मीमांसयोर्भिन्नकर्तृकत्वात् क्रमविवक्षैव नार्हतीति गोलार्थः। पदयोजनं तु पूर्वव्याख्यानवदुन्नेयम्। इति दिक्॥३१७॥

[173a] एकविधतैव नहि मानफलवेद्ये-
ष्वैक्यमिह नेति किमुतेति नयभेदम्।
10 चेतसि निधाय फलपूर्वकविभेदान्
दर्शयति देशिकशिरोमणिरशेषम्॥३१८॥

अथ फलेति चोदनेति भाष्यद्वयमपि सङ्गतार्थमेव, नासङ्गतार्थम्; न्यायविशेषप्रदर्शनद्वारा क्रमनिराकरणपरत्वादित्याह—एकेति॥ तथाहि—धर्मजिज्ञासायाः प्रागित्यादौ धर्मजिज्ञासां विनाऽपि ब्रह्मजिज्ञासोपपद्यत इत्युक्त्या-
15 ऽऽनन्तर्यनियमो नेति सम्पन्नम्। तत्रानन्तर्यनियमे किं बाधकमिति प्रश्ने साधकमानराहित्यमेवेत्यभिप्रायेण यथेत्यादिग्रन्थः "एकादश वै पशोरवदानानि। तानि द्विर्द्विरवद्यति। हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस"[2] इत्यादौ पाठक्रमेणार्थक्रमसिद्धेः क्रमप्रमाणेनानन्तर्यनियमः, न तथा जिज्ञासयोः प्रमाणमस्ति; येनानन्तर्यनियमः स्यात्। एवं शेषशेषिणोः प्रयाजदर्शयोः क्रमो
20 मानात् सिद्धः, न तथा जिज्ञासयोः शेषशेषित्वेन क्रमो भवेत्; तत्त्वे मानाभावात्। एवमधिकृताधिकारस्थले क्रमनियमो यथाऽग्निष्टोमं प्रस्तुत्य "एतेनेष्ट्वाऽथान्येन यजेते"[3]ति, न तथा जिज्ञासयोरधिकृताधिकारे मानमस्ति। एवं फलैक्ये कर्तव्यसाधनानां क्रमनियमो दर्शस्थानां त्रयाणां पूर्णमासगतानां त्रयाणां चैकस्वर्गसाधनानामेकप्रयोगवचनपरिगृहीतानाम्, न तथा
25 जिज्ञासयोः फलैक्येन क्रमनियमः। एवं जिज्ञास्यैक्येऽपि क्रमनियमो यथा "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" [4] इत्यत्र, यथा वैकस्मिन् वह्नौ शब्दानु-

मानप्रत्यक्षाणां क्रमेणो[173b]त्तरोत्तरं प्रामाण्योत्कर्षेण प्रवृत्तिः, न तथा जिज्ञासयोर्जिज्ञास्यैक्यम्। एवं मानैक्याद् मेयानां क्रमनियमः। यथा "राजा राजसूयेन स्वाराज्यकामो यजेते"[1]त्यत्रेष्टिपशुसोमानां समप्रधानानामेकमानावगतानां क्रमनियमः, न तथा जिज्ञासयोर्मानैक्यमस्ति। एवं च

5 जिज्ञासयोः फलजिज्ञास्यमानैक्याभावाद् न क्रमनियमः। कुतो जिज्ञासयोः फलाद्यैक्यं नेत्याशङ्कायां फलयोर्जिज्ञास्ययोर्मानयोश्च परस्परं वेदवेदितत्वपुरुषाभिलषितत्ववेदत्वलक्षणव्यापकधर्मैरेकजातीयत्वेऽप्यवान्तरसूक्ष्मधर्मैर्वैजात्येनैकजातीयत्वाभावेन सुतरामैक्यमेव नेति क्रमनियमो बाधित इति फलेति चोदनेति भाष्यद्वयमपि सङ्गतम्, फलैक्यजिज्ञास्यैक्यमानैक्यप्रत्या-

10 ख्यानद्वारा तदैक्यप्राप्तक्रमनिराकरणकत्वात्, तदेतदाह—एकेति ॥ मानफलवेद्येषु मानयोः फलयोर्जिज्ञास्ययोश्च एकविधतैव व्यापकधर्मरूपेणैकविधत्वसत्त्वेऽप्यवान्तरधर्मरूपेणैकविधतैव नास्ति हि। ऐक्यं न अस्तीत्यत्र किमुत वक्तव्यमिति कैमुतिकनयभेदम् न्यायविशेषं मनसि निधाय देशिकशिखामणिः श्री श ङ्क रा र्यैः अशेषम् निरवशेषं यथा भवति तथा फलपूर्वकविभेदान्

15 फलजिज्ञास्यमानानां विभेदान् वैलक्षण्यान्यैक्याभावगमकानि फलेत्यादिप्रकरणेन दर्शयतीत्यन्वयः। तथाच फलादीनामत्यन्तभेदे सुतरामनैक्यमिति फलाद्यैक्यप्रयुक्तक्रमनियमो नेति गोलार्थः। अत्र भाष्यम्—फलेति ॥ अभ्युदयेत्यादि फलभेदनिरूपणम्। धर्मज्ञानमनुष्ठानद्वारा जन्यस्वर्गादिफलकम्, ब्रह्मज्ञानमनुष्ठाननिरपेक्षमविद्यानिवृत्तिद्वारा नित्यमुक्तिफलकमिति फलभेद

20 इत्यर्थः। भव्यश्चेत्यादिजिज्ञास्यभेदनिरूपणपरम्। साध्यो धर्मः पुरुषाधीनः कर्ममीमांसाजिज्ञास्यः, ब्रह्मजिज्ञासायां तु पुरुषव्यापारानधीनं नित्यं ब्रह्म जिज्ञास्यमिति जिज्ञास्यभेदः। चोदनेति ॥ या हीत्यादि मानभेदपरम्। धर्मवाक्यं स्वार्थं बोधयत् तत्र पुरुषं प्रेरयति, ब्रह्मवाक्यं पुरुषं बोधयत्येव, न प्रवर्तयति; बोधादेवाविद्यानिवृत्त्या पुरुषार्थसिद्धेः। नच—बोधे पुरुषो

25 वाक्येन प्रवर्त्यतामिति—वाच्यम्; इन्द्रियसंनिकर्षे सतीव वाक्यसंनिधानादेव विज्ञानसम्भवेन तत्र पुरुषस्याप्रवर्तनीयत्वात्। इति दिक् ॥३१८॥

[174a] अल सतिचेतिसदुपक्रमयुतानि

प्रागपरपक्षविधयैव घटितानि।

स्पष्टमुपदिश्यतइतीतिशिखराणि
स्युः प्रथमपक्षघटकानि वचनानि ॥३१९॥

**अत्राथशब्दानन्तर्ययोग्याक्षेपभाष्यमाद्यन्ताभ्यामवान्तरपूर्वपक्षसिद्धान्तसमेतं विशिष्य दर्शयति**—अत्रेति ॥ सतिचेतिसदुपक्रमयुतानि सति चानन्तर्यार्थत्व 5 **इत्यबाधितोपक्रमवन्ति** प्रागपरपक्षविधयैव **पूर्वपक्षसिद्धान्तरीत्यैव प्रवर्तितानि** स्पष्टम् **प्रकृष्टम्** उपदिश्यतइतीतिशिखराणि **तदन्तानि** वचनानि **प्रथमपक्षस्य पूर्वपक्षस्य घटकानि स्युः । इति योजना ।** उच्यत **इत्यादिः सिद्धान्तग्रन्थः । इति भावः** ॥३१९॥

[174b] साधनचतुष्टयसमृद्धिवशतः प्रागू-
10 र्ध्वमपि धर्मपरिचिन्तनविभेदात् ।
ब्रह्म परिवेत्तुमिह शक्यमिति हेतो-
र्वक्त्यथपदं तु तदनन्तरमबाधम् ॥३२०॥

**अथ** उच्यत **इत्यादि** उपदिश्यत **इत्यन्तं भाष्यमानन्तर्यप्रतियोगिसाधनचतुष्टयपरं सङ्ग्रहेण व्याकुरुते**—साधनेति ॥ **नित्यानित्यवस्तुविवेकः, इहामुत्रार्थ-** 15 **फलभोगविरागः, शमदमादिषट्कसम्पत्, मुमुक्षुत्वं चेति साधनचतुष्टयस्य** "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायाद् नास्त्यकृतः कृतेन"[1] "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय"[2] "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयत"[3] **इति** "शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वे"[4]**त्यादि-** 20 **श्रुतिसिद्धस्यान्तरङ्गसाधनस्य समृद्धिवशतः परिपाकेन फलौन्मुख्यवशतो धर्मजिज्ञासायाः** प्रागूर्ध्वमपि ब्रह्म **वेदान्तवाक्यविचारद्वारा** परिवेत्तुं शक्यमिति हेतोरथपद**मन्तरङ्गसाधनचतुष्टयसम्पत्त्यानन्तर्य**मबाधम् **अनपनोद्यं** वक्तीत्यन्वयः । नित्यानित्येत्यादि **भाष्यं तु सुगमयोजनम्** ॥३२०॥

[175a] व्याकरणकर्मसु विशिष्य पठितत्वा-
25 न्मुण्डकमुखश्रुतिषु साधनचतुष्कम् ।

उत्तमतमं हृदि निधाय मुनिराजाऽ-
थेति ननु मङ्गलकरं प्रथममुक्तम् ॥३२१॥

अथेहाथपदोपात्तानन्तर्यप्रतियोगित्वेन नित्यानित्यविवेकादिसाधनचतुष्टयं विवृतम्, तत् कथं भवितुमर्हति ; "अथात"[1] इति सूत्रात् पूर्वं साधनचतुष्टय-
5 प्रस्तावाभावात्, "अथात" इति सूत्रस्यैव ग्रन्थादित्वात्, आनन्तर्यस्याथपद-गृहीतस्यानुपस्थितं साधनचतुष्टयं कथं प्रतियोगित्वेन सूत्रेऽस्मिन्नुपादेयमिति शङ्कां परिहरति—व्याकरणेति ॥ व्याकरणकर्मसु व्याख्येयासु मु ण्ड क मुख-श्रुतिषु विशिष्य पठितत्वात् "परीक्ष्य लोकान् कर्मचितान्"[2] "तद्यथेह कर्मचितो लोकः क्षीयत"[3] इति स्पष्ट पाठात् साधनचतुष्कम् नित्यानित्यविवेकादिलक्षणम्
10 उत्तमतमम् वेदाध्ययनादन्तरङ्गभूतम् आनन्तर्यप्रतियोगितया हृदि निधाय मुनिराजा व्या सा चा र्ये ण मङ्गलकरमथेति प्रथमम् शास्त्रादावुक्तम्। ननु निश्चयेन भवति। साधनचतुष्टयस्य व्याख्यानग्रन्थे पूर्वं प्रस्तावाभावेन ततोऽनुपस्थितावपि व्याख्यानव्याख्येययोरेकार्थकत्वेनैकग्रन्थकल्पत्वात् मूल-सापेक्षत्वाद् व्याख्यानस्य मूलत एव साधनचतुष्टयोपस्थितिसम्भवादथपदं
15 सम्बन्ध्यर्थकं सर्वादौ साध्वेवोक्तम्। इति दिक् ॥३२१॥

[175b] ति त्ति रि शिरस्यपि हि बुद्धिमयकोशे
नेति वचनं सकलसाधनविबोधि ।
विस्तृतगिरा कमलविष्टरसुतेन
स्पष्टमुपदिष्टहृदयं प्रकटितार्थम् ॥३२२॥

20 ननु—ति त्ति रि वाक्यस्य "तद् विजिज्ञासस्व। तद् ब्रह्म"[4] त्यस्य प्रकृत-सूत्रविषयत्वात् तत्सूत्रार्थसम्बन्धिपराथपदार्थप्रतियोग्यपि तत्रैव पठितम-पेक्षितम्, औचित्यादिति—चेत्, न ; सर्वशाखाप्रत्ययमेकं कर्मेति न्यायेन मु ण्ड का दि श्रुतावपि जिज्ञासासूत्रार्थसत्त्वात् तत्र साधनचतुष्कस्य स्पष्टं पाठात्, ति त्ति रि श्रुतावपि तदुपसंहाराद् नानुपपत्तिः। किञ्च ति त्ति रि-
25 श्रुतावपि साधनसम्पदनुमतैव ; विज्ञानमयकोशे "तस्माच्चेन्न प्रमाद्यति।

शरीरे पाप्मनो हित्वे"[1]त्यत्र न प्रमाद्यतीति वाचमुपादाय स न त्सु जा ती ये "प्रमादं वै मृत्युमहं ब्रवीमि। सदा प्रमादादमृतत्वं ब्रवीमी"[2]त्यादिना प्रकरणेनाप्रमादार्थत्वेन साधनकलापपरिग्रहाद् ब्र ह्म व ल्ली गताप्रमादार्थश्रवणतो भृ गोः सम्पादितसाधनकलापवत एव "भृ गु र्वै वारुणिरि"[3]त्यादौ
5 परिग्रहात् ति त्ति र्युपनिषद्यपि साधनकलापपरिग्रहोऽस्तीति न विरोध इत्याह—ति त्ति री ति॥ तै त्ति री यो प नि ष द्यपि बुद्धिमयकोशे "तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वे"[4]ति नेत्यादिवचनं सकलसाधनविबोधि साधनकलापबोधकम् क म ल वि ष्ट र सु ते न स न त्सु जा ते न प्रकटितार्थं सत् प्रकाशितवाच्यार्थं सत् विस्तृतवाचा स्पष्टम् विशदम् उपदिष्टहृदयम् प्रकाशित-
10 तात्पर्यकं भवतीत्यर्थः। तेन ति त्ति रि श्रुतावपि साधनकलापः परिगृहीत इति न काऽप्यनुपपत्तिः। इति भावः ॥३२२॥

[176a] साधनविवेचनपरा श्रुतिरिवान्या
ज्ञानफलबोधनपराऽपि हि यदादिः।
वक्ति तदतःपदमिदं फलमदोषं
15 सुन्दरफलादवगताद् भवति हीच्छा ॥३२३॥

[176b]अथ सूत्रगतातःशब्दविवरणपरम् अतःशब्दो हेत्वर्थ इत्यादिभाष्यं जिज्ञासा कर्तव्येत्यन्तं विवृण्वन् सन् ननु इदं भाष्यम् यस्माद् वेद एवाग्निहोत्रादीनां श्रेयःसाधनानामनित्यफलतां दर्शयति "तद्यथेहे"[5]त्यादिः, तथा ब्रह्मविज्ञानादपि परमपुरुषार्थं दर्शयति—"ब्रह्मविदाप्नोती"[6]त्यादिः, तस्मादित्यादिलक्षणं
20 कथमुपपादनीयम्; कर्मफलानित्यताप्रतिपादनस्य नित्यानित्यवस्तुविवेकोपयोगित्वेनाथपदार्थानन्तर्यप्रतियोगिकोटिगतत्वेनातःशब्दार्थत्वेन पुनर्ग्रहणेऽतःपदानर्थक्यापत्तेः, अथपदस्वाभाव्यादेव कर्मफलानित्यत्वपरिग्रहादिति शङ्कां परिहरति—साधनेति॥

अत्र भाष्ये कर्मफलानित्यताबोधकवाक्यं नातःशब्दार्थपरत्वेन, किं तर्हि।
25 दृष्टान्तार्थतयैव। दार्ष्टान्तिकांश एवातःशब्दार्थपरः। अत्र यथेत्यध्याहर्तव्यम्। यथा वेद एव "तद्यथेहे"[7]त्यादिरग्निहोत्रफलादीनामनित्यतां

दर्शयति, तथा वेद एव "ब्रह्मविदि"[1]त्यादिर्ब्रह्मज्ञानात् परमपुरुषार्थं दर्शयति यस्मात्, तस्मादत्युत्तमफलसत्त्वात् साधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येत्यन्वयः ॥

यद्वा—यथा वेदोऽनित्यफलदर्शकः, तथा मुक्तिफलदर्शकोऽपि वेदो भवति
5 यस्मात्, तस्मादतःशब्दो हेत्वर्थ इति पूर्वेणान्वयः। उत्तरवाक्ये यत्पदे सति पूर्ववाक्ये तत्पदमार्थिकमिति तस्मादित्यार्थिकमुपादायातःशब्दो हेत्वर्थ इति पूर्ववचसाऽन्वयो विधेयः। तस्मादित्यादि कर्तव्येत्यन्तमवान्तरप्रकरणोपसंहारपरम् ॥

अथवा—यथेति नाध्याहर्तव्यम्; उत्तरवाक्ये यत्पदसत्त्वे पूर्ववाक्ये
10 तत्पदवदुत्तरवाक्ये तत्पदसत्त्वे पूर्ववाक्ये यत्पदस्य सत्त्वनियमाभावात् पूर्ववाक्यमज्ञातार्थकतयोपदिश्योत्तरत्र तत्पदेन तत्परामर्शसम्भवात्, "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे"[2]ति श्रुतौ, पद्मं भाति तथा मुखमपि भातीति लोके च व्यवहारदर्शनात्, तत्र तथेत्येतावताऽप्युपमानोपमेयभावसिद्धेः, यस्मात् "तद्यथेहे"[3]त्यादिरनित्यफलतां दर्शयति, तथा
15 "ब्रह्मविदि"[4]त्यादिरपि परमपुरुषार्थं दर्शयति, तस्मादतःशब्दो हेत्वर्थ इत्यन्वयसम्भवात्, तथेति निर्देशमात्रेणैव दृष्टान्तदार्ष्टान्तिकभावसिद्धेः, "तद्यथेहे"[5]ति वाक्यार्थस्याज्ञातवत् कथनेऽप्यभिमतार्थसिद्धेरिति दिक्। तस्मादित्यादि कर्तव्येत्यन्तमवान्तरप्रकरणोपसंहारपरम्। उत्तरवाक्ये यत्पदे सति पूर्ववाक्ये तत्पदमार्थिकमिति तस्मादित्यार्थिकमुपादायातःशब्दो हेत्वर्थ
20 इति पूर्ववचसाऽन्वयो विधेयः। तदेतदुक्तम्—साधनेति ॥ साधनविवेचनपरा श्रुतिः "तद्यथेह कर्मचित"[6] इत्यादिः। इदमुपलक्षणं वैराग्यादिप्रतिपादक मुण्डक श्रुतीनाम्। एवं च साधनपरा श्रुतिरिवान्या ज्ञानपराऽपि श्रुतिरस्ति—"ब्रह्मविदाप्नोति परम्"[7] "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवती"[8]त्यादिः। अत्र भाष्ये परमित्यादि-
25 रित्यादिपदेन यदेत्यादिरपि परिगृहीता भवति। तदेतत् स्पष्टीकृतम्—यदादिरिति ॥ "यदा ह्येवैष"[9] इत्यादिरित्यर्थः। एवं च तत् तस्मात् कारणात्। स्पष्टफलपरश्रुत्यनुरोधेन सौत्रमतःपदमदोषम् दोषरहितम्। कर्मफलविलक्षणं सुन्दरं फलं वक्ति। अतः निर्दोषफलसत्त्वादित्यर्थः। साधनसम्पद् यथा जिज्ञासाहेतुः, तथा ज्ञायमानं सुन्दरं फलमपि जिज्ञासाजनकं भवति। इति वर्तुलार्थः ॥३२३॥

[177a] जन्मवचसोल्लिखितलक्षणवशेन
ब्रह्मपदमत्र परमात्मपरमेव ।
ब्रह्मण इतीह किल कर्मणि तु षष्ठी
सन्घटितवाचि किल कर्मपरमिष्टम् ॥३२४॥

5 अथ सूत्रगताथातःपदार्थौ तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरमित्यन्तग्रन्थेन निरूपितौ। सम्प्रति जिज्ञासापदार्थं विवरीतुं प्रवर्तितं ब्रह्मणो जिज्ञासेत्यादि-भाष्यं तद्वदित्यन्तं त्रिभिः श्लोकैस्सङ्गृह्य व्याचष्टे—जन्मेति ॥ जन्मवचसा "जन्माद्यस्य यत"[1] इति समुल्लिखितलक्षणानुरोधेन । सूत्रगतं ब्रह्मपदं परमात्मपर-मेव, नतु ब्राह्मणजात्यादिपरम् । अनेनार्धेन ब्रह्म च वक्ष्यमाणलक्षणम्—"जन्माद्यस्य
10 यत"[2] इति । अत एव न ब्रह्मशब्दस्य जात्याद्यर्थान्तरमाशङ्कितव्यमिति भाष्यं विवृतं भवति । अत्र ब्रह्म च वक्ष्यमाणलक्षणं "जन्माद्यस्य यत"[3] इति निर्देशाद् जन्मादिसूत्रं स्वतन्त्रलक्षणपरम्, न श्रुतिव्याख्यापरमिति पक्षः सूचितः । एवं चोत्तरसूत्रानुरोधेन जिज्ञासासूत्रमपीदं स्वतन्त्रम्, न श्रुतिव्याख्यारूपमिति सूचितं भवति । पूर्वस्य[177b] श्रुतिविवृतिपरत्व उत्तरसूत्रस्य पूर्वसूत्र-
15 विषयवाक्यसम्बद्धत्वेन स्वातन्त्र्यबुद्धेः प्रतिरोधेन श्रुतिव्याख्यापक्षस्यैव पुरः-स्फूर्तेः । तत्र प्रथमसूत्रस्य स्वातन्त्र्यपक्षे साधनसम्पत्त्यनन्तरं ज्ञानेच्छा भवति, ज्ञानेच्छाधीनविचारो भवति, ज्ञानेच्छाधीनविचारः कर्तव्यो भवति, अथारभ्यते ब्रह्मविचार इति चत्वारः कल्पा भवन्ति । तत्र विचारः कर्तव्य इति कल्पः तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्म-
20 जिज्ञासा कर्तव्येति भाष्येण परिगृहीतः । ज्ञानेच्छा भवतीति पक्षस्तु जिज्ञासाया अनधिकार्यत्वादिति भाष्येण परिगृहीतः । विचार आरभ्यत इति पक्षोऽ-धिकरणान्ते निःश्रेयसप्रयोजना प्रस्तूयत इति भाष्येण परिगृहीतः । विचारो भवतीति कल्पस्तु इच्छा भवतीतिवत् सिद्धः । श्रुतिविवृतिपक्षस्त्वग्रे भाष्यारूढो निरूप्यते । कल्पानेतानग्रे श्लोककृदेव भाष्यारूढानुपपाद-
25 यिष्यति । तत एव निरवशेषं ज्ञेयमिति दिक् । एवं च सन्घटितवाचि जिज्ञासेत्यत्र । कर्मपरमिष्टमिति ॥ ब्रह्मणो जिज्ञासेत्यत्र कर्मणि षष्ठ्येवादरणीया ; वाञ्छितसमर्पणे सम्भवति तद्विपरीतसमर्पणस्यानुचितत्वात् । एतेन ब्रह्मण इति कर्मणि षष्ठी, न शेषे ; जिज्ञास्यापेक्षत्वादिति भाष्यं विवृतं भवति ॥३२४॥

[178a] शेषपरिबोधनपरा यदि हि षष्ठी
वाञ्छितमतिर्भवति गौरवहतैव ।
कर्म न परं परिगृहीतमुपलब्धं
शेषवशतोऽपि न हि कर्म ऋजु सिद्धम् ॥३२५॥

अथ जिज्ञास्यान्तरानिर्देशादित्यादिभाष्यं न व्यर्थः प्रयासः समाश्रितः स्यादित्यन्तं सङ्गृह्य विवृणोति—शेषेति ॥ ब्रह्मण इति षष्ठी सम्बन्धसामान्यरूपशेषपरा भवति यदि, तर्हि सम्बन्धसामान्यस्य विशेषे पर्यवसानावश्यम्भावात् कर्मण्येव पर्यवसानं भवति, परन्तु इष्टकर्ममतिगौरवहतैव भवति ; षष्ठ्या प्रथमतः सम्बन्धसामान्ये बुद्धे तस्य सम्बन्धस्य पार्यन्तिकमर्यादयैव विलम्बेनैव कर्मणि पर्यवसानात्, तदेतदाह—शेषेति ॥ शेषषष्ठीपरिग्रहेऽपि कर्मर्जु न सिद्धम् ; सम्बन्धसामान्यद्वारा विलम्बेनैव कर्मस्वरूपसिद्धेः। ननु ब्रह्मण इति शेषषष्ठ्येव भवतु, जिज्ञासाया अपेक्षितमावश्यकं कर्मान्यदेव भवत्वित्याशङ्क्याह—कर्मेति ॥ अत्र सूत्रे जिज्ञासाकर्म ब्रह्मातिरिक्तं परिगृहीतं नोपलब्धमेव। अतो ब्रह्मैव कर्म जिज्ञासापेक्षितं भवितुमर्हति। तथाच कर्मणि षष्ठ्यैवेहोचितेति भावः। कर्म न परमिति तृतीयपादेन जिज्ञास्यान्तरानिर्देशाच्चेति भाष्यं विवृतं भवति। जिज्ञासार्हं जिज्ञास्यम्। अन्यद् जिज्ञासार्हं न निर्दिष्टमित्यर्थः। ननु शेषषष्ठीपरिग्रहेऽपीत्यादिभाष्यं प्रयासः स्यादित्यन्तं शिष्टेन शेषेत्यादिपादत्रयेण विवृतं भवति। शेषषष्ठ्यामपि सम्बन्धसामान्यस्य विशेषे पर्यवसानेन कर्मांशः सिद्ध्यतीति न काऽप्यनुपपत्तिः। इति भाष्यभावः ॥३२५॥

[178b] शेषमवबोधयति सर्वमपि षष्ठी
चेन्न खलु वाञ्छितसमर्पणमपि स्यात् ।
मुख्यकलने सति गुणाः कलितकल्पाः
वाञ्छितसमर्पणमपीह ननु सिद्धम् ॥३२६॥

अथ न व्यर्थ इत्यादि भाष्यं तद्वदित्यन्तं तात्पर्यतो व्याचष्टे—शेषमिति ॥

शेषषष्ठीपरिग्रहो न व्यर्थः। ब्रह्मसम्बन्धिसकलपदार्थानां विचार्यत्वसिद्धिः फलं भवितुमर्हेत्। परं तु ब्रह्मसम्बन्धिपदार्थानां वाञ्छितजिज्ञासाकर्मत्वं सिद्ध्येत् सत्वरम्। कर्मषष्ठीपरिग्रहे तु राजाऽसौ गच्छतीति प्रधाननिर्देशे सपरिवार इति यथा सिद्ध्यति, तथा प्रकृतेऽपि मुख्यब्रह्मपरिग्रहे सति
5 तत्सम्बन्धिनो गुणभूताः परिगृहीतकल्पा एव। एवं तस्य जिज्ञासा-कर्मणोऽपि स्पष्टं परिग्रहो भवत्येवेति वर्तुलार्थः। शेषषष्ठीपरिग्रहेऽधि-कार्थलाभ इति नाशङ्कनीयम्; कर्मषष्ठीपरिग्रहेऽपि प्रधानीभूतब्रह्मपरिग्रहेण तत्सम्बन्धिनां सर्वेषामपि परिगृहीतकल्पत्वाद् न काऽप्यनुपपत्तिः। इति न व्यर्थ इत्यादिप्रघट्टकगोलार्थः ॥३२६॥

10 [179a] साधनसमाजवशतः किल बुभुत्सा
ब्रह्मविषयेति विवृतिर्भवति काचित्।
वास्तवगतिं श्रुतिमतां समवलम्ब्य
व्यादिशदिहार्यमणिरादिवचसा ताम् ॥३२७॥

अथास्य सूत्रस्य परमतसिद्धानि चत्वारि पदयोजनानि भाष्यकृद्वचन-
15 सिद्धानि दर्शयन् भाष्यकृन्मतं च पञ्चमं षड्भिः श्लोकैर्विशदयति—साधनेति ॥ तत्र प्रथमं कल्पं दर्शयति—साधनसमाजवशत इति ॥ नित्यानित्यवस्तुविवेकादि-साधनसमुदायवशाद् ब्रह्मविषया बुभुत्सा ज्ञानेच्छा भवतीति सूत्रस्य काचिद् विवृतिर्भवति। साधनचतुष्टयसम्पत्तौ चित्तनैर्मल्याद् ब्रह्मज्ञानेच्छा स्वत एव भवतीति वास्तवगतिम् वस्तुस्वभावायत्तरीतिं श्रुतिमताम् "परीक्ष्य"[1]त्यादि-
20 श्रुतिसंमतामाश्रित्य तां विवृतिं वास्तवगत्या परैराद्दताम् आदिवचसा सूत्र-विवरणारम्भवचसा जिज्ञासाया अनधिकार्यत्वादित्येवंलक्षणेनाचार्यमणिः व्यादि-शत् उपदिष्टवान्। इत्यर्थः ॥३२७॥

[179b] सन्सहितवाग् भवति लक्षितवाचारे-
त्युल्लिखितपक्षमवलम्ब्य तु विचारः।
25 साधनवशेन भवतीति स विधेयः
स्यादिति च पक्षयुगलं विवृतिभेदात् ॥३२८॥

अथ सूत्रयोजने द्वितीयतृतीयकल्पौ दर्शयति सन्निति ॥ सन्सहितवाक जिज्ञासेत्येवंलक्षणा लक्षितविचारा भवतीति समुल्लिखितपक्षमवलम्ब्य नित्यानित्यवस्तुविवेकादिलक्षणसाधनकलापवशेन ब्रह्मविचारो भवतीति द्वितीयः कल्पः, ब्रह्मविचारो विधेयः स्यात् कर्तव्यः स्यादिति च तृतीयः कल्प इति
5 विवृतिभेदात् पक्षद्वयं भवति । इत्यर्थः ॥३२८॥

वक्ति हि विचार इह कार्य इति तस्मा-
दित्युपनिबद्धवचसा गुरुवरेण्यः ।
साधनचतुष्टयवशादथ विचारः
स्यादिति पुनर्भवति चार्थवशसिद्धः ॥३२९॥

10 अथैतत्पक्षद्वयमध्ये विचारविधेयत्वपक्षं भाष्यारूढं निर्दिशन् केवलविचारपक्षमर्थात् सिद्धं दर्शयति—वक्ति हीति ॥ तस्मादित्युपनिबद्धवचसा तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति वचसा गुरुवरेण्यो विचारः कर्तव्य इति पक्षं वक्ति । साधनचतुष्टये सति ब्रह्मविचारो भवतीत्यकर्तव्यपक्षस्त्वर्थात् सिद्धो भवति ; केवलसूत्रमात्रयोजनात्, कर्तव्यपदाध्याहारेण कर्तव्यपक्षा-
15 श्रयणेनाध्याहारेण शुद्धपक्षस्फोरणसम्भवात् ॥३२९॥

[180a] गौतममतादिवदिदं प्रथमसूत्रं
वस्तुपरमेव तदनन्तरमपीति ।
पक्षमवलम्ब्य पदयोजनमिहार्यः
सङ्घटितवान् प्रथमतः प्रकरणेन ॥३३०॥

20 अथ तत्राथशब्द इत्यारभ्य तद्वदित्यन्तभाष्यसिद्धमर्थमुपसंहरति—गौतमेति ॥ इदम् "अथात"[1] इति प्रथमसूत्रम् तदनन्तरमपि जन्मादिसूत्रमपि गौतममतादिवत् "प्रमाणप्रमेये"[2]ति "अथ योगानुशासनम्"[3] "अथ शब्दानुशासनम्"[4] "मयरसतजभनलगसंमितमि"[5]त्यादिमतानां न साक्षात् श्रुतिवचनप्रतीकेन व्याख्यापरत्वम्, किन्तु वस्तुविवेचनपरत्वमेव, एवमेवेदं सूत्रद्वयं श्रुति-

**स्पर्शमन्तरा** वस्तुपरमेव, **नतु श्रुतिव्याख्यापरमिति** पक्षमवलम्ब्य **प्रथमसूत्रस्य** पदयोजनं **त्रिविधम्** आर्यः **श्री श ङ्क र भगवत्पादः** प्रथमतः **आदौ** तत्राथशब्द **इत्याद्येन प्रकरणेन प्राथमिकेन** सङ्घटितवान् **संयोजितवान् सूत्रेण**। **इत्यर्थः** ॥३३०॥

5 [180b] ब्रह्मपरिचर्चनमनेकविधमत्रा-
रभ्यत इति स्फुटतराश्रवनिबद्धम्।
सूत्रमिदमित्यपि परत्र कथयिष्य-
न्त्यार्यमणयस्तदविरोधवचनेन ॥३३१॥

**ब्रह्मविचार आरभ्यत इति चतुर्थः प्रथमप्रकरणेन न सङ्गृहीतः, प्रत्युत**
10 **दूषित एव** ; नाधिकारार्थः ; ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति, **परन्तु** जिज्ञासाया अनधिकार्यत्वादित्युक्त्या **विचारस्याधिकार्यत्वमुपेतमिति समारम्भे सूचितः सूत्रविवरणसमाप्तौ स्पष्टमेव भाष्यवचनारूढ इत्याह**—ब्रह्मेति ॥ अनेकविधम् **उपासनभेदज्ञानादिलक्षणं** ब्रह्मपरिचर्चनमत्र **शास्त्रादौ प्रारभ्यते**। स्फुटतराश्रव-निबद्धम् **स्पष्टतरप्रतिज्ञासम्बद्धम्** सूत्रमिदं **भवतीति तुरीयं पक्षमपि** परत्र
15 **सूत्रव्याख्याप्रान्ते** आर्यमणयः **श्रीभगवत्पादाः** तदविरोधवचनेन तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयत **इत्येवंलक्षणवचनेन** कथयिष्यन्ति। **इत्यन्वयः** ॥३३१॥

[181a] श्रौतवचसो विवरणं प्रथमसूत्र-
द्वन्द्वमिति कल्पमवलम्ब्य यतिराजा।
20 श्रुत्यनुगमादिति गिरा श्रुतिरुपात्ता
प्राथमिकसूत्रविवृतेः समुचितेति ॥३३२॥

**अथ श्रुतिव्याख्यारूपं सूत्रमिति पञ्चमं मतं भाष्यारूढमिति विवेचयति**— श्रौतेति ॥ **इदं** प्रथमसूत्रद्वन्द्वम् "अथातः"[1] "जन्मे"[2]**ति सूत्रद्वयं श्रुतिवाक्यविवरणं**

भवतीति **पञ्चमं कल्पमाश्रित्य** यतिराजा **यतिराजेन** श्रुत्यनुगमाच्चेतिगिरा श्रुतिः "यतो वा इमानि"[1] "तद् विजिज्ञासस्व तद् ब्रह्म"[2] "श्रोतव्यो मन्तव्य"[3] **इत्याद्या श्रुतिः** प्राथमिकसूत्रविवृतेः समुचिता **योग्येति** उपात्ता **परिगृहीता भवति।** इत्यर्थः ॥३३२॥

5 ब्रह्मण इति प्रकटिता भवति षष्ठी
श्रुत्यनुगमेन ननु कर्मपरिकेति ।
व्यासमपदेशमिममाप्य गुरुवर्यः
स्वीयमतमुत्तमतमं ज्ञपयतीह ॥३३३॥

अथ श्रुतिविवरणं सूत्रमिति भाष्ये किं स्पष्टमाम्नातम्, उतान्यथेति संशये 10 न स्पष्टमाम्नातम्, किन्तु प्राचीनमतस्वमतसाधारणविवरणप्रसङ्गेनार्थादिति दर्शयति—ब्रह्मण इति ॥ ब्रह्मणो जिज्ञासेति विग्रहकरणात् पूर्वतनं भाष्यं परमतचतुष्टयावलम्बेन प्रवर्तितम्, अथातःपदविवरणांशस्तु पञ्चममत-साधारणोऽपि। तत्र ब्रह्मणो जिज्ञासेति विग्रहषष्ठ्यर्थाश्रयणं तु परमत-चतुष्कसाधारणमपि प्रायेण श्रुतिविवरणक्षस्यापि पञ्चमस्यानुकूलमेव। 15 श्रुत्यनुगमेन ब्रह्मण इति षष्ठी **कर्मपरेति मतपञ्चकसाधारण्येन** प्रकटिता भवति। तत्र गुरुवर्यः **श्रीमानाचार्य** इमं **ब्रह्मण इति** व्यासमपदेशम् **व्याजं प्राप्योत्तमतमं** स्वीयमतं **श्रुतिव्याख्यारूपमिदं सूत्रमित्येतल्लक्षणमिह** श्रुत्यनुगमादिति **वाचि** ज्ञपयति **सूचयति।** इत्यर्थः। एवं च मतान्तरवदिदं पञ्चमं मतमपि सूचितम्। अन्यतमस्येष्टोक्तावन्येषामस्फुरणं वा प्रतिरोधो वा स्यात्, अस्फुरणादौ च 20 सत्युत्तरसूत्रेऽपि मतान्तरद्योतनं न स्यात्, विशिष्य सकलमततद्दोषस्वमत-निर्देशे चातिग्रन्थगौरवं स्यात्। एवं च विशिष्य तत्तन्मतानावेदनं ग्रन्थ-लाघवप्रयुक्तम्। इति तत्त्वम् ॥३३३॥

[181b] वारुणवचः स्फुरति मध्यपुरुषात्माऽ-
नेन भृ गु मात्रपरमन्यपरभिन्नम् ।

इत्यनुचितं भवति मुण्डकमुखाभि-
गीर्भिरखिलाश्च कथिताः किल विदग्र्याः ॥३३४॥

अथेदं सूत्रं श्रुतिविवरणरूपमिति पक्षे विषयवाक्यानि "तद् विजिज्ञासस्व तद्ब्रह्म"[1] "परीक्ष्य लोकान्"[2] "श्रोतव्यो मन्तव्य"[3] इत्याद्याः श्रुतयो भवन्ति।
5 "तद् विजिज्ञासस्वे"[4]ति तैत्तिरीयवाचि भृगुमात्रपरायां भासमानायां सा श्रुतिर्भृगुमात्रपरा न भवति। मध्यमपुरुषवत्त्वेऽपि मुण्डकादि-श्रुतिषु सर्वजनसाधारण्येनैव ज्ञानाधिकारदर्शनादित्याह—वारुणेति॥ "तद् विजिज्ञासस्वे"[5]ति वरुणवचनं भृगुं प्रति मध्यमपुरुषात्मकम्। अनेन मध्यमपुरुषेण तद्वरुणवचः अन्यपरभिन्नं सत् भृग्वन्या जनाः, तत्परभिन्नं
10 सद् भृगुमात्रपरं भवेत् इत्येतदनुचितं भवति। "ब्राह्मणो निर्वेदमायात्"[6] "श्रोतव्य"[7] इत्येवंलक्षण मुण्डकादिगीर्भिरखिला अपि विदग्र्या भृग्वभृगु-साधारणब्राह्मणपदेन जात्यभिप्रायेण प्रयुक्तेन कथिताः किल। तथाच मुण्डकादिश्रुत्यनुरोधेन तैत्तिरीयश्रुतौ मध्यमपुरुषो वरुणभृगु-संवादायत्तः, न तु तात्पर्यायत्त इत्यविवक्षित एव भवति। इति भावः॥३३४॥

15 [182a] सूचितमिदं सकलमाद्यपददानाद्
देशिकवरैः श्रुतिषु दर्शितविचारैः।
सूत्रपदयोजनमपि प्रथमवत् स्यात्
श्रौतवचसां विवरणत्वमतिरिक्तम्॥३३५॥

अथ तित्तिरिगतमध्यमपुरुषो मुण्डकादिश्रुत्यनुरोधेनाविवक्षित
20 इत्येतद् भाष्यकृतामपि संमतमिति दर्शयति—सूचितमिति॥ देशिकवरैः श्रीशङ्करभगवत्पादैः "यतो वा इमानि भूतानि जायन्त"[8] इत्याद्या श्रुतयः, "तद् विजिज्ञासस्व। तद् ब्रह्मे"[9]ति भाष्य आद्यपददानाद् मुण्डकादि-श्रुतीनामपि परिग्रहात् तासु श्रुतिष्वर्थाद् दर्शितविचारैः निरुक्तरीत्या प्रदर्शित-विचारकैरिदं सकलमपि सूचितं भवति। मध्यमपुरुषादिविरोधे सर्ववेदान्त-
25 न्यायेन श्रुत्यन्तरानुरोधेन वाक्यार्थवर्णनं विधेयमिति सूचितमिति यावत्।

सूत्रपदयोजनमपि प्रथमवत् स्यात् प्रथममतानामिव भवेत्। अथ साधनचतुष्टय-सम्पत्त्यनन्तरम्। अतः फलसौन्दर्याद् ज्ञायमानात्। ब्रह्मजिज्ञासा भवति ज्ञानेच्छा भवति, विचारो भवति, विचारः कर्तव्यो भवतीति वा पदयोजनं समानमेव। परन्त्वस्मिन् श्रुतिवचसां विवरणत्वं सूत्रेऽधिकं भवति।
5 इति गोलार्थः ॥३३५॥

182b] ति त्ति रि शि रो मुखवचांसि विषयेऽस्मिन्
मध्यपुरुषः किमुचितोऽप्यनुचितो वा।
लोडभिहितो विधिरिहाभिकलनीयः
किन्तु न तथेति विषयद्वयमथोह्यम् ॥३३६॥

10 अथ श्रुतिविवरणं सूत्रमिति पक्षे विषयस्ति त्ति र्यादिः प्रदर्शित एव। सम्प्रति संशयपूर्वपक्षसिद्धान्तान् त्रिभिः श्लोकैः सङ्गृह्णाति—ति त्ति रीति॥ अथ तेषु श्लोकेषु प्रथमेन संशयद्वयं सङ्गृह्णाति—ति त्ति रि शि रो मुखवचांसीति॥ "तद् विजिज्ञासस्व। तद् ब्रह्म"[1]त्यादीनि वचनानि विषयः। अस्मिन् विषये श्रुतेरधिकारिमात्रसाधारण्येन प्रवृत्त्यौचित्याद् मध्यमपुरुषस्य भृ गु मात्र-
15 परस्य प्रत्यक्षतः श्रवणाद् मध्यमपुरुषः किमुचितोऽपि, उतानुचित एव। तथाच मध्यमपुरुषो विवक्षितः, अविवक्षितो वेत्येकः सन्देहः। एवं "विजिज्ञास-स्वे"[2]ति लोडभिहितो विधिरिहाभिकलनीयः ग्राह्यः किं वा, न तथा न ग्राह्य इति द्वितीयः सन्देहः। एवं सन्देहद्वयमिह विषय ऊह्यम् भाष्यानुक्तमपि सूचित-त्वात् तर्क्यम्। इत्यर्थः ॥३३६॥

20 [183a] आर्थिकतया भवति मध्यपुरुषोऽस्मिन्
मु ण्ड क मुखश्रुतिवचोऽनुसरणेन।
सन्नभिहिते न विधिरेवमभिलाषे
सुन्दरफलावगमतो हि स उदेति ॥३३७॥

अथ मध्यमपुरुषलोटोः प्रत्यक्षश्रवणात् तद्द्वयमपि विवक्षितमिति पूर्वपक्षोऽ-
25 तिस्पष्ट इति तद् विहाय सिद्धान्तं विशदयति—आर्थिकतयेति॥ मध्यमपुरुष-

स्तावदत्र न विवक्षितः; पितृपुत्रसंवादायत्तत्वेनान्यथासिद्धेः, श्रुतेरधिकारिमात्रावलम्बेन प्रवृत्तेः, मुण्डकादिश्रुतीनां तथैव प्रवृत्तिदर्शनात्, श्रुतिभेदेन वैरूप्यकल्पने प्रमाणाभावात्। एवं च मुण्डकादिश्रुत्यनुरोधेन तित्तिरिश्रुतौ मध्यमपुरुषोऽन्यथासिद्धेरविवक्षित इति यावत्। एवं
5 सन्नभिहितेऽभिलाष एवं विधिर्न घटते। यथा मध्यमपुरुषोऽनुपपन्नः, तथा विधिरप्यभिलाषेऽनुपपन्न एव। इच्छायां विध्यनुपपत्तौ हेतुमाह—सुन्दरेति॥ अतिशयितफलज्ञानादेवाभिलाष उदेति हि। तत्रेच्छासम्पादने प्रेरणाया अनुपयोगात्, फलसौन्दर्यज्ञानादेव स्वत एव सिद्धेः। इति भावः।।३३७॥

[183b] तित्तिरिवचः स्वरसतो ननु विचारं
10 लक्षयति सन्सहितधातुरिति पक्षे।
आवृतिनिवर्तकविलक्षणकविद्या-
कारणतयाऽविदित एष विधियोगः ॥३३८॥

अथ यदीच्छाविशेष्यक एव जिज्ञासेत्यत्र बोधः, तर्हि विध्यंशस्तत्रानुपयुक्त एव भवति। यदि च सन्नन्तपदं विचारपरम्, तर्हि विधिर्घटत इत्याह—
15 तित्तिरीति॥ "तद् विजिज्ञासस्वे"[1]ति तित्तिरिवचनस्वारस्येन विचारांशभावनाद् जिज्ञासेतिपदमपि विचारं लक्षयतीति पक्षे यद्यपि विचारो ज्ञानहेतुत्वेन लोकप्रमाणप्राप्तो न विधेयः, तथाऽप्येष विचार आवृतिनिवर्तकविलक्षणकविद्याकारणतया अविद्यानिवर्तकतावच्छेदकधर्मवद्विलक्षणविद्याकारणत्वेन लोकप्रमाणेनाविदितत्वात् कृतिसाध्यत्वाज्ञातज्ञाप्यत्वयोः सत्त्वाद्
20 विधियोग्य एव। अत्र केवलेच्छामादाय न विधिः, विचारांशमादाय विधिरुपपद्यते। इति भावः ॥३३८॥

[184a] पक्षयुगलं किल विवक्षितमितीह
ज्ञापयितुमेव रचितं मुनिवरेण।
कारकगिरौ ननु विहाय तु सनैवे-
25 हाशबल एव भवतीह हि विचारः ॥३३९॥

अथेदं पक्षद्वयं सूत्रकृतोऽपि सम्मतमिति ज्ञापकमाह—पक्षेति॥ मुनिवरेण

ज्या सा चा यँ णेदं पक्षयुगलं विवक्षितमिह भवतीति ज्ञापयितुमेव ब्रह्म जिज्ञासितव्यम्, जिज्ञासनीयम्, जिज्ञासितेति वा कारकवाचौ योग्यतया कर्मकर्तृकारकप्रत्ययावपहाय परिहृत्य सनैव अप्रत्ययान्तसनैव ब्रह्मजिज्ञासेति रचितमभूत्। तत्र पक्षद्वयघटकमेकपदगम्यं वाच्यलक्ष्यात्मकमर्थद्वयं दर्शयति

5 —ईहेति ॥ इच्छासंवलित एव विचारः सन्नन्तपदबोध्यो भवति। हीति प्रसिद्धौ। न च युगपद् वृत्तिद्वयविरोधः; काकेभ्यो दधि रक्ष्यतामित्यत्र काकाकाकोभयसाधारण्येनोपघातकमात्र इव ज्ञानोद्देश्यकत्वेन साधारणरूपेणेच्छाविचारयोः सन्नन्तैकवचनपदलक्ष्यत्वसम्भवात्, यष्टि प्रवेशयेत्यादौ यष्टियष्टिधरयोर्लक्षणातो बोधनात्, द्वयोरपि प्रवेशनान्वयात्, अत्रापि जिज्ञासा

10 भवतीतीच्छाविचारयोरेकभवनक्रियान्वयसंभवात्, कर्तव्येतिविधिपरपदाध्याहारेणान्वये त्विच्छांशे विध्यन्वयायोगाद् विचारेच्छयोर्युगपत् कर्तव्यपदान्वयायोगादावृत्त्या शाब्दबोधद्वयमूरीकरणीयम्। जिज्ञासापद एकस्मिन्नवृत्तिमति विचार ईहाशबल एव भवति; बोधकपदस्यावृत्तिमत्त्वेऽप्येकत्वात् परस्परसम्बन्धो विचारेच्छयोरिति श्लोकतुरीयचरणभावः समुन्नेयः। नच

15 —जिज्ञासासूत्रे सन्नन्तस्यैव निर्देशेन विध्यंशयोग्यविचारांशो न विवक्षितः, साधनसम्पत्त्यनन्तरं फलसौन्दर्याद् ब्रह्मज्ञानेच्छा भवतीत्येव वाक्यार्थो विवक्षित इति—शङ्कनीयम्; "तद् विजिज्ञासस्व"[1] "पितरमुपससार"[2] "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदि"[3]त्यादौ विचारांशस्यापि स्पष्टं भानेन सूत्रस्यास्यापि तावत्पर्यन्तानुधावनस्योचितत्वाद् मध्य एवेच्छामात्रे विरामानौ-

20 चित्यात् ॥२३९॥

[184b] देशिकशिखामणिरपि प्रथितभावं
दर्शयति पक्षयुगलं युगपदेव।
वाच्यमपि लक्ष्यमपि संवलितरूपं
द्व्यर्थकधिया सरिति घोष इति यद्वत् ॥२४०॥

25 अथ सूत्रसम्मतत्वेनेदं पक्षयुगलं भाष्यकृतामपि सम्मतमिति दर्शयति—देशिकेति ॥ देशिकशिखामणिरपि आचार्यवर्योऽपि। प्रथितभावम् प्रसिद्ध-

**तात्पर्यकमेव।** पद्ययुगलम् **इच्छापक्षविचारपक्षद्वयम्।** युगपदेव दर्शयति ब्रह्मजिज्ञासाया अनधिकार्यत्वादि**तीच्छापक्षम्** तस्माद् यथोक्तसाधनसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा कर्तव्येति**विचारपक्षं च, पुनरपि** ज्ञातुमिच्छा जिज्ञासे**ति प्रस्तुत्य** फलविषयत्वादिच्छाया **इतीच्छापक्षम्** तस्माद् ब्रह्म जिज्ञासितव्यमि**ति विचारपक्षं च**
5 तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेन वेदान्तवाक्यमीमांसा तदविरोधितर्कोपकरणा निःश्रेयसप्रयोजना प्रस्तूयत **इति पक्षद्वयं** दर्शयति। **इत्यर्थः। यथा शब्दाऽऽभीरपल्ली-द्वयार्थविवक्षया** सरिति घोष इति **निर्देशे** यद्वद् **भवति नद्यां शब्द इति वाच्यार्थावलम्बेनैको बोधो लक्ष्यार्थावलम्बेन नदीतीर आभीरग्राम इति द्वितीयो बोधो भवतीति बोधद्वयं श्लेषरीत्या यथा, तथा प्रकृतेऽपि जिज्ञासेत्यत्र भवति।**
10 **एकपदे** वाच्यमपि लक्ष्यमपि संवलितरूपं **नदीपद इव। इति भावः** ॥३४०॥

[185a] श्रुत्यनुगमादपि भवेत् प्रकृतषष्ठी
ब्रह्मण इतीह ननु कर्मणि विशिष्टा।
इत्युचितमश्रुतिविवृत्युपनिबद्धाऽऽ-
रब्धमतबन्धितमिदं ननु चयोगात् ॥३४१॥

15 **अथ** श्रुत्यनुगमाच्चेति **भाष्यं सूत्रं श्रुतिविवरणं भवतीति सूचकं** ननु **सूत्रस्य श्रुतिविवरणत्वयोजकम्, परन्तु चेन पूर्वहेतुसमुच्चयपरेण योगात् श्रुतिविवरणं सूत्रं न भवति, किन्तु स्वतन्त्रमेवेति मतस्य** ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। ब्रह्म च वक्ष्यमाणलक्षणम् "जन्माद्यस्य यत"[1] **इति स्वतन्त्रपरसूत्रावलम्बेन समारब्धत्वात्** श्रुत्यनुगमाच्चेति **समुच्चयभाष्यमश्रुतिविवरणपक्षसमकक्ष-**
20 **स्वतन्त्रपक्षान्तरद्योतकमित्याह**—श्रुतीति॥ **इह सूत्रे ब्रह्मण इति विग्रहवाक्ये प्रकृता प्रस्तुता षष्ठी** श्रुत्यनुगमादपि "तद् विजिज्ञासस्व। तद् ब्रह्मे"[2]**ति प्रत्यक्षमेव ब्रह्मणः कर्मत्वबोधकश्रुतिस्वारस्यादपि** कर्मणि विशिष्टा **भवेत्** इति **अनेन प्रकारेण** उचितम् **योग्यं यथा भवति तथा। अश्रुतिविवृत्युपनिबद्धारब्धमतेन श्रुतिविवरणं जिज्ञासासूत्रमित्युपनिबद्धं मतं** ब्रह्मणो जिज्ञासेति **तेन सह।**
25 **आचार्यैः** चयोगात **समुच्चयपरचशब्दनिर्देशाद् बन्धितम् सम्बन्धितम्।** इदं श्रुत्यनुगमाच्चेति **भाष्यम्। ननु निश्चयेन भवति। इत्यर्थः। तथा च ब्रह्मण इति कर्मणि**

षष्ठीं साधयितुं पक्षयोर्द्वयोश्चेन समुच्चितयोः समाश्रयणादश्रुतिविवरणपक्ष-समकक्षः श्रुतिविवरणपक्षोऽपि भाष्यकृत्सम्मतः। इति भावः। श्रुत्यनुगमा-च्चेत्यादि भाष्यं च सुगमयोजनम् ॥३४१॥

[185b] ज्ञातुमिति पूर्वसमुपाश्रितबुभुत्सा-
5 कल्पमुपपादयति देशिकमृगेशः।
तृट्प्रकृतितो भवति पक्वफलरूपं
वेदनमिहात्मवृतिभेदनसमर्थम् ॥३४२॥

अथ जिज्ञासापदविवरणपरं भाष्यं तात्पर्यतो विवृण्वन्नवतारयति—ज्ञातु-मितीति॥ ज्ञातुमिति भाष्ये विचारं विहायेच्छामात्रव्यवहारात् देशिकमृगेशः
10 आचार्यसिंहः ज्ञातुमिति भाष्येण पूर्वसमुपाश्रितबुभुत्साकल्पम् पूर्वम् सूत्र-व्याख्यारम्भे समुपाश्रितो यः कल्पः ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति बुभुत्सा-कल्पः, तं कल्पम् उपपादयति विवेचयति। भाष्ये—अवगतिपर्यन्तं च ज्ञानं सन्वाच्याया इच्छायाः कर्म॥ अविद्यानिवर्तकतावच्छेदकसाक्ष्यवच्छिन्नः साक्षा-त्कारोऽत्रावगतिर्ग्राह्यः; फलविषयत्वादिच्छायाः। ज्ञानेन हि प्रामाणेनापरोक्षज्ञान-
15 लक्षणेनावगन्तुमिष्टं ब्रह्म साक्षात् कर्तुं वाञ्छितं ब्रह्म। ब्रह्मावगतिर्हि पुरुषार्थः ब्रह्मसाक्षात्कारः पुरुषार्थः; निःशेषसंसारबीजाविद्याद्यनर्थनिबर्हणादिति भाष्यार्थं सङ्गृह्णाति—तृडिति॥ तृट्प्रकृतितः इच्छास्वभावादिच्छाविषयीभूतं वेदनं पक्वफलरूपम् साक्षात्कारात्मकम्। आत्मवृतिः अविद्या, तद्भेदने समर्थं भवति। तथा चाविद्यानिवर्तनक्षमं साक्षात्काररूपं ज्ञानमेवास्मिन् भाष्ये-
20 ऽवगतिपदेन परिग्राह्यम्। इति भावः ॥३४२॥

[186a] तव्यपरिकल्पितशिरस्कमिह तस्मा-
दित्युपनिबद्धमुपसंहरणवाक्यम्।
प्राप्तसमयं वदतु तव्यनिनदोऽयं
प्रैषमथवा कथितपक्षयुगलेन ॥३४३॥

25 अथ तस्माद् ब्रह्म जिज्ञासितव्यमिति वाक्यमुपसंहारपरमित्यवतारयन् तद्

द्वेधा योजयति—तव्येति ॥ तस्मादित्युपनिबद्धं तव्यप्रत्ययशिरस्कमुपसंहारवाक्यं भवति। तत्र ब्रह्म जिज्ञासितव्यमित्यत्र कथितपक्षयुगलेन सन्नन्तपदवाच्या ज्ञानेच्छा सन्नन्तपदलक्ष्यो ब्रह्मविचार इति पक्षद्वयसत्त्वेनेच्छा सन्नर्थ इति पक्षे इच्छाया विध्यनर्हत्वात् प्राप्तकालं तव्यशब्दो वदतु साधनचतुष्टयसम्पत्त्य-
5 नन्तरं ज्ञानेच्छायाः प्राप्तकालायाः कर्मीभूतं ब्रह्मेति। विचारलक्षणेति पक्षे प्रैषम् प्रेरणां वदतु साधनसम्पत्त्यनन्तरं ब्रह्माविद्यानिवर्तकसाक्षात्कारसाधन-कृतिसाध्याज्ञातविचारकर्मीभूतं ब्रह्मेत्यर्थः। एवं च द्वेधा सूत्रयोजनम्। श्लेषेणावृत्त्या युगपद् वा बोधे गौरवम्—

"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्।
10 अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः"[1] ॥

इति लक्षणानुरोधेन न दोषाय। इति वेदितव्यम् ॥३४३॥

[186b] स्पष्टतरमेकविषयोद्यदनुयोगे
ब्रह्मवचनोल्लसदधीहिलपितेन।
अन्नमिति पूर्वमपरं यत इतीहे-
15 द्धावतरणे प्रतिगिरावनुचिते द्वे ॥३४४॥

"अथातो ब्रह्मजिज्ञासे"[2]ति सूत्रेऽस्मिन् ब्रह्मपदं प्रयुक्तम्। तत्र ब्रह्मपद-गम्यस्वरूपं ब्रह्म च वक्ष्यमाणलक्षणम्—"जन्माद्यस्य यत"[3] इत्यग्रिमसूत्रगम्यतया भाष्ये निरूपितम्। तदेतदधुना सङ्गृह्य सुखावबोधाय त्रिभिः श्लोकैर्दर्शयति —स्पष्टतरमिति ॥ तत्र प्रथमेन श्लोकेनाखण्डापरिग्रहे भृ गु व ल्ली वचना-
20 सौष्ठवं दर्शयति—स्पष्टेति ॥ "भृ गु र्वै वारुणिः। व रु णं पितरमुपससार। अधीहि भगवो ब्रह्मेती"[4]तिवाक्ये ब्रह्मपदघटिते स्पष्टतरम् अतिस्पष्टम् एक-विषयोद्यदनुयोगे सति ब्रह्मलक्षणैकविषये प्रकाशमानप्रश्ने सति, एकार्थपर-प्रश्ने सतीति यावत् इह प्रश्नविषये इद्धावतरणे दीप्तावतरणे प्रकटा-वतरणे प्रतिगिरौ द्वे प्रत्युत्तरे द्वे पूर्वम् प्रथमम् "अन्नमि"[5]ति अपरं यथा
25 भवति तथा "यत"[6] इति द्वे अनुचिते भवतः। "अधीहि भगवो ब्रह्मे"त्येक-प्रश्न एकमेवोत्तरं देयमुचितम्, परन्तु "तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः

श्रोत्रं मनो वाचमिती"[1]तिपदेन विज्ञानानन्दे परिग्राह्ये इत्येकमुत्तरम्, "तं होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेती"[2]ति द्वितीयमुत्तरम्। एवं चैकप्रश्न उत्तरद्वयमनुचितं न्यायेनातिप्रसिद्धेन। इति भावः ॥३४४॥

5 [187a] जीवपरशोधनपुरःसरमखण्डं
ब्रह्मपदगम्यमधिगम्य व रु णा र्यः।
जीवमवबोध्य यत इत्युपकल्प्ये-
शैक्यमवबोधयति युक्तिनिकरैस्तत् ॥३४५॥

अथ प्रसिद्धेनातिसूक्ष्मतरेण न्यायेनोत्तरद्वयानौचित्यपरिहारप्रकारं दर्शयति
10 —जीवेति ॥ व रु णा चार्यः पिता पुत्रप्रश्नसम्बन्धि ब्रह्मपदगम्यं जीवपरशोधनपुरःसरम् जीवशोधनं परस्य ईशस्य शोधनमविद्यामायातुच्छपरिशोधनम्, पुरःसरम् पुरःसाधनरूपं यस्येदृशमखण्डं स्वरूपमधिगम्य अवगत्याखण्डार्थस्य पृष्टस्य जीवेशोभयसामानाधिकरण्यलभ्यत्वेन "तस्मा एतत् प्रोवाच। अन्नमि"[3]त्यादिना पञ्चकोशमयं जीवमवबोध्य ज्ञापयित्वा तमेव पञ्चविधं जीवं "यतो
15 वा इमानी"[4]ति वाक्ये यतोऽन्नादिषु पञ्चसु मध्ये यस्मादिति परिगृह्येशैक्यं युक्तिनिकरैरवबोधयतीत्यन्वयः। भूतजन्युपादानत्वादीन्यन्नादीनां जीवानां पञ्चानां मध्ये यस्य तटस्थविधया लक्षणानि भवितुमर्हन्ति, तद्विचारय। तद् ब्रह्माखण्डस्वरूपं भवतीति भृ गुं विचारे प्रवर्त्य क्रमेणान्नादिकं भ गु विचारद्वारा परित्यज्य "आनन्दो ब्रह्मे"[5]ति निर्णायकवाक्ये जीवेशैक्यरूपमखण्डं
20 निर्धारितम्। तदेवं युक्तिनिकरैरन्नशोधनादिलक्षणैः तत् तस्मादसाङ्गत्यापत्तिदोषभयाद् निर्धारितं यथा भवति तथाऽवबोधयति। इति भावः ॥३४५॥

[187b] ति त्ति र वचस्सु तदखण्डपुरुषार्थं
प्रायश उपाश्रयति नीतिनिचयेन।
ब्रह्मपदजातमिति सूत्रगतमेतद्
25 ब्रह्मवचनं वदति शुद्धचिदखण्डम् ॥३४६॥

अथ सूत्रगतब्रह्मपदं ति त्ति रि श्रुतिगतब्रह्मपदानुरोधेनाखण्डार्थपरमित्याह

—त्ति त्ति रीति ॥ ति त्ति रि वचस्तु ब्रह्मपदजातम् तत् **जीवेशाभेद-लक्षणम्** अखण्डपुरुषार्थं प्रायश उपाश्रयति नीतिनिचयेन । **एकप्रश्न उत्तर-द्वयदानान्यथानुपपत्त्यादिरूपनीतिसमुदायेन प्रायेणाखण्डं गृह्णातीति यावत् । तत्र** "ब्रह्मविदाप्नोति परमि"[1]**ति वाक्ये** "असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेदे"[2]**ति वाक्ये** "अधीहि भगवो ब्रह्मेति"[3] "तद् विजिज्ञासस्व तद् ब्रह्मेति"[4] "तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेती"[5] **इत्यादि-वाक्येषु विद्यमानं** ब्रह्मपदजात**मखण्डार्थमाश्रयति । अन्यानि ब्रह्मपदानि त्वीशपराणीति विभागः । एवं च** "तद् विजिज्ञासस्व तद् ब्रह्म"[6] "अधीहि भगवो ब्रह्मेती"[7]**ति ब्रह्मपदस्याखण्डार्थपरत्वं सिद्धमिति तच्छ्रुतिव्याख्यापरे जिज्ञासासूत्रे विद्यमानं ब्रह्मपदं शुद्धं चिद्रूपमखण्डं** वदतीत्यर्थः । **तथाच जिज्ञासासूत्रगतब्रह्मपदमखण्डपरम् । इति भावः** ॥३४६॥

[188a] ब्रह्म यदखण्डमिह वेदितुमभीष्टं
तद्विदितमेव किमु नो विदितमादौ ।
व्याहतिमितीह तदिति प्रविभजन् स-
न्नुच्यत इति क्षिपति दोषमपि दूरात् ॥३४७॥

अथ **सूत्रगतब्रह्मपदार्थमखण्डलक्षणं जीवेशाभेदरूपं परिगृह्य तस्य प्रतिद्वय-प्रसिद्धिभ्यां व्याहतिरिति पूर्वपक्षपरं** तत् पुनरित्यादिभाष्यं **सङ्ग्रहेणार्थनिर्देश-पूर्वकमवतारयन् सिद्धान्तमप्यवतारयति**—ब्रह्मेति ॥ इह **जिज्ञासासूत्रे जीवेशाभेदलक्षणं** वेदितुमभीष्टं "ब्रह्मजिज्ञासे"[8]**ति** तद् **ब्रह्म** आदौ **इच्छायाः पूर्वं** विदितमेव **प्रसिद्धं** विदितं किमु, नो विदितम् **न ज्ञातमेव । यदि विदितम्, ज्ञात-त्वादिच्छाऽनुपपन्ना, यदि न विदितम्, अज्ञाते कथमिच्छा स्यादिति** व्याहतिम् **व्याघातं विरोधलक्षणं** तत् **पुनरित्यादिभाष्येण** प्रविभजन् सन् **पश्चात्** उच्यत **इत्यादिग्रन्थेन** दोषमपि **व्याघातलक्षणं दोषमपि** दूरात् क्षिपति **निरस्यतीत्यर्थः । अत्र भाष्ये**—तत् पुनरिति ॥ **सूत्रोपात्तमखण्डलणं तद्ब्रह्म प्रसिद्धमप्रसिद्धं वा । प्रसिद्धं चेद् ज्ञातत्वाद् न जिज्ञासितव्यम् ; ज्ञात इच्छानुदयात् । अप्रसिद्धं चेद् ज्ञातत्वाभावादिच्छैव न स्यात् । इत्यर्थः** ॥३४७॥

[188b] स्याद् यदविशेषविषया भवति वित्ति-
स्तद्गतविशेषविषया ननु बुभुत्सा ।
ब्रह्मपदतोऽहमिति च स्फुरणमात्रात्
तद्गतविशेषविषयावगतिवाञ्छा ॥३४८॥

5 अथ अस्ति तावदित्यादि आत्मा च ब्रह्मेत्यन्तं भाष्यं सिद्धान्तपरं सङ्गृहेण व्याकुरुते—स्यादिति ॥ स्यादित्यंशो दृष्टान्तपरः । सामान्यात्मना वित्तिर्ज्ञानम् । यदविशेषविषया यस्य पदार्थस्याविशेषम् सामान्यांशं विषयीकुर्वाणा भवति। तस्य पदार्थस्य यो विशेषांशः, तद्विषया बुभुत्सा बोद्धुमिच्छा भवति । प्रकृते चाखण्डस्य जीवेशोभयसामानाधिकरण्यसिद्धत्वेनोपनिषत्सु
10 ब्रह्मपदश्रवणेन "बृह बृहि वृद्धावि"[1]ति निरङ्कुशाबृहत्त्वाश्रयीभूतं किञ्चिदस्तीतो-शवाचकपदतः स्फुरणमात्रात् प्रतिभानमात्रात् अहमिति सर्वप्राणिसाधारण्येन स्फुरणमात्रात् तद्गतविशेषविषयावतिवाञ्छा भवति । तयोरीशजीवयोः सामान्या-त्मना प्रतिभातयोर्ये विशेषाः—ईशस्य मायापहारेण सर्वप्रमातृमूलचैतन्यात्म-कत्वादयः, जीवस्य स्वोपाधिभूताविद्यापरिहारेणेशाधिष्ठानचैतन्यात्मकत्वादयः
15 सामान्याकारेण वस्तुनः केचन विशेषा भवितुमर्हन्तीति ज्ञाताः, तद्विषया जिज्ञासा भवितुमर्हत्येव । एवं च सामान्यतो ज्ञाते विशेषतो जिज्ञासायां सत्यां तत्प्रयुक्ते विचारे प्रवृत्तेः श्रवणमननादितो जीवेशाभेदलक्षणाखण्डार्थः सिद्धो भवति ; तथैव भृगुवल्ल्यां ब्रह्मवल्लीश्रवणेन सामान्यतो ज्ञानोत्तरं विशेषजिज्ञासया गुरूपसरणे सति विचारेणाखण्डार्थनिर्णय-
20 दर्शनात् । इति भावः ॥३४८॥

[189a] औपनिषदेन वचसा बहुविधेन
ब्रह्मपरमात्मचिदनन्तकमुखेन ।
ज्ञातसमयाखिलपदार्थघटनस्या-
पातमतिरैक्यविषयोदयमुपेयात् ॥३४९॥

25 अथ तत्पदार्थप्रसिद्धिं विशदयति—औपनिषदेनेति ॥ उपनिषत्सु पठितेन

बहुविधेन ब्रह्मपरमात्मचिदनन्तकसुखेन **ब्रह्मपदपरमात्मपदचित्पदानन्तपदसुखपरक-पदादिना** वचसा ज्ञातसमयाखिलपदार्थघटनस्य **ज्ञातः समयः शक्तिः, अखिल-पदार्थः, तद्घटना च येन पुरुषेण तस्य। सामान्यज्ञानात् तत्पदार्थगतो विशेषः, जीवाधिष्ठानचैतन्यात्मकत्वं जीवैक्यमिति यावत्। तस्यैकस्य**
5 **विशेषत्वेन सामान्यात्मना ज्ञातस्य तत्पदार्थः कीदृश इत्याकाङ्क्षितस्य विचारेण स्पष्टमैक्यज्ञानोदयो भवेदिति पूर्वापातज्ञाततत्पदार्थगतविशेषत्वेन रूपेणैक्यावगाहिनी भवतीति जिज्ञासोपपद्यते। इति भावः ॥३४९॥**

[189b] आत्मविषयाऽहमितिबुद्धिरपि लोके
प्राणिषु समस्ततनुभेदकलितेषु ।
10 वास्तवविशेषरहितो हि परमात्माऽ
भिन्नतमरूप इति वैदिकगिरोक्तः ॥३५०॥

**अथ त्वम्पदार्थप्रसिद्धिं विशदयति**—आत्मेति ॥ लोके **जगति** समस्ततनुभेद-कलितेषु प्राणिषु **देवतिर्यङ्मनुष्यादिलक्षणप्राणिषु** अहमिति बुद्धिरात्मविषया **भवति। एतावता त्वम्पदार्थप्रसिद्धिरुक्ता। तस्य त्वम्पदार्थस्य विशेषस्तु**
15 वास्तवविशेषरहितः **निर्विशेषः** परमात्मा **जीवेन सहा**भिन्नतमरूप इति वैदिकगिरोक्तो **भवति। स एव विशेषत्वेन सामान्यात्मना विशेषतो जिज्ञासितो विचारेण निर्णय इति भावः। अत्र भाष्यम्**—अस्ति तावदिति ॥ **ब्रह्मोपनिषत्सु ब्रह्मादि-पदैः प्रतिभासमानमस्ति प्रसिद्धम्। तत्र नित्येत्यादिस्वरूपलक्षणरूपं सर्वज्ञमि-त्यादि तटस्थलक्षणात्मकम्। बृहधातोरर्थानुसरणेन नित्यशुद्धत्वादयोऽर्थाः**
20 **प्रतीयन्ते। ब्रह्मपदस्येत्युपलक्षणं परमात्मपदादीनाम्। एवं च ब्रह्मपदस्यार्थे व्युत्पाद्यमाने त्रिविधपरिच्छेदराहित्यं प्रतीयत इति जीवेशाभेदरूपाखण्डः सामान्यरूपेण ज्ञात एव भवतीत्यर्थः। त्वम्पदार्थद्वाराऽपि प्रसिद्धिमाह**—सर्वस्येति ॥ **ब्रह्मणः सर्वजीवाधिष्ठानचैतन्यरूपत्वादात्मप्रसिद्ध्या ब्रह्मप्रसिद्धि-रस्ति। अहमस्म्येवेति सर्वोऽप्यात्मानं जानाति, न तु विपरीतम्। आत्मनो**
25 **ब्रह्माभेद एव विशेषः सर्वोपनिषद्गम्यः। इत्यर्थः ॥३५०॥**

[190a]　ब्रह्म भुवनेषु सकलेषु यदि जीव-
स्तर्हि विदितं तदखिलैरपि जनैस्तत् ।
नो विविदिषेह भवतीति हि यदीति
स्पष्टतरमाक्षिपति दूषयति नेति ॥३५१॥

5 अथ यदि तर्हीत्यादि भाष्यं पूर्वपक्षसिद्धान्तात्मकम् अनर्थं चेयादित्यन्तं श्लोकैश्चतुभिर्विवृणोति—ब्रह्मेति ॥ "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे-व्याकरवाणी"[1]ति श्रुत्या यदि सर्वेषु भुवनेषु जीवो ब्रह्मैव, तर्हि ब्रह्म निखिलैरपि जनैर्विदितं भवति । तत् तस्मात् कारणाद् विविदिषेह जीवद्वारा विदिते ब्रह्मणि नो भवति ; ज्ञातत्वादिति । यदीति हि ग्रन्थेन स्पष्टतरमाक्षिपति । नेति
10 तदाक्षेपं दूषयतीत्यन्वयः । अत्र भाष्यम्—यदीति । यदि ब्रह्मैवात्मेति, तर्हि लोकैर्जीवस्य विदितत्वादात्मत्वेन ब्रह्मणो विदितत्वाद् जिज्ञासा ताव-दनुपपन्नैव स्यात् । इत्यर्थः ॥३५१॥

[190b]　ऐक्यमिह जीवपरयोः परविशेषोऽ
नैक्यमलरूपमविशेषवपुरुक्तम् ।
15　आत्मविषया ह्यवगतिर्मतविभेदा-
च्चित्रबहुलार्थकलिता भवति नूनम् ॥३५२॥

तद्विशेषं प्रति विप्रतिपत्तेरिति सिद्धान्तभाष्यं विवृणोति—ऐक्यमिति ॥ जीव-परयोः जीवेशयोरैक्यमेव परविशेषः अत्युत्कृष्टविशेषो भवति । अनेनैक्यातिरि-रिक्तो विशेषस्तावदपरो भवतीति ज्ञापितम् । एवं च वाद्यन्तराहता विशेषा
20 अपररूपा वस्तुतस्तावदविशेषात्मका इति सिद्धम् । अनैक्यम् नैक्यं यस्मात् तदनैक्यमीदृशं यद् मलमविद्यालक्षणं तेन रूप्यत इति तद्रूपम् । अविशेषवपुः सामान्यरूपं लोकप्रसिद्धरूपमुक्तम् । विचारकुशलैरिति शेषः । अविशेषरूपमेव विशदयति—आत्मेति ॥ आत्मविषया तावदवगतिर्मतविभेदात् तत्तन्मतभेदात् चित्रा विचित्रा बहुला नानाविधा अर्थास्तैः कलिता नूनं

भवति। एवं च मतभेदेन ये नानाविशेषा अविशेषरूपास्तान् परिहृत्य शुद्ध-विशेषमैक्यलक्षणं विनिर्णेतुं जिज्ञासाऽपेक्षितेति भावः। भाष्यम्—तदिति॥ तद्विशेषम् आत्मगतविशेषं प्रति मुख्यामुख्यलक्षणमैक्यानैक्यविभेदलक्षणं प्रति विप्रतिपत्तेर्जिज्ञासाऽवश्यं भवति। इति भाष्यभावः ॥३५२॥

5 [191a] वित्तिशबलं ननु शरीरमिदमात्मा
खान्यथ मनः क्षणिकसंविदथ शून्यम्।
विग्रहविभिन्न इह संसरति कर्ता
भोक्तृतनुमात्र इति चाणुपरपक्षाः ॥३५३॥

अथ वादिभिरुल्लिखितान् जीवपक्षान् विशेषत्वेन तैस्तैर्निर्णीतान् वस्तु-
10 ताऽविशेषान् भाष्यारूढानेव सङ्ग्रहेण दर्शयति—वित्तीति॥ वित्तिशबलम् ज्ञानसंवलितमिदं शरीरमेवात्मा जीवः। खानि बाह्येन्द्रियाण्यात्मा। मनः अन्तःकरणमात्मा। क्षणिकसंवित् क्षणिकं विज्ञानमात्मा। अथ शून्यमेवात्मा। शरीराद् भिन्नः संसारी कर्ता बाह्यक्रियाकर्ता भोगकर्ता चात्मा। भोक्तृतनुमात्रः भोक्तृस्वरूप एवात्मा। इति चाणुपरपक्षाः जीवपराः पक्षा वादिभिरुट्टङ्किताः।
15 भाष्ये—देहमात्रमिति, इन्द्रियाण्येवेति, मन इति, विज्ञानमिति, शून्यमिति, अस्ति देहादिव्यतिरिक्त इति भोक्तैवेति जीवपक्षाः क्रमेणोल्लिखिताः। इतरत् सुगमम् ॥३५३॥

[191b] जीवपर एव परमेश इति जीवा-
धिष्ठितचिदीश इति नेश इति पक्षाः।
20 एवमिह वादिकलुषं परमखण्डं
निर्णयकृते नयचयैरिह विचार्यम् ॥३५४॥

अथेशे सम्भावितेषु पक्षेषु कांश्चिदुल्लिखितान् दर्शयति—जीवेति॥ परमेशो जीवभिन्नो भवति, ईशो जीवाधिष्ठितचिदिति जीवस्याधिष्ठानभूतचिद्रूप इति,

ईशो नास्त्येवेति ईशपराः पक्षाः सन्ति। भाष्ये चास्ति तद्व्यतिरिक्त इति भोक्तु-रधिष्ठानभूतचैतन्यमेवेश इति च निरूपितम्। एवं च बहवो विप्रतिपन्ना इति भाष्यं सभावं व्याचष्टे—एवमिति॥ एवम् उक्तप्रकारेण वादिभिः कलुषमखण्डम्। इह शास्त्रे निर्णयकृते निर्णयार्थम् नयचयैः न्यायसमुदायै-
5 विचार्यं भवति। भाष्यम्—एवमिति॥ एवम् उक्तरीत्या वादिनो नानापक्षा भवन्ति। तत्र विचारमन्तरा यं कश्चिदर्थं जानन् निःश्रेयसं न प्राप्नुयात्, अनर्थमपि प्राप्नुयात्। अतो वास्तवविशेषो न्यायेन निर्णेय इति जिज्ञासेयं घटते। इति भावः॥३५४॥

[192a] ब्रह्मपरिचिन्तनमथारभत एवे-
10 त्याश्रयति पक्षमपरं ननु परेषाम्।
देशिकवरो विदितनीतिरिह तस्मा-
दित्युपनिबद्धवचनेन विशदेन॥३५५॥

अथ तस्मादित्यादिभाष्यमुपसंहारपरमपि नाधिकारार्थ इत्यादौ सूचितपर-मतावलम्बेनावतारयति—ब्रह्मेति॥ ब्रह्मपरिचिन्तनम् ब्रह्मजिज्ञासापदलक्षित-
15 ब्रह्मविचारम् अथारभत इति परेषामपरं पक्षं विदितनीतिः ज्ञातशब्दमर्यादः इह सूत्रे व्याख्यानान्ते तस्माद् ब्रह्मजिज्ञासोपन्यासमुखेनेति परिनिबद्धवचनेन विशदेन स्पष्टार्थे-नाश्रयतीत्यन्वयः। ब्रह्मजिज्ञासाद्वारा लक्षितवेदान्तविचारः स्वाविरोधित-र्कैरुपबृंहितो निःश्रेयसफलक आरभ्यते। इति तस्मादित्यादिभाष्यार्थः॥३५५॥

ब्रह्मपरचर्चनमथारभत एवे-
20 त्यर्थकथनं न खलु सूत्रकविवृत्त्यै।
व्याप्य सकलं न किल शास्त्रमुपनद्धं
ब्रह्मपरचर्चनमिहाग्निषु न हीति॥३५६॥

अथ तस्मादित्यादेर्निरुक्तं परमतयोजनं निराकुर्वन् परमतं दूषयति—ब्रह्मेति॥ ब्रह्मपरचर्चनमथारभत एवेत्यर्थकथनं सूत्रकविवृत्त्यै न भवति खलु। ब्रह्म-परचर्चनमिह शास्त्र आरभ्यत इत्युक्ते शास्त्रत्वावच्छेदेन तत्कृतमुपलभ्येत।

पञ्चाग्निविद्यायां ब्रह्मपरं चर्चनं नास्ति किल, इति सकलं शास्त्रमभिव्याप्य न हि ब्रह्मचर्चनमुपनद्धमिति ब्रह्मचर्चनमारभ्यत इति प्रथमसूत्रयोजनमयुक्तम्। इत्येवार्थः ॥३५६॥

[192b] वेदशिरसां विवरणे विततरूपे
कुत्रचन कुत्रचन सूत्रकृदुपात्तम्।
ब्रह्मविषयं भवति चर्चनमपीति
ह्यर्थवशसिद्धमुपबद्धमुपरीह ॥३५७॥

अथ सूत्रव्याख्यानान्ते निष्कृष्टसूत्रार्थोपसंहारपरम् तस्मादिति भाष्यं योजयितुमुचितम्, नतु परमतोपन्यासपरम्; तत्र तस्मादित्यक्षरस्वारस्यस्य प्रकरणान्त एतद्वचनपाठस्य चासाङ्गत्यापत्तेः। अतः सूत्रस्य परमतरीत्या नेदं विवरणम्, किन्तु सूत्रविवरणेन साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासा भवतीत्यादिरूपेण "तद् विजिज्ञासस्वे"[1]ति श्रुतिर्विवृता भवति। शास्त्रं चेदं श्रुतिवचनव्याख्यानायैव प्रवृत्तम्। तथाच तत्तदर्थप्रतिपादनपराणां विवरणे सिद्धे नानाविधा अर्था उपासनाज्ञानादिलक्षणाः सिद्धा भवन्ति। तत्र क्वचित् क्वचिद् ब्रह्मविचारोऽपि प्रायेण कृत इति तदभिप्रायेण प्रकृतसूत्राद् बहिरेवायमर्थोऽर्थात् सिद्ध इत्यभिप्रायेण तस्मादित्यादि भाष्यमिति योजयति— वेदेति॥ वेदशिरसां विवरणे सकलवेदान्तानां विवरणे चतुरध्यायीव्यापिनि प्रवृत्ते सति क्वचित् क्वचित् सूत्रकृता व्यासेनोपात्तं ब्रह्मविषयं चर्चनमपीति हेतोः उपरि सूत्रव्याख्यानादुपरि अर्थवशसिद्धम् आर्थिकम् इह भाष्ये तस्मादिति प्रान्तवाक्येनोपनिबद्धम्। अत्र भाष्यम्— तस्मादिति॥ सूत्रविषयवाक्यपरिगृहीतजिज्ञासाद्वारा लक्षितब्रह्मपरवेदान्तवाक्यविचारः स्वाविरोधितर्कोपकरणो मुक्तिप्रयोजनोऽस्मिन् शास्त्रेऽर्थाद् ग्रन्थात् प्रस्तूयते प्रतिज्ञायते; शास्त्रेऽस्मिन् पदे पदे तत्र तत्र ब्रह्मविचारस्य क्रियमाणत्वात्। इत्यर्थः ॥३५७॥

[193a] सत्यमुखमन्त्रमुपरुध्य ननु चर्चा-
मारभत एव तदितीरितगिरेति।

देशिकमणिर्वदति दर्शितपदार्थः
प्राथमिकसूत्रविषयेऽन्त्यवचसा वा ॥३५८॥

अथ प्रकारान्तरेण तस्मादिति भाष्यं योजयति—सत्येति ॥ प्राथमिकसूत्र-विषये तैत्तिरीयश्रुतौ प्रथमसूत्रेण व्याख्यातायां जन्मादिसूत्रैर्व्याख्या-तायां च सत्यां सत्यमुखमन्त्रम् अन्नप्राणमनोविज्ञानानन्दासद्वाषा यतः, तं मन्त्रगणम्। उपरुध्य समाश्रित्य "तद् विजिज्ञासस्वे"[1]तीरितगिरा तित्तिरिश्रुतौ ब्रह्मजिज्ञासोपन्यासमुखेन ब्रह्मपरवेदान्तानां सत्यादिमन्त्राणां मीमांसां तदविरोधितर्कोपकरणां निःश्रेयसप्रयोजनां भृग्वादिरूपो वेदपुरुषः समारभते, वेदपुरुषेण सा प्रस्तूयत इति देशिकमणिः आचार्यः दर्शितपदार्थः दर्शितप्रथमसूत्र-पदार्थोऽन्त्यवचसा तस्मादित्यादिवाक्येन वदति। इत्यर्थः। वेति यद्वेत्यर्थः। पक्षान्तरद्योतनायेदं वेति कथितमिति यावत् ॥३५८॥

[193b] श्रीसत्यवतीतनयश्रीशङ्करदेशिकेन्द्रकृपयैव।
जिज्ञासासूत्रनयाम्बुनिधिस्तीर्णो मया नावा ॥३५९॥

इति श्रीमत्परमहंसपरिव्राजकवर्य श्रीस्वयम्प्रकाशसरस्वतीपूज्यपादशिष्य श्रीश्रीधरानन्दसरस्वतीचरणसेवापरायण श्रुतिनगरेशाभिनवद्रविडार्य बालकृष्णानन्द विरचिते श्रीमच्छारीरकमीमांसाभाष्यवार्तिके जिज्ञासाधिकरणं सम्पूर्णम् ॥

अधिकरणान्ते मङ्गलाय सूत्रभाष्यकृतावनुस्मरन्नधिकरणसमाप्तिं दर्शयति—श्रीति ॥ अतिरोहितार्थः श्लोकः ॥३५९॥

इति श्रीमत्परमहंसपरिव्राजकवर्य श्रीस्वयम्प्रकाशसरस्वतीपूज्यपादशिष्य श्रीश्रीधरानन्दसरस्वती चरणसेवापरायण श्रुतिनगरेशाभिनवद्रविडार्य बालकृष्णानन्द विरचिते श्रीमच्छारीरकमीमांसाभाष्यवार्तिकविवरणे जिज्ञासासूत्रं सम्पूर्णम् ॥

मुनिभिः परितो वीतं मुदिरसमानगतिं सच्चिन्मुद्रम् ।
स त्य व ती सु त मन्तः संसेवे जन्मयोगसंसिद्ध्यै ॥१॥

श्रीम द्वे द व्या स श्री श ङ्क र यतिपुरन्दरौ नत्वा ।
[194a] जन्मादिसूत्रभाष्ये वा र्ति क वि वृ तिं क्रमेण करवाणि ॥

5 श्रीम च्छ ङ्क र यमिवरचरणाम्बुजद्वये सदा लसतु ।
जन्मादियोगसङ्गतनयान् विवेक्तुं मनोभ्रमरः ॥२॥

अथ जन्मादिसूत्रम् । तत्र तद्भाष्यार्थस्फूर्त्यै सूत्रभाष्यकर्तारावनुसन्धत्ते श्लोकाभ्याम्—मुनिभिरिति ॥१॥ श्रीमदिति ॥ सुगमौ श्लोकौ ॥२॥

## ॥ जन्माद्यस्य यतः ॥ I. 1. 2

10 अस्य परिदृश्यमानप्रपञ्चस्य यतः सर्वशक्तेर्जन्मस्थितिभङ्गं भवति, तद् ब्रह्मेत्यर्थः ॥

अत्रेदं विचार्यते—अथ जिज्ञासासूत्रे विचार्यतया समुपात्तब्रह्मलक्षण-परतयैतज्जन्मादिसूत्रयोजनं तावदसङ्गतम् ; तथा सति जगज्जन्मादिकारणं ब्रह्मेति स्पष्टनिर्देशे सम्भवति "जन्माद्यस्य यत"[1] इति पदत्रयेण सापेक्षतया
15 तत्पदाध्याहारेण वाक्यद्वयविधया विरचनस्य गौरवाधायकत्वापत्तेः ॥

अथ यदीदं न लक्षणपरम्, किन्तु क्षित्यादिकं सकर्तृकम्, कार्यत्वात्, घटवदिति गौ त म तन्त्ररीत्या परमेश्वरानुमानपरम् । एवं च अस्य क्षित्या-दिप्रपञ्चस्य यतः कर्तुर्जन्मादि भवति, तत् सर्वज्ञत्वादिना सिद्ध्येत्, अन्यस्ये-दृशस्याभावाद् ब्रह्मैवेति सिद्ध्यतीति, तर्हि भवति पदत्रयेण सूत्ररचनं
20 सङ्ग[194b]तम् ; प्रकृतानुमानसूचनाय पक्षादिभेदप्रतिपादनपरपदभेदौ-चित्यात्, परन्तु न्यायमते प्रपञ्चस्य कार्यत्वसाधितेन सकर्तृत्वेनैवेशसाधनात्, तथैवाभिमतार्थसाधनपरत्वे चैतत्सूत्रस्येदं कार्यं यत्कर्तृकमित्येव सूत्रविर-

चनौचित्येन जनिमत्ताया एव कार्यतारूपत्वेन तस्यैव परमते हेतुत्वेन सिद्ध-
रूपत्वौचित्येन प्रपञ्चगतसकर्तृताया एव साध्यत्वेन प्रकृतेऽस्य जन्म
यतो भवतीति प्रपञ्चगतजनेः कार्यतारूपाया यत इति सकर्तृकत्व-
साधनमसङ्गतमेव भवेत्; कार्यतया प्रपञ्चे सकर्तृकत्वस्यैव क्षित्याद्युपादान-
5 गोचरापरोक्षज्ञानचिकीर्षाकृतिमदीश्वरसिद्धये साधनीयत्वात्। किञ्च
जन्यताया एव हेतुत्वसम्भवे जन्मादीत्यादिग्रहणमनतिप्रयोजनमेव। यदि
च क्षित्यादिकम्, सकर्तृकम्, नश्वरत्वात्, घटवदिति हेत्वन्तराभिप्रायेणादि-
ग्रहणमिति, तर्ह्यपीश्वरस्येतरबाधवशेनैव योग्यतया सकर्तृकत्वसिद्धिपृष्ठ-
भावेन सिद्धया जन्मादेरिदं सकर्तृकमित्येव विरचनमुचितम्, नान्यथा
10 यत्कर्तृकमिति यत्पदघटितम्; सूत्रस्यानुमानानुवादपरत्वे प्रयोजनाभावात्,
प्रत्युत तद् ब्रह्मेत्यध्याहारेण गौरवापत्तेः॥

यदि च नैयायिकाभिमतानुमानानुवादेन सकर्तृकत्वसिद्धिपृष्ठभावेन
सिद्धयतोऽपरोक्षज्ञानचिकीर्षाकृतिमत ईशस्य स्पष्टं बोधनाय क्षित्यादिकम्
कार्यत्वात् यत्कर्तृकम्, तद् अपरोक्षज्ञानादिमद् ब्रह्म भवतीति, तर्ह्येवं
15 यत्पदसार्थक्येऽपि "जन्माद्यस्य यत"[1] इत्येवं विरचनमनुमा[195a]नाननुगुण-
मिति प्रगुपक्षिप्तो दोषोऽनुद्धृत एवेति दिक्॥

अथ—नेदं सूत्रं लक्षणपरम्, नवाऽनुमानपरम्, किन्तु "यतो वै"[2]त्यादि-
श्रुतिव्याख्यापरम्। एवं च "यतो वा इमानि भूतानि जायन्त"[3] इति वाक्यानु-
रोधेन यत इति जन्मादीति अस्येति च विरचनं सङ्गतं भवतीति—चेत्,
20 एवमपीदं विरचनमसङ्गतमेव; श्रुत्यनुसारेण तद्विरचनप्रवृत्तौ श्रुतौ "यतो वा
इमानि भूतानि जायन्त"[4] इति निर्देशेन तत्क्रमानुरोधेन यतोऽस्य जन्मादीत्येव
विरचनौचित्येन व्यत्ययेन विरचनस्यानुचितत्वात्। सत्यमिति मन्त्रपाठ-
क्रमेणैव तन्मन्त्रभावपरब्रह्मणो "ब्रह्मविदाप्नोति परमि"[5]ति पदविन्यासक्रम-
दर्शनात् तथैव प्रकृते श्रुतिविवरणरूपसूत्रे पदविन्यासौचित्यात्। किञ्च
25 जन्माद्येषां यत इति श्रुतिगतबहुवचनानुरोधेन निर्देशमपहायास्येति निर्देशोऽ-
प्यनुचित एव॥

एवं भाष्यमपि कथं घटनीयम्;

"विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥"[6]

इत्यधिकरणलक्षणादानन्दमयाद्यधिकरणेषु तथैव विरचनदर्शनात्, प्रकृते संशयपूर्वपक्षादीनामदर्शनादधिकरणत्वस्यैव निर्वोढुमशक्यत्वात्॥

किञ्चतत्सूत्रभाष्यं परस्परविरुद्धमिव। तथाहि—किंलक्षणं पुनस्तद् ब्रह्मेति श्रुतिसंस्पर्शविहीनं कम्बुग्रीवादिमत्त्वरूपघटलक्षणवद् ब्रह्मलक्षणपरत्वेन सूत्रमिदमवतार्य अस्य प्रत्यक्षादिसंनिधापितस्य जगतः यतः सर्वज्ञात् सर्वशक्तेः जन्मस्थितिभङ्गं भवति, तद् ब्रह्मेति सूत्रं लक्षणपरं [195b]व्याख्यायेदं लक्षणं नातिव्याप्तम्; ईशादन्यस्येदृशलक्षणवतोऽदर्शनादित्युपपाद्य, इदं सूत्रं जगदीशानुमानपरं भवत्वित्याशङ्क्य, नेदं सूत्रमनुमानपरं श्रुतिवचनविवरणपरत्वादिति महता प्रबन्धेन निरूप्य, विवरणार्हा श्रुति र्भृ गु व ल्लीति कथितम्। तत्र प्रथमतो घटादिलक्षणवद् ब्रह्मलक्षणं स्वतन्त्रं सूत्रविवक्षितमित्युक्त्वा पश्चात् श्रुतिव्याख्यापरमिदं सूत्रमिति कथने पूर्वोत्तरासाङ्गत्यमतिस्पष्टमेव, शुद्धलक्षणपरत्वोपक्रमेण मध्येऽनुमानपरत्वाक्षेपे नेदमनुमानपरम्, किन्तु शुद्धलक्षणपरमेवेत्येव वक्तुमुचितत्वात् परिगृहीतलक्षणपरत्वविस्मरणेन श्रुतिव्याख्यापरत्वव्यवस्थापनमनुचितमेव॥

एवं "सत्यं ज्ञानमि"[1]त्यादिस्वरूपलक्षणम्, जगज्जन्मादिकारणत्वं तटस्थलक्षणमिति सिद्धान्तादिह शुद्धं लक्ष्यं परिगृह्येशगतजगज्जन्मादिकारणत्वलक्षणे स्वीक्रियमाणे लक्षणमिदं शुद्धस्वरूपासंस्पर्शित्वादिशद्वारा शुद्धज्ञापकत्वात् तटस्थलक्षणं शुद्धस्य भवेत्। प्रकृते च सर्वज्ञात् सर्वशक्तेर्जगतो जन्मादि भवतीति विवरणादीशस्यैव परिग्रहेण तस्येदं स्वरूपलक्षणमेवेति तटस्थलक्षणव्यवहारो घटयितुमशक्य एव; शुद्धस्येहापरिग्रहात्॥

अथ—जिज्ञासासूत्रे शुद्धः परिगृहीत इति तदभिप्रायेण तटस्थलक्षणत्ववाद इति—चेत्, न; जिज्ञासासूत्रे शुद्धपरिग्रहे मानादर्शनात्, मानदर्शने वा यतः शुद्धाद् विवर्ताधिष्ठानात् सर्वज्ञेशद्वारा जगतो जन्मादि, तद् ब्रह्मेति विवरणे समुचिते स[196a]ति यत इति पदस्य सर्वज्ञेशपरत्वयोजनं घटनानर्हमेव॥

किञ्च "श्रोतव्यो मन्तव्यः"[2] "पण्डितो मेधावी"[3]त्यादिश्रुत्यनुरोधेन वेदान्तवाक्याद् वाक्यार्थज्ञाने जननीयेऽनुमानमपि सहकारीति भाष्यकृद्भिरभ्युपगमात्, "अथातो ब्रह्मजिज्ञासे"[4]त्यारभ्य—"अनावृत्तिः शब्दादि"[5]त्यन्ते शास्त्रे प्रतिसूत्रं श्रुतिमुदाहृत्य विचारप्रवर्तनादर्शनात्, तर्कचरणादौ तथा दर्शना-

भावात्, अन्यत्रापि गुणसूत्रेषु केवलयुक्तिपरत्वस्य दर्शनात्, आनन्दमये-क्षत्यधिकरणाद्यनुरोधेन श्रुतिविचारेण जायमानज्ञानार्थं श्रुतिसहकार्यनुमानं जन्मादिसूत्रे विवक्षितमित्येव परेषां संमतत्वात्, श्रुतिविचारपरसूत्रसंनिधाने श्रुतिप्रमाणासहकृतकेवलानुमानपरमिदं सूत्रमिति केनापि न्यायविदा वक्तुम-
5 शक्यत्वाद् इदं सूत्रं श्रुत्यनपेक्षानुमानपरं न भवतीति दूषणमनुक्तोपालम्भ-रूपमेव भवेत्; नन्वित्यादौ सूत्रमिदमीशानुमानपरमित्येव दर्शनेन तत्र श्रुति-निरपेक्षत्ववार्ताया एवाभावात्॥

यद्यपीहेश्वरकारणिनो मन्यन्त इत्युपक्रमेण नन्विहेतिवाक्यमपि श्रुतिनिरपेक्षानु-मानपरमिति योजनार्हमिति नेहानुक्तोपालम्भ इति भवति; तथाऽपि
10 परशास्त्रेऽनुमानस्य श्रुतिनिरपेक्षस्याभ्युपगमेऽपि का णा द गौ त म यो वैदिकत्वेन प्रकृतशास्त्रानुरोधेन जन्मादिसूत्रं योजयतोः श्रुतिनिरपेक्षानुमान-परत्वं वक्तुमशक्यमेव; प्रकरणविरोधस्फूर्तेः। अतोऽनुक्तोपालम्भः समु-चित एव॥

किञ्च जन्मादिसूत्रं श्रुतिनिरपेक्षानुमानपरमिति कथने सति नेदं श्रुति-
15 निरपेक्षानुमानपरम्, किन्तु श्रुतिसापेक्षानुमा[196b]नपरम्; "श्रोतव्यो मन्तव्यः"[1] इत्यादिप्रमाणादिति निर्देशादपि परपक्षनिराकरणसम्भवात् वेदान्त-वाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते, वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मा-वगतिरिति कथनं परपक्षनिराकरणपरमसङ्गतमेव॥

यद्यपि सूत्रमिदं श्रुतिव्याख्यापरम्, नानुमानपरम्, इत्यनुमानसामान्यपरत्व-
20 निराकरणे श्रुतिनिरपेक्षानुमानपरत्वनिराकरणमपि सिद्ध्यत्येव; तथाऽपि वेदान्तवाक्यानि हीत्यादिकथनमसङ्गतमेव। तथाहि—सूत्रमयी "अथात"[2] इत्यादिचतुरध्यायी सर्वाऽपि श्रुतिव्याख्यारूपा; ब्रह्मावगतिहेतुभूतवाक्य-विचारपरत्वादिति किल प्रघट्टकार्थः। तत्र तर्कचरणादिसूत्रेषु श्रुतिव्याख्या-रूपताया बाधात् हेतोरसिद्धेश्च वेदान्तवाक्यग्रथनार्थत्वात् सूत्राणामिति वक्तु-
25 मशक्यमेव। अपि च जन्मादिसूत्रस्यानुमानपरत्वं न सम्भवति, किन्तु श्रुतिव्याख्यानपरत्वमेवेत्यत्राव्यभिचरितो हेतुर्निरूपणीयो भवति। न च स निरूपितो दृश्यते भाष्ये, प्रत्युत श्रुतिनिरपेक्षानुमानखण्डनेन श्रुति-सापेक्षानुमानपरिग्रहे हेतोर्महता श्रमेण निरूपणेन जन्मादिसूत्रस्य श्रुत्य-पेक्षितानुमानपरत्वसूचनमेवोपलभ्यते। एवं च सामान्यतः प्रथममनुमान-

परत्वं न सम्भवतीति प्रतिज्ञायान्ते प्रतिज्ञानुरूपतया श्रुतिविवरणपरत्व-व्यवस्थापनमसङ्गतमेव ; उपक्रमोपसंहारानुरोधेन मध्येऽपि जन्मादिसूत्रस्य श्रुतिसापेक्षश्रुतिनिरपेक्षानुमान [ 197a ] द्वयतत्परत्वाभावापहेतुनिर्देशौचित्येन तदपहाय श्रुतिसापेक्षानुमानपरिग्रहसाधनस्य जन्मादिसूत्रं श्रुतिसापेक्षानुमान-परमिति तात्पर्योज्ञायकस्योपक्रमोपसंहारविरुद्धस्य महता श्रमेण स्वीकारात् ॥

अथ—भाष्यं न पूर्वोत्तरविरुद्धम् ; ब्रह्म जिज्ञासितव्यमित्युक्तम् । किंलक्षणं पुनस्तद् ब्रह्मेत्यारभ्य प्रवृत्तं नन्विहेतिपर्यन्तं जन्मादिसूत्रस्य लक्षणपरत्वोप-पादनपरमधिकरणपर्याप्तम् ; एतावतैवाधिकरणार्थपरिसमाप्तेः, अग्रिम-ग्रन्थस्तु न जन्माद्यधिकरणान्तर्गतः, किन्तु केवलानुमानेनैवेश्वरसिद्धिरस्त्विति शङ्कामपरां नन्विति प्रवर्तितां वारयितुं "शास्त्रयोनित्वात्"[1] "तत्तु समन्वया-दि"[2]त्यधिकरणसिद्धार्थानुवादपरः । तथाच न पूर्वापरग्रन्थविरोधावतारः । एतदेवानुमानमित्यादिग्रन्थस्तु जन्माद्यधिकरणसङ्गतः । जिज्ञासासूत्रे प्रतिज्ञा-विषयत्वेन परिगृहीतब्रह्मणो जन्मादीति लक्षणं सम्भावनाहेतुः ; लक्ष्यं विना लक्षणस्थित्ययोगात् । प्रकृतलक्षणे येयं सम्भावनाहेतुता, साऽतीव प्रशस्ता भवति । यतो वैशेषिकाः सम्भावनाहेतुमेव जन्मादिकमनुमानप्रमाणत्वेन स्वीकृत्येश्वरं साधयन्ति ; अन्येषां लक्षणानामितरव्यावृत्तिव्यवहारान्यतर-साधकत्वेऽपि जन्मादिलक्षणस्य धर्म्यनुमापकताया अपि विशिष्य सत्त्वे-नोत्कर्षौचित्यात् । यद्यपि प्रतिज्ञया सम्भावितस्य लक्षणमितरभेदानुमानद्वारा निर्णायकमेव ; तथाऽपि प्रकृतविषयस्यातिगहनत्वात् श्रोतृबुद्धिपरिपाकेन प्रतिज्ञासम्भावितस्यैवैककोटिलक्षणस्य पुनरुप्युत्कटत्वसंवादन[197b]मिह भवेदिति विवेचनीयम् । एवं च सम्भावनाहेतुरयमतिविशिष्ट इति ज्ञापनायायं ग्रन्थ इति न कोऽपि दोष इति—चेत्, सत्यमेवम् । परन्तूत्तराधिकरण एव शास्त्रेण मुख्यसमधिगम्यत्वेन साक्षेपं ब्रह्म निरूपयितुमुचितमिति ग्रन्थो-ऽयं नन्वित्यादिलक्षणस्तत्रैव पठनीयो भवेत्, न तु पूर्वाधिकरणे ॥

किञ्च यद्ययं नन्वित्यादिग्रन्थ उत्तराधिकरणार्थपरः, तर्हि नन्विहापि तदेवो-( पराभिमतमनुमानम् ) पन्यस्तमिति जन्मादिसूत्रे शङ्कायां कृतायाम् वेदान्त-वाक्यप्रथनार्थत्वात् सूत्राणामिति, वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्त इति च सर्वसूत्रसाधारण्येन बहुवचनान्तसूत्रपदेन वेदान्तवाक्यविचारपरत्वव्यवस्था-पनेन जन्मादिसूत्रस्यापि वेदान्तवाक्यविचारपरत्वमेव, नानुमानपरत्वमिति

स्पष्टं सूचनाद् उपसंहारवेलायां च तस्माद् जन्मादिसूत्रं नानुमानोपन्यासार्थम् । किन्तर्हि । वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्तवाक्यं यत् सूत्रेण लिलक्षयिषितमिति प्रकृतजन्मादिसूत्रमेवावलम्ब्य "भृ गु र्वै वारुणिरि"[1]त्यादिवचनजातमुपक्रमोपसंहारमध्यपरामर्शैरुदाहृत्य एवञ्जातीयकान्यन्यान्यपि वाक्यान्येत्सूत्रविषय इति

5 कथनं कथं घटनीयं स्यात्। तस्माद् जन्मादिसूत्रस्य श्रुतिपरिग्रहमन्तरा केवलसम्भावनाहेतुभूतलक्षणपरत्वमेतद्भाष्यस्यायुक्तमेव ॥

अथ—इदं जन्मादिसूत्रं "यतो वा इमानी"[2]त्यादिश्रुत्युपात्तलक्षणपरमित्यर्थपरम् ; किंलक्षणं पुनरित्यादिभाष्ये जन्मन आदित्वं "यतो वे"[3]त्यादिश्रुतौ जन्मादीनां क्रमदर्शनाद् विज्ञेयमिति भा[198a]ष्य एव विवेचनदर्शनात्।

10 एतदेवेत्यादि भाष्यं तु जन्मादिलक्षणन्त्वतिप्रशस्ततरम् ; यतः परेऽपि पुनरिदं हेतुं कृत्वेश्वरास्तित्वं साधयन्तीति लक्षणप्रशंसापरम्। नन्वित्यादिभाष्यं पुनर्जन्मादिसूत्रस्य श्रुतिनिरपेक्षेश्वरानुमानपरत्वमस्त्वित्याशङ्कापरम्। न वेदान्तवाक्येत्यादिग्रन्थस्तु श्रुत्युपात्तश्रुतिसापेक्षानुमानपरत्वं जन्मादिसूत्रस्य प्रतिपादयन् भवतीति न काऽप्यनुपपत्तिरिति—चेत्, सत्यम् ; तथाऽपि

15 पूर्वोत्तरासङ्गतमेवेदं भाष्यं भवति ; श्रुत्युपात्तब्रह्मलक्षणपरं जन्मादिसूत्रमिति प्रथममारभ्य पश्चात् श्रुत्युपात्तानुमानपरमिति निरूपणस्यासाङ्गत्याधायकत्वात्। किञ्च जन्मनश्चादित्वं कथमित्यपेक्षायां वस्तुस्वाभाव्यात्, तथैव श्रुतिनिर्देशदर्शनात्, सूत्रेऽप्यस्मिन् तद्वत्क्रमाश्रयणादित्युक्ते श्रौतमिदं लक्षणमित्यंशासिद्धेः, ब्रह्म जिज्ञासितव्यमित्युक्तम्, किंलक्षणं पुनस्तद् ब्रह्मेत्यवतारणे

20 लौकिकलक्षणनिर्देशरीतेरेव दर्शनात् यत इत्यादिर्लक्षणपरा श्रूयते ; तत्राय संशयः, अयं पूर्वपक्षः, अयं सिद्धान्त इत्येवं विरचनादर्शनात्। एवं नन्वित्यादिभाष्यं श्रुतिनिरपेक्षेश्वानुमानपरमित्युक्तमयुक्तम् ; तस्मिन् श्रुतिनिरपेक्षतापदादर्शनात्, सामान्यतोऽनुमानपरं जन्मादिसूत्रमस्त्वित्येव क्षिप्रप्रतीतेः। एवं न वेदान्तेत्यादिसिद्धान्तभाष्यं श्रुतिसापेक्षा[198b]नुमानपरत्वं

25 जन्मादिसूत्रस्य वदतीत्युक्तमयुक्तम् ; सर्वेषामपि सूत्राणां श्रुत्यर्थग्रथनरूपत्वकथनेन श्रुत्युपात्तार्थस्य सूत्रैः केवलमनुवादे प्रयोजनाभावात् श्रुतिवचनेष्वपन्यायेनासदर्थप्रत्ययप्रसक्तौ सन्न्यायप्रदर्शनेन सदर्थग्राहकाणि सर्वाण्यपि सूत्राणीति कथितं भवति। एवं च जन्मादिसूत्रं वेदान्तवाक्यस्य कस्यचिद् न्यायप्रदर्शनेनार्थनिर्णायकमिति सिद्धं भवति। एवं "यतो वे"[4]त्युपात्तेऽर्थेऽ-

नुमाने वा लक्षणे वा न्यायप्रदर्शनपरं सूत्रमिदमिति सिद्ध्यति। एवं चानुमाने श्रुतिसापेक्षत्वांशो "मन्तव्य"[1] इत्यादिश्रुत्या सिद्ध्यतु नाम, नैतत्सूत्रमहिम्ना तत् सिद्ध्यति। सूत्रन्तु श्रुत्यर्थनिर्णायकन्यायपरम्। श्रुत्यर्थस्तु योग्यता-महिम्ना लक्षणात्मनाऽनुमानात्मना वा सिद्ध्यतु। तत्र परार्थानुमानं पञ्चावयवसमेतं प्रतिज्ञादिवाक्यार्थज्ञापनद्वारा सम्भावितशङ्कापट्टकलक्षण-संशयादिनिवर्तनद्वारा निर्णयात्मकं शाब्दबोधं जनयति, नतु पञ्चावयवतः शाब्दबोधानन्तरमनुमितिरपरोदेति। यदि पश्चाद् ज्ञानान्तरमुदेतीत्याग्रहः, तर्हि मानसमेव तद् ज्ञानं भवतु। "अग्निहोत्रं जुहोति।"[2] "यवागूं पचती"[3]-त्यादौ पक्त्वा यवागूमग्निहोत्रं तया जुहोतीति विशिष्टबोधवदिति पक्षे "यतो वे"[4] त्यादिवाक्यं नानुमानपरम्, किन्तु लक्षणपरमित्येव सिद्ध्यति॥

अपि च ब्रह्मणः सिद्धवस्तुरूपत्वादनुमानप्रवृत्तिरास्तामित्याशङ्कानिवारणाय प्रवर्तितेन तत्सम्बन्धाग्रहादनुमानं न प्रवर्तत इत्यर्थकेन भाष्येण सूत्रमिदं श्रुति-सापेक्षानुमानपरम्, न निरपेक्षानुमानपरम्; सूत्रेण व्याख्याय[199a]मान-श्रुतिः परार्थानुमानरूपेत्यादि प्रतिपाद्यत इति योजनं विरुद्धमेव भवेत्; तत्र सामान्यत एवानुमानं न प्रवर्तत इत्युक्त्वा जन्मादिसूत्रं "यतो वा इमानी"[5]त्यादि-श्रुतिव्याख्यापरमिति स्पष्टमेव कथनात्। किञ्च सम्बन्धाग्रहादित्यानुमान-खण्डनमयुक्तम्; तथासत्यतीन्द्रियसामान्यानुमानं क्वापि न स्यात्, उक्तयुक्तेः। किञ्चान्ते तस्माद् जन्मादिसूत्रं नानुमानोपन्यासार्थम्। किन्तर्हि। वेदान्तवाक्य-प्रदर्शनार्थमित्युपक्रम्य जन्मादिसूत्रपरिगृहीता श्रुतिस्तात्पर्यसूचनपूर्वक-मुपन्यस्ता—"भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेती"[6]त्युपक्रम्याह—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मेति"[7]। तस्य च निर्णयवाक्यम् "आनन्दाद्ध्येवे"[8]त्यादीति। अत्र "अधीहि भगवो ब्रह्मेती"[9]-त्युपक्रम्यादौ "यतो वे"[10]त्यादिनिर्देशात् "तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तं होवाचे"[11]ति मध्यमवाक्यानामपि स्मारणात् "अधीहि भगवो ब्रह्मे"[12]ति ब्रह्मण एकस्य प्रश्ने "तस्मा"[13] इत्यादिनाऽन्नादेः "तं होवाचे"[14]त्यादिना ब्रह्मणश्चोत्तरितत्वेनैकप्रश्न उत्तरद्वयस्य परस्परविरुद्ध-स्यासाङ्गत्यात् तत्साङ्गत्याय "अधीहि भगवो ब्रह्मेती"[15]तिपदमखण्डार्थस्य जीवेशोभयसामानाधिकरण्यलभ्यस्य बोधकं भवति। एवञ्चा"न्नमि"[16]त्यादिना

त्वम्पदार्थो निरूपितः ; विना जीवनिर्देश[199b]मखण्डार्थकथनायोगात्, "यतो वै"[1]त्यादिवाक्ये यत इति पदस्य सर्वनाम्नोऽनिर्धारितबुद्धिस्थपरामर्शकत्वात्, पूर्वं चान्नादीनां पञ्चानामपि भृगोः श्रुतब्रह्मवल्लीकत्वेन सङ्ग्रहेण कथनात्, तत्र चान्नादीनां पञ्चानामप्युपस्थितत्वेनेदमेव यत्पदग्राह्यमित्यत्र
5 निर्णायकाभावात् पञ्चानां मध्ये यत अन्नाद्यन्यतमादिति यत्पदेन निर्दिश्येमानि भूतानि जायन्त इत्यादिनेशीयजगज्जन्मादि भवतीति परिपाट्याऽन्नाद्यन्यतमोद्देशेनेशगतजगद्धेतुताया विधानमखण्डार्थसिद्धये। अत एवेशगतजगद्धेतुत्वस्यान्नाद्यन्यतमे शोधिते शुद्धचैतन्यरूपेऽभेदे वा बाधात् तटस्थमेवेदं लक्षणमिति ज्ञापनात् "यतो वै"[2]त्युक्तस्यान्नाद्यन्यतमलक्षणस्य परिग्रहाय
10 निर्णायकवचनमानन्दादित्यादिलक्षणमिति निर्देशात् यतोवाग्वाक्यानन्दवाक्यान्तर्गतानामपि वाक्यानां "अन्नं ब्रह्मेति"[3] "प्राणो ब्रह्मेति"[4] "मनो ब्रह्मेति"[5] "विज्ञानं ब्रह्मेती"[6]तिवाक्यानामपि यत्पदार्थतया प्रसक्तानां शोधनाय परिग्रह इति सूचनेन शोधितत्वम्पदार्थ एव यत्पदार्थ इति स्पष्टं ज्ञापनात् "आनन्दाद्ध्येवे"[7]ति निर्णायकवाक्यपरिग्रहेणानन्दमय इत्युपात्तजीवस्य
15 परिग्रहो ब्रह्माभेदविधान उद्देश्यतयेति सूचनात् "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"[8]ति "यो वेद निहितं गुहायां परमे व्योमन्नि"[9]ति सत्यमन्त्रोपात्तशोधितजीवपर्यवसितायाः श्रुत्यैव स्मारणात् "जन्माद्यस्य यत"[10] इति सूत्रेऽपि यत इति पदस्य श्रुतिगतत्वेन प्रत्यभिज्ञानाद् जीवोद्देशेनेशत्वविधानमिह विवक्षितम् ; "तत्त्वमसि"[11] "अहं ब्रह्मास्मी"[12]त्यादाविवेत्यर्थस्य
20 स्पष्टत्वात् ॥

**एतदधिकरणारम्भे** यत इति कारणनिर्देश इत्यु[200a]पक्रम्य यतः सर्वज्ञात् सर्वशक्तेः कारणाद् जन्मस्थितिभङ्गं भवति, तद् ब्रह्मेति वाक्यशेष इति निर्देशाददिभाष्यमन्त्यभाष्यं च परस्परविरुद्धमिव भवति। अपि च अपिचान्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते
25 विनश्यतीति षड्भावविकारेषु त्रयाणां जन्मादीनामिह परिग्रहादवशिष्टानां त्रयाणामपि तेष्वेवान्तर्भावात प्रपञ्चसामान्यगतजन्मादीनां सामान्यात्मना हेतुः परमात्मेति भाष्यकृद्भिः सिद्धान्तस्पष्टीकरणात् तदनन्तरं या स्कपरिपठितानान्तु जायतेऽस्तीत्यादीनां भावविकाराणां परिग्रहो न युक्तः, तथात्वे या स्कपरिगृहीतभावविकाराणां प्रपञ्चस्थितिकालिकघटपटादिपदार्थेषु

च सम्भाव्यमानत्वेनावान्तरकारणपरिग्रहेणापि निर्वाहसम्भवेन मूलकारणीभूतब्रह्मणः परिग्रहो न स्यादिति शङ्का स्यात्, तद्वारणाय ब्रह्मणो योत्पत्तिस्तत्रैव स्थितिः प्रलयश्च ते परिगृह्यन्त इति कथनात् परस्परविरुद्धमिव भवति; या स्क परिगृहीतभावविकारापेक्षया विकारान्तराणामन्येषामलीककल्पत्वात्, तुशब्देन वैलक्षण्यायोगात्, या स्क परिगृहीतजन्मादिष्वेव त्रिषु शिष्टत्रिकान्तर्भावकथनात्, या स्क परिगृहीतत्वेन जन्मादीनां ब्रह्मज्ञापकत्वम् या स्कापरिगृहीतत्वेन ब्रह्मज्ञापकतेत्यत्र मानाभावात्, अस्येति सूत्रोपात्तप्रपञ्चत्वावच्छिन्नसकलप्रपञ्चहेतुत्वस्य नियमेन ब्रह्मज्ञापकत्वमस्त्येवेति स्वयमेव [200b] कथनाद् या स्क परिपठितजन्मादीनामेवान्यत्रापि प्रसिद्धत्वेन तेषामेव प्रपञ्चसामान्यगतानां हेतुताया नियमेन ब्रह्मज्ञापकत्वे व्यभिचाराभावात्, जन्मादित्रिकस्य च गर्भीकृतेतरविकारस्यापि भाष्यकृत्संमतस्य यत्किञ्चिद्घटपटादिग्राहकस्य नियमेन परमत इव ब्रह्मज्ञापकत्वाभावात्। अतः स्वरीत्या ब्रह्मज्ञापकत्वं नियतम्, या स्करीत्या त्वनियतमित्युक्तिरनुचितैव भवति ॥

तथाहि या स्कः—"तद्यान्येतानि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्च तानीमानि भवन्ति। तत्रैतद् नामाख्यातयोर्लक्षणं प्रदिशन्ति भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि। तद्यत्रोभे भावप्रधाने भवतः—पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम्। मूर्तं सत्त्वभूतम्। सत्त्वनामानि व्रज्या पक्तिरिति। अद इति सत्त्वानामुपदेशो गौरश्वः पुरुषो हस्तीति। भवतीति भावस्य—आस्ते शेते व्रजति तिष्ठती"[1]त्युपक्रम्य "षड् भावविकारा भवन्तीति वार्ष्यायणि"[2]रित्यृष्यन्तरवचनमुदाहृत्य "जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यती"[3]ति वार्ष्यायणिवचनं सामान्यतो विवृत्य "जायते पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे, न प्रतिषेधति, अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम्, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद् विकारम्, वर्धत इति स्वाङ्गाभ्युच्चयम्, सांयोगिकानां वाऽर्थानाम्, वर्धते विजयेनेति वा, वर्धते शरीरेणेति वा, अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमम्, विनश्यतीत्यपर [201a]भावस्यान्तमाचष्टे, न पूर्वभावमाचष्टे, न प्रतिषेधति। अतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति ह स्माह। ते यथावचनमभ्यूहितव्याः, न निर्बद्धा"[4] इति—पठति स्म ॥

इयमत्र योजना—नामेति ॥ अत्रोपसर्गनिपातातिरिक्तसुबन्तसामान्यं

नामपदेन परिग्राह्यम् ; चतुर्धा पदसामान्यविभागकरणात्, जातिगुणक्रिया-
संज्ञाशब्दा अपि सुबन्तत्वाद् नामस्वेवान्तर्भवन्ति। भावेति ॥ आख्यातम्
आख्यातसामान्यं धातुसामान्यं तिङ्सहितं कृत्सहितं वा। प्रधानं भावप्रचुरम्
प्रायेण भावार्थकम्, कचिद् भावार्थरहितमिति यावत् ; धान्यप्रधानोऽयं
5 देशः, वनप्रधानोऽयं देश इत्यादौ धान्यादीनां प्राधान्येनान्येषामप्राधान्येन च
प्रतीतेः प्रधानपदोपादानस्थले प्राचुर्यप्रतीतेर्दर्शनात्। तत्र लिङ्गसङ्ख्यान-
न्वयिनि साध्येऽर्थे वस्तुत आख्यातोच्चारणकाले सत्यसति वा कालान्तर-
सम्बन्धि वर्तमानकालसम्बन्धि वा लिङ्गसङ्ख्यानन्वयिसाध्यस्वरूपक्रिया-
स्वरूपमेवाख्यातार्थ इति सिद्धं भवति ; भावपदस्य तथैव बोधने सामर्थ्यात्।
10 एवं च पचति, पक्तः, पचमानः, पच्यमानः, पक्तुम्, पक्तेत्यादौ भावार्थकत्वमा-
ख्यातस्य, पाकः, पाचक इत्यादौ भावेतरार्थकत्वमिति कचित् सापवादं
"भावप्रधानमाख्यातमि"[1]त्येतदिति गमितम्। सत्त्वेति ॥ नामानि उपसर्गनिपाता-
तिरिक्तसुबन्तसामान्यानि सत्त्वप्रधानानि लिङ्गसङ्ख्यान्वयार्हसिद्धरूपे सत्य-
सति वोच्चारणसमसमयं कालान्तरसम्बन्धि वर्तमानसमयसम्बन्धि वा
15 सिद्धरूपं क्रियात्मकमक्रियात्मकं वा सत्त्वप्रधानमभिधेयं प्रायेण येषां तानि,
तथा लिङ्गसङ्ख्यान्वयिसिद्धरूपक्रिया[201b]पराणि यागः, त्यागः, पाक
इत्यादीनि नामानि, लिङ्गसङ्ख्यान्वयिक्रियाभिन्नसिद्धार्थपराणि गौरश्वः, पुरुषो
हस्तीत्यादीनि नामानि। प्रायेण सिद्धार्थकानि भवेयुरित्युक्त्या कचिद्
भावार्थकानि नामानि स्युरिति ज्ञापनाद् भोक्तुं भोक्तेत्यादीनि भावार्थकानि
20 नामानि। पचमानः पच्यमान इत्यादीनि भावार्थानि धात्वंशे, प्रत्ययांशे
सिद्धार्थानीति विवेकः। यत्र द्वितीयादिविभक्त्युपात्ताविकृतकारकाकाङ्क्षि-
त्वम्, तत्राविकृतो धात्वर्थो भावो भवति। यत्र तादृशाकाङ्क्षारहितो
धात्वर्थः, तत्र विकृतः सन् सत्त्वरूपो भवति—त्यागो यागः, पाचक इत्यादौ ॥

वस्तुतस्तु—कर्मकर्तृभावप्रयोगसाधारण्येनैकरूपेण वाक्ये धात्वर्थमुख्य-
25 विशेष्यको बोधः शाब्दः ; "भावप्रधानमि"[2]त्यादिप्रमाणादिति केचित्। तथा
सति भावप्रधानं वाक्यमित्येव वक्तुमुचितत्वादाख्यातपदं सत्त्ववाक्यं चासङ्गत-
मेव भवेत्, "तत्रैतन्नामाख्यातयोर्लक्षणं प्रदिशन्ति"[3]ति समारम्भविरोधश्च भवेत्।
एवं चाख्यातं धातुसामान्यं लिङ्तुमुन्शानजादिसमुचितप्रत्ययान्तं भाव-
प्रधानम्, सामान्यतो ज्ञाते विशेषतो जिज्ञासा भवतीति न्यायेनोचित-

प्रत्ययान्तधातुश्रवणोत्तरं तत्तद्धातुभेदेन षट्कारकान्यतमविशेषजिज्ञासोदयेन सिद्धकारकसामान्यांशानां कारकसामान्यांशापत्तौ च कारकांशानां वा यथायोगं धातुवाच्यकोटावन्तर्भावात् साध्यांशस्तद्वाच्यकोटौ विशेष्यरूपः, कारकाद्यंशो विशेषणीभूतः। किञ्च सर्वधात्वर्थे कारकाद्यंशातिरिक्तो
5 लिङ्गसङ्ख्यान्वयार्हः सत्त्वांशोऽप्यस्ति। तत्र तिङन्तादिस्थले साध्यांशेन सिद्धांशो निगीर्णो भवति। व्रज्या, पक्तिः, पाक इत्यादिप्रत्ययविशेषणान्तस्थले तु सत्त्वांशेन साध्यांशो निगीर्णो भवति। अत एव घटयति पुत्रीयतीत्यादौ सिद्धांशः साध्यांशेन निगीर्णो भवति। तत्र कारकसामान्यांशे धातुवाच्ये सति विभक्तयस्तदनुवादिकाः, तत्कृतोपकारे धातुवाच्ये तु
10 सम्बन्धिन्यायेन कारकस्मरणात् तद्वाचिका विभक्तय इति भेदः। "सत्त्वप्रधानानि नामानी"[1]त्यत्र शानजाद्यन्तभिन्नानि तानि क्रियासत्त्वे निगीर्णानि नातद्धर्मकलिङ्गसङ्ख्यान्वयिसत्त्वप्रधानकानि। गौरश्व इत्यादावपि साध्यसिद्धांशौ द्वावपि स्त एव, परन्तु पदस्वाभाव्यात् सिद्धेन साध्यं निगीर्णं भवति। एवं "जले कोरकितं सर"[2] इत्यादौ तद्धितेनापि शानजादिस्थल इव साध्यांशः प्रतीयते।
15 एवं च विशेष्यप्रचुरादिपदमपहाय प्रधानपदग्रहणादर्थत्रयमप्यत्र विवक्षितमिति सर्वं समञ्जसमिति दिक्। [202a] एवं च सति प्रथमपक्षे सत्त्वांशानिगरणेन साध्यांशभानमिति पक्षे च भावतिङन्तस्थलेषु प्रथमान्तमुख्यविशेष्यक आगोपालाङ्गनप्रसिद्धो बोधोऽभ्यनुज्ञातो भवति। तृतीयकल्पे पुनः सुबुपात्तकारकाणां धात्वर्थकोटिगतकारकसामान्यरूपेऽभेदेनोपकारे वा
20 स्वनिरूपितत्वलक्षणसम्बन्धेन विशेषणतयाऽन्वयः। तिङुपात्तकर्तृकर्मस्थले तु कारकसामान्यस्योपकारस्य वा तिङर्थे कर्तरि कर्मणि वा विशेषणतयाऽन्वयः; कृत्यवाच्यतिरिक्तप्रत्ययार्थानां पाचक इत्यादौ प्रकृत्यर्थविशेष्यत्वदर्शनेन तद्भङ्गे मानाभावात्। एवं चैतत्पक्षे प्रथमान्तमुख्यविशेष्यकत्वमुपपन्नमेव। भावमुख्यविशेष्यकबोधव्यवहारस्तु सिद्धसाध्यसमभिव्याहारन्यायेन सिद्धानां
25 गुणत्वं साध्यानां प्राधान्यमिति रीत्या विज्ञेयः। एवं ज्ञातार्थज्ञापने—यद्ज्ञातम्, तदेव ज्ञाप्यत्वेन प्रधानम् इतरदप्रधानम्; उद्देश्यं प्रधानम्, इतरदप्रधानमिति रीत्या प्रकारभेदा उन्नेयाः। एवं चैकस्मिन्नेव बोधे शब्दतात्पर्यसिद्धसाध्यादिरीत्या विशेषणविशेष्यतादिलक्षणविषयताभेदसम्भवेन सर्वमतैक्यमत्यमनुसन्धेयम्। इति दिक्॥

अत्र भावस्त्रिविधः—तत्तद्धात्वर्थलक्षणो लिङ्गसङ्ख्यानन्वयी शब्दविशेषस्वाभाव्यात् साध्यात्मना प्रतीयमान एकः। सकलधात्वर्थानुस्यूतसामान्यात्मा पूर्वोक्तलक्षणो द्वितीयः। एतौ कार्यलक्षणौ भवतः। सिद्धसाध्यत्वविनिर्मुक्तः सर्वधात्वर्थसत्ताप्रदोऽन्यः;

5 "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु।
क्रियालोलापदार्थेषु बुधजन्तुविभूतिषु॥"[1]

इति मेदिनिः—

"भावः स्वभावेऽभिप्राये चेष्टासत्तात्मजन्मसु।
क्रियालीलापदार्थेषु बुधजन्तुविभूतिषु॥"[2]

10 इति विश्वाच्च। "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वि"[3]त्यमराच्च। अथ "षड् भावविकारा"[4] इत्यत्राग्रे भावविकाराणामेकार्थगतानामाख्यातभेदेन यथोच्चारणक्रमं पूर्वापरीभावं वक्तव्यं मनसि निधाय भावनिरूपणावसर एव सङ्गृह्य संसर्गिजलघृततैलादिवद् विनोपाधिपरिग्रहं सङ्ख्यानन्वयित्वेन सम्मुग्धाकारतया सङ्ख्यानियतक्रमस्य भावसामान्ये भावविशेषावान्तरस्वरूपे 15 वा वक्तुमशक्यत्वेऽपि फलं व्यापारश्च धात्वर्थ इति प्रसिद्धेः फलविशेषस्य धातुभेदगम्यत्वात् फलविशेषोपाधिद्वारा व्यापारविशेषनिर्णयसम्भवाद् धातुभेदायत्तपरिच्छेदसम्भवेन पौर्वापर्यसम्भवाद् अनेकाख्यातस्थले क्रमं दर्शयति—तद् यत्रेति॥ तत् तत्राख्यातनामराश्योर्मध्ये। यत्र वाक्ये। भावप्रधाने॥ भावः लिङ्गसङ्ख्यानन्वयिसाध्यरूपम्, प्रधानम् फलव्या20 वर्तितव्यापारविशेषरूपं ययोस्ते उभे आख्याते भवतः। तत्र द्विविधेनाख्यातेन फलव्यावर्तितव्यापारवैजात्यपरेण द्विविधमपि भावं परस्परव्यावृत्तं पूर्वापरीभूतं युगपद् भावद्वयपराख्यातद्वयोच्चारणायोगात् पुरुष एकः क्रमेणाचष्टे—व्रजति पचतीति॥ व्रजतीत्यादावपि तत्तद्भूप्रदेशपदविन्यासादिलक्षणोपाधिभेदेन क्रियाभेदेऽपि व्रजधातोः फलविशेषबोधनसामर्थ्यात् 25 पाकक्रियातः पृथग् व्रजनक्रियानिर्देशस्य शब्दस्वाभाव्यात् सम्भवेऽपि व्रजनक्रियास्वपि तत्तद्भूप्रदेशादिनानोपाधिवशाद् वस्तुतः पूर्वापरीभावसम्भवेऽपि तत्तदुपाधीनां विशिष्य कथने व्रजादिधातूनां सामर्थ्यादर्शनादुपक्रमप्रभृत्यपवर्गपर्यन्तमपि सम्मुग्धाकारेणोपाधिपरामर्शरहितमक्रमं व्रजादिधातुः स्वार्थमाचष्टे। इति गोलार्थः॥

30 अथ "सत्त्वप्रधानानि नामानी"[5]त्यस्य धात्वंशमादायोदाहरणं दर्शयन् "भावप्रधान-

माख्यातमि"[1]त्यत्र प्रायेणेत्यंशस्योदाहरणप्रदर्शनव्याजेन "भावप्रधानमि"[2]त्युत्सर्गस्यापवादं दर्शयति—मूर्तमिति ॥ धात्वर्थमेव भावरूपं कृद्विशेषमहिम्ना भावत्वरहितं मूर्तं लिङ्गसङ्ख्यान्वयार्हं द्रव्यभूतं लोकः सत्त्वनामभिराचष्टे व्रज्या पक्तिर्गमनम् । इत्यन्वयः ॥

अथ सामान्यतः सत्त्वानामुपदेशं दर्शयति—अद इति ॥ सत्त्वानामुपदेश इति सत्त्वस्य विशेषोपदेशं दर्शयति—गौरित्यादि ॥ अत्राद इति सर्वना[202b]-मतया साधारणत्वात् सत्त्वसामान्यपरम्, गौरित्यादिकन्तु तत्तदर्थविशेषरूढत्वात् सत्त्वविशेषपरमिति विभागः । अथ भावस्य सामान्यरूपमुद्दिशति—भवतीति भावस्येति ॥ भावस्यैव विशेषरूपमुद्दिशति—आस्त इत्यादि ॥ अथ वा र्ष्या य णिकृतभावसामान्यविभागमाह—षडिति ॥ सकलधात्वर्थानां प्रपञ्चान्तर्गतसकलपदार्थगतानां षोढा विभाग इति भावः । तान् विभागविषयान् धातुविशेषनिर्देशद्वारा दर्शयति—जायत इत्यादि ॥ जायत इत्यादिकं विवृणोति—जायत इति पूर्वभावस्यादिमाचष्ट इति ॥ उपक्रमप्रभृत्यपवर्गपर्यन्तासु पूर्वापरीभूतासु जनिक्रियासु प्रथमा क्रिया जनिधातोर्मुख्योऽर्थः, अन्याः क्रिया जनिधात्वर्था अपि न मुख्या इति सूचयितुमादिमाचष्ट इति कथितम् । पूर्वभावस्य जन्मन इत्यर्थः । "विनश्यतीत्यपरभावस्यान्तमाचष्ट"[3] इत्यत्राप्यन्त्या क्रिया नशधातोर्मुख्योऽर्थः । पूर्वाः क्रिया अर्था अपि न मुख्या इति जनिस्थलवदुन्नेयम् । यद्यपि जनेः पूर्वं विद्यमानस्यैव जननमिति जनिकालेऽपि वस्तुतोऽस्तित्वमस्ति, एवं च जायत इत्यनेन जन्मवदस्तित्वमपि कथनीयमापतेत्; तथाऽपि शब्दस्वाभाव्याद् जनिधातोरस्तित्वांशे शक्तिविरहाद् विद्यमानमप्यस्तित्वं जनिधातुर्नाचष्टे, न निषेधति च, उदासीनवदेव भवति । एवं विनश्यतीत्यत्रापि विनाशकाले पूर्वभावोऽवयवापचयलक्षणोऽनुस्यूतो भवति यद्यपि ; तथाऽपि नशधातुस्तमपचयं न वदति, न निषेधति, उदासीनवद्भवतीति बोध्यम् । आद्यान्त्यभावयोरेव पूर्वभावस्यादिमाचष्टे, नापरभावमाचष्टे न प्रतिषेधति । अपरभावस्यान्तमाचष्टे, न [203a]पूर्वभावमाचष्टे, न प्रतिषेधतीति पठितं न मध्यमचतुष्के । तत्र हेतुमग्रे निरूपयिष्यामः । अत्र सत एव वस्तुनो जन्मादियोगाद् अस्ति जायत इति निर्देशे समुचिते सति जाय तेऽस्तीति निर्देशो यद्यप्यनुचित एव ; तथाऽपि नात्र नियतमस्तित्वं जायत इत्यनन्तरं परिगृहीतम्, किन्तु पूर्वसिद्धास्तित्वस्यैव जन्माभिव्यक्तिमि-

न्द्रियादिमानग्राह्यं रूपं विवक्षितम्। एवं च जायतेऽस्तीति निर्देश उपपद्यते। अत एवास्तीत्युत्पन्नस्य सत्त्वस्यावधारणमाचष्ट इति विवरणमुपपन्नम्। एवं चेदृशेऽस्तित्वे जन्मनि वा विपरिणामांशस्य कथमप्यनभिनिवेशादस्तिपदाभिधेयत्वाशङ्काविरहादस्तिवाक्ये नापरभावमाचष्टे, न प्रतिषेधतीति न निबद्धम्।
5 नच—एवं जन्माधीनमानग्राह्यत्वलक्षणास्तित्वमपि जन्मसमये न प्रसक्तमिति जायत इत्यनेनास्तित्वकथनप्रसक्त्यभावात् तन्निषेधादिपरं वाक्यं वृथैवेति—वाच्यम्; साहजिकास्तित्वस्यैव जन्याभिव्यक्तत्वेन पश्चाद् निर्देशेन मूलभूतास्तित्वस्य जन्मकाले सत्त्वेन जनिधातुना तस्याप्यभिधानशङ्कायाः कथञ्चित् सम्भवेन तन्निराकरणादेरुचितत्वात्, तद्वदस्तित्वे विपरिणामादेरंशतोऽ-
10 प्यप्रसक्तेस्तन्निराकरणादेरनौचित्यात्। इति दिक्॥

अथ तृतीयं भावं व्याकरोति—विपरिणमत इत्यादि॥ अत्र "प्रकृतिपरिणामा महदादय"[1] इति साङ्ख्यमतसिद्धपरिणामो विपरिणमत इत्यनेन नोच्यते; मृद् घटाकारेण परिणमत इति जन्मन्यपि साङ्ख्यैः परिणामपदप्रयोगात्, इह जायतेऽस्ति[203b]विपरिणमत इति जन्मनः पृथग् ग्रहणात्। अतो विपरिणमत
15 इति पदं तत्त्वादप्रच्यवमानस्य स्वस्वरूपादनपभ्रंश्यमानस्य विकारं समाचष्टे। क्षीरं दध्याकारेण विपरिणतम्, पनसकदलाम्राणि विपरिणतानि, शवशरीरं विपरिणतमित्यादि परमुदाहरणम्। अत्र जन्मातिरिक्तः शुभाशुभविकारो विपरिणामः॥

चतुर्थं विकारं सोदाहरणं द्वैविध्येन विवेचयति—वर्धत इत्यादि॥ वर्धत
20 इति पदं स्वावयवाभ्युच्चयं सांयोगिकानां बाह्यसंयुक्तपदार्थानां वाऽभ्युच्चयमाचष्टे शरीरेण वर्धते, विजयेन वा वर्धत इत्यन्वयः॥

अथ पञ्चमं विकारं वर्धनेन व्याख्यातमिति विवृणोति—अपक्षीयत इत्यादि॥ अपक्षीयत इति पदस्यार्थः प्रतिलोमम् विपरीतं यथा भवति तथा एतेनैव वर्धत इत्यनेनैव व्याख्यातः। वृद्धावयवस्य बाह्यपदार्थस्य वोपचयविपरीतेनापचयेन
25 ह्रासेनापक्षयो विवृत इति भावः। अत्र विपरिणामे ह्रासवृद्धिविनिर्मुक्तवस्तुविकारे वर्धनादिकं नानुप्रविष्टम्; वर्धनेऽपि न ह्रासः प्रविष्ट इत्यपक्षयेऽपि न धर्मिनाशः प्रविष्ट इत्युत्तरभावनिषेधादि न निबद्धम्। अत्र भावविकारेषु षट्सु प्रतिपदार्थं जन्मनि सत्येव नाश इति नियमः। जन्मायत्तस्फुरत्तालक्षणमस्तित्वमपि जन्मनियतमेव। शुद्धास्तितालक्षणा सत्ता न

जनिनियता ; ब्रह्ममाययोर्जन्मादर्शनेऽपि सत्तासत्त्वात्। विपरिणामवृद्धि-
क्षया जन्मास्तित्वनियता एव। विपरिणामवृद्ध्यपक्षयनाशानां पूर्वपूर्वविकार-
नियतत्वमुत्तरोत्तरस्य नास्त्येव ; विका[204a]रं विना वृक्षादाववयववृद्धे
राज्ञो धनसमृद्धेश्च दर्शनात्, समृद्धिं विनाऽप्युत्पन्नघटादेरवयवह्रासदर्शनात्,
5 अवयवह्रासं विनाऽपि मुद्गरपातादिना घटादिनाशदर्शनादिति विवेक्तव्यम्।
अत्र जायत इत्यादिषड्धातवः सामान्यभावार्थका विषयविनिर्मुक्तक्रिया-
फलोभयपराः। एवमन्येऽपि केचन सामान्यभावार्थका भवन्ति—"भू स-
त्तायाम्"[1] "विद सत्तायाम्"[2] "एध वृद्धौ"[3] "डुकृञ् करणे"[4] इत्यादयः। ते
तावाद् जन्यादिवदेव भवन्ति। केचन धातवो विशेषविषयसंश्लिष्ट-
10 क्रियार्थकाः। तत्र विशेषांशमपहाय सामान्यांशेनैतेष्वेवान्तर्भूता विज्ञेयाः।
जन्यादयो यद्भावविकाराः, तद्भावविकारा एव तेऽपि भवन्ति, तदेतदाह—
अतोऽन्य इति॥ ह स्माह वा र्ष्या य णि रि त्यनुषङ्गः। ते धात्वन्तरोपात्ता
भावा यथावचनं धातुपाठे यथाऽर्थकथनम्, तथा विचार्य जायत इत्याद्य-
र्थेषु समुचितसमावेशेनाभ्यूहनीयाः। गौरवादिह ते धातवो जायत इत्यादि-
15 वद् न निर्बद्धा इत्यर्थः। एवं साङ्ख्यादिग्रन्थसंमता धर्मपरिणामलक्षणपरि-
णामादयो विकारा अपि जायत इत्यादिष्वेवान्तर्भूता इति विभावनी-
यम्। अत्र भाष्ये—अन्येषामपि भावविकाराणां तिष्वेवान्तर्भाव इति निर्देशाद्
विपरिणामस्य जननेऽन्तर्भावसम्भवाद् वृद्धेर्जीवने वा जनने वाऽन्तर्भावाद्
अस्तित्वस्य निरुक्तस्य स्थितौ संनिवेशयोगाद् अपक्षयस्य विनाशरूपत्वयो-
20 गात् लक्षणधर्मपरिणामादीनामपि जीवनजननान्यतरसमावेशसम्भवात् प्रपञ्च-
त्वावच्छिन्नप्रपञ्चसामान्यगतजन्मादिहेतुत्वमभिन्ननिमित्तोपादानत्वलक्षण एव
भवतीति [204b] यथा सिद्धान्तः स्वमते, तथा या स्क मतेऽपि
श्रूयमाणजन्मादिकं प्रपञ्चसामान्यगतमीशं विना नोपपद्यत इति समान
एव। यत्किञ्चिद्वस्तुगतजन्मादिकमीशं विनाऽन्यतोऽपि भवतीत्यतिप्रसङ्गः
25 स्वमतेऽपि समान इति—

"यश्चोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे॥"[5]

इति या स्क मतरीत्या दूषणमसङ्गतमिव। न च मायायां जगदुपादानेऽति-
व्याप्तिः ; उपादानत्वे सति कर्तृत्वस्याभिन्ननिमित्तोपादानत्वलक्षणस्य चेतन-

गतस्य तत्राभावात्। किञ्च जन्मादिसूत्रमीश्वरानुमानपरं भवत्विति शङ्कावारणाय प्रवर्तितं भाष्यम्—इति वेदान्तवाक्यग्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मात्मावगतिः, नानुमानादिप्रमाणान्तरनिर्वृत्तेत्यादि। अत्रोत्तरत्र—श्रुत्यैव च
5 सहायत्वेन तर्कस्याभ्युपेतत्वादिति निर्देशेनानुभवपर्यवसानार्थमेव तर्कापेक्षणेन ब्रह्मावगतिपदमविद्यानिवर्तनक्षमब्रह्मसाक्षात्कारपरं स्वीकार्यम्। एवं च हि यस्माद् ब्रह्मसाक्षात्कारो वाक्यार्थविचारजन्यनिश्चयनिर्वृत्तः, तस्माद् हेतोर्ब्रह्मसाक्षात्कारार्थं प्रवर्तितैश्चतुरध्यायीसूत्रैर्वेदान्तवाक्यान्युदाहृत्य विचार्यन्ते। यतो वेदान्तवाक्यान्युदाहृत्य विचार्यन्ते, तस्माद् हेतोः सूत्राणां
10 वेदान्तवाक्यग्रथनार्थत्वमिति वाक्यार्थः सिद्धो भवति। तत्र जन्मादि-सूत्रस्यानुमानपरत्वप्रक्रमे सूत्राणां वेदान्तवाक्यग्रथनार्थ[205a]त्वादिति निरूपणे चतुरध्यायीगतसूत्रसामान्यस्य वेदान्तवाक्यग्रथनार्थत्वमर्थादुक्तं भवति ; इतरथा केषाञ्चिदेव सूत्राणां वेदान्तवाक्यग्रथनरूपत्वम्, अपरेषान्तु तदग्रथनरूपत्वं चेत्, जन्मादिसूत्रमपि परसूत्रवद् वेदान्तवाक्याग्रथनरूप-
15 मनुमानपरं स्यात्, तद्दोषपरिहाराय सूत्रगतवेदान्तग्रथनार्थत्वमनलं स्यात्। अतस्तद्दोषपरिजिहीर्षया वेदान्तेत्यादिकथनं चतुरध्यायीसूत्रत्वावच्छेदेन वेदान्तवाक्यग्रथनार्थत्वव्याप्तिग्राहकमित्यवश्यमभ्युपेतमेव भवेत्। एवमेव चतुरध्यायीसूत्रत्वावच्छेदेन वेदान्तवाक्यविचारजन्यब्रह्मसाक्षात्कारार्थत्व-मप्यभ्युपगतमेवेह भवति ; चतुरध्यायीसूत्रत्वावच्छेदेन वेदान्तवाक्यग्रथनार्थत्वे
20 हेतुत्वेन ब्रह्मसाक्षात्कारार्थत्वस्य वाक्यार्थविचारणेत्यादिग्रन्थेन सूचनात्। एवं च चतुरध्यायीसूत्रत्वावच्छेदेन ब्रह्मावगत्यर्थत्वं वेदान्तवाक्य-विचारार्थत्वं चाभ्युपेतमिति सिद्धम्। तदेतदसङ्गतमिव ; चतुरध्यायी-सूत्रत्वावच्छेदेन वेदान्तवाक्यविचारपरत्वस्य निर्गुणब्रह्मसाक्षात्कारपरत्वस्य च बाधात्, तर्कचरणसूत्रेषु केवलयुक्तिपरगुणसूत्रेषु पञ्चाग्न्यधिकरण
25 उपास्त्यपराधिकरणेषु चादर्शनात्॥२॥

[205b] पुरैकस्मिन् प्रश्ने भृगुरिति परब्रह्मविषये
परस्ताद् द्वे तस्मै तमिति लसतस्तूत्तरगिरौ।

अतो ब्रह्मेत्यर्थद्वयघटिततात्पर्यकतया
विनिर्णेयं न्यायाम्बुधितरणधीरेण मनसा ॥३॥

अथ सूत्रभाष्यगतान् निरुक्तान् दोषान् निराचिकीर्षु भृ गु श्रुतेस्तात्पर्य-ज्ञापनाय योजनाभेदान् दर्शयति—पुरेत्यादिना ॥ अथादौ अधीहि ब्रह्मेति
5 ब्रह्मपदार्थं सहेतुकं दर्शयति—पुरैकस्मिन्निति ॥ "अधीहि भगवो ब्रह्मे"[1]ति प्रश्ने भृ गु णा व रु णं प्रत्येकस्मिन् प्रवर्तिते सति तदुत्तरमेकमेव वक्तु-मुचितम् ; तथाऽपि पुरा पूर्वमेकस्मिन् प्रश्नेऽधीहीत्येवंलक्षणे सत्यपि "तस्मा एतत् प्रोवाचे"[2]त्यादिलक्षणा "तं होवाचे"[3]त्यादिलक्षणा चोत्तरगिरौ तु विलसतः। एकस्मिन् प्रश्न उत्तरद्वयं विना विशेषमनुपपन्नमेव। तस्मादुत्तर-
10 द्वयबलेन कश्चन विशेषोऽत्र विवक्षितो भवति। अतो हेतोः प्रश्नगतब्र-ह्मेतिपदमुत्तरत्रोत्तरद्वयदर्शनान्यथानुपपत्त्याऽर्थद्वयघटिततात्पर्यकतयाऽर्थद्वयेन घटितं यत् स्वरूपं जीवेशोभयसामानाधिकरण्यलभ्याखण्डार्थलक्षणम्, तत्र तात्पर्यवत्त्वेन पूर्वोत्तरमीमांसादिनिखिलन्यायसमुद्रतरणधीरेण मनसा विनिर्णेयम् निश्चेयं भवतीत्यर्थः। तथाचोत्तरत्र जीवेशोभयपरोत्तरदर्शनात्
15 पूर्वमपि प्रश्नघटकब्रह्मपदं जीवेशसामानाधिकरण्यलभ्याखण्डार्थाभिप्रायकमु-न्नेयम्। इति भावः ॥३॥

[206a] पुरोऽन्नाद्यः कोशोऽन्नमिति लघुवाचा निगदितः
परस्ताद् विस्तारादपि कलितजीवैकविषयः।
यतोवाचा जन्मादिकमुदितमीशैकनिलयं
20 यतोऽतो जीवेशाविह विलसतोऽखण्डनियतौ ॥४॥

अथेहाखण्डार्थभूतब्रह्मस्वरूपघटकतयोत्तरवचनद्वयेन जीवेशौ गृहीतावित्यत्र हेतुं विशदयति—पुर इति ॥ ब्र ह्म व ल्ल्यां कालतः अवकलितो यो जीवोऽन्नमय-प्राणमयमनोमयविज्ञानमयानन्दमयशब्दैराकलितः परिगृहीतो जीवो यः, तदेक-विषयः तदेकावगाही अन्नाद्यः पञ्चविधः कोशः पुरः प्रथमं द्वितीयोत्तरात् पूर्वं
25 अन्नमिति लघुवाचा "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"[4]ति लघुवाक्येन

निगदितः। अन्नमित्यादेर्लघुत्वमग्रे निरूप्यते। परस्तात् द्वितीयोत्तराद-
नन्तरं विस्तारादप्यन्नाद्यः कोशो निगदितः। "अन्नं ब्रह्मेति"[1] "प्राणो
ब्रह्मेति"[2] "मनो ब्रह्मेति"[3] "विज्ञानं ब्रह्मेति"[4] "आनन्दो ब्रह्मे"[5]त्यादिवचन-
निकरैर्विस्तरेण कथित इत्यर्थः। एवं यतोवाचा "यतो वा इमानि भूतानि
5 जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ती"[6]ति वचनेनेहानियतं
तदेकमात्रान्त्रिजगज्जन्मादिकम्। उदितम् कथितं भवति। एवं च
यतः यस्मात् कारणादुत्तरद्वयेन जीवेशौ परिगृहीतौ, अतः अस्मादेव
कारणाद् अखण्डार्थनियतौ अखण्डार्थे नियमेन घटकतया नियताविह भृ गु-
व ल्ल्यां विलसतः प्रकटावेव भवतः, नतु गुप्तौ न्यायनिकरगम्यौ भवतः।
10 तथाच "अधीहि भगवो ब्रह्मे"[7]ति ब्रह्मपदं जीवेशद्वाराऽखण्डार्थप्रश्नपरम्।
इति भावः ॥४॥

[206b]	द्वितीयान्तादग्रेऽनुकृतिपरतेतेरनुचिते-
त्युपात्तं विस्तारादिकमपि परिग्राह्यमखिलम्।
प्रकारार्थत्वेन प्रकटमुपरिष्टादपि मुहु-
15	द्वितीयान्तैरन्वेत्युपहितमुवाचेति सकलैः ॥५॥

अथ "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिती"[8]ति वाक्ये पञ्चकोशपरिग्रहो
निरूपितः प्राक्। स एव नोपपद्यते; अन्नप्राणमनोनिर्देशेऽपि विज्ञाना-
नन्दनिर्देशाभावात्, चक्षुःश्रोत्रवाचामधिकानां च परिग्रहात्, इत्याशङ्क्य
तस्मि"न्नन्नमि"[9]ति वाक्येऽन्नादिकोशपञ्चकपरिग्रहं सहेतुकं निर्दिशति—
20 द्वितीयान्तादिति॥ "अन्नमि"[10]त्यादिवाक्येऽन्नं चक्षुः श्रोत्रं मन इति पदानि
न प्रथमैकवचनान्तानि; "प्राणं वाचमि"[11]ति विस्पष्टपुलिङ्गस्त्रीलिङ्गद्वितीयैक-
वचनान्तसमभिव्याहारात्। एवं च "तस्मा एतत् प्रोवाचे"[12]त्यत्रैतद् वक्ष्य-
माणं प्रोवाचेति वाक्यं परिसमाप्यैतत्पदार्थपरत्वेनेतिशिरस्कतयाऽग्रिमवाक्यं
विवक्षितं न भवति; अन्नादीनां द्वितीयान्तत्वेन तदुचितक्रियानिर्देशस्य
25 तत्राभावेन वाक्यापरिसमाप्त्या वाक्यानुकरणस्येतिकारेण कर्तुमशक्यत्वात्,
अध्याहृत्य वाक्यं परिसमाप्येतिकारेणानुकरणं क्रियत इति पक्षस्यापि

प्रकृतार्थसङ्गत्यभावेन परिग्रहीतुमशक्यत्वात्, द्वितीयान्तानामितिकारेणा-
नुकरणायोगात्, जागरूकद्वितीयाया उत्थिताकाङ्क्षत्वेत तदुचित[207a]क्रिया-
न्वयस्यैवाभ्युपेयत्वादितिकारः पूर्वानन्वित एव भवेत्। एवं च द्वितीयान्ता-
दग्रे श्रूयमाणस्य इतेः इतिकरणस्य निरुक्तरीत्याऽनुकरणपरताऽनुचितेत्य"त्र-
5 मि"[1]तिवाक्यगतेतिकारस्य प्रकारार्थकत्वेन ब्र ह्म व ल्ल्यां पूर्वमुपात्तमुपरिष्टाद्
भृ गु व ल्ल्या मपि प्रकटम् "अन्नं ब्रह्मे"[2]त्यादावुपात्तं मुहुः "अन्नं ब्रह्मेति"[3]ति
"अन्नाद्ध्येवे"[4]ति प्रकारेण परिगृहीतमखिलं विज्ञानादिकं द्वितीयान्तत्वेन
परिग्राह्यं भवति प्रकृतेतिकारसार्थक्याय। एवं च "तस्मा एतत् प्रोवाचे"[5]ति
निरुक्तोवाचेतिपदमखिलैरपि द्वितीयान्तैः श्रूयमाणाश्रूयमाणलक्षणैरन्नादिभिः
10 पञ्चभिः सकलैरन्वेतीति योजना। यदीहेतिकारेण विज्ञानादेरपरिग्रहः,
तर्ह्युत्तरत्रादिपङ्क्तौ विज्ञानानन्दनिर्देशोऽनुक्तपरिग्रहः स्यात्। अतोऽवश्य-
मितिना विज्ञानानन्दयोरपि निर्देशो विवक्षित इति स्वीकर्तव्यम्। इति
भावः ॥५॥

[207b] विधाय वेधा यच्चयनपरिपाटी प्रकटिता
15 तनुं मध्यां मध्ये तदिह खचितः सर्वखचयः।
श्रुतिर्दृग्वाक्चेति त्रितयमितरग्राहकतयाऽ-
त एवैतद्वल्ल्यां लसति मनसा मध्यमणिना ॥६॥

अथा"त्रमि"[6]तिवाक्ये चक्षुःश्रोत्रवाचां कोशादधिकानां न परिग्रहः;
येनेहा"त्रमि"[7]त्यादिवाक्ये पञ्चकोशपरिग्रहप्रतिरोधः शङ्क्येत, किन्तु मनोमय-
20 कोशान्तर्गतानामेव स्पष्टत्वार्थं निर्देश इति निरूपयति—विधायेति॥ यद्यपि
स्थूलसूक्ष्मकारणभेदेन शरीरं त्रिविधमेव ; तथाऽपि ब्र ह्म व ल्ल्या मन्नप्राण-
मनोविज्ञानानन्दान्तानां पञ्चानां शरीरत्रयपराणां निर्देशाद् मन्त्रगतपञ्चत्व-
सङ्ख्यया मन्त्रवाच्यार्थसामर्थ्येन च सूक्ष्मशरीरं मध्यमं त्रेधा विभज्य पञ्चत्व-
सङ्ख्यासम्पादनात् तत्सम्पादनस्य चयनरूपकप्रयोजनकत्वाद् ब्राह्मणद्रष्ट्रा
25 चयनरूपकमुल्लिखितं भवति। एवं च सूक्ष्मदेहस्य पञ्चप्राणमनोबुद्धि-
दशेन्द्रियसमन्वितरूपत्वात् तत्र प्राणविज्ञानयोराद्यन्तपर्वत्वेन परिग्रहाद् मध्य-

पर्वणि च मनस इन्द्रियान्तरतः श्रेष्ठत्वेन परिग्रहात् तस्मिन्नेव पर्वणि बाह्यानि दशविधान्यपीन्द्रियाणि सङ्ग्राह्यत्वेन विवक्षितानि भवेयुः। अत एव ब्र ह्म-व ल्ल्य र्थ विवरणरूपायां भृ गु व ल्ल्यां प्राणोत्तरं मनसा सह चक्षुःश्रोत्र-वाचो विशिष्टसप्तविधेन्द्रियोपलक्षकतयोपात्ताः सङ्गता भवन्ति। तथाच

5 स्थूलसूक्ष्मकारणतनुषु मध्यां तनुं सूक्ष्मां त्रिधा विधाय यत् यस्मात् कारणात् ब्र ह्म व ल्ल्यां चयनपरिपाटी चयनरूपकम् प्रकटिता प्रकाशिता, तत् तस्माद् हेतोः मध्ये पर्वणि मनोमये सर्वखचयः सर्वेन्द्रियसमूहः खचितः विन्यस्तो भवेत्। ब्र ह्म व ल्ल्यां सूक्ष्मदेहान्तर्गतबाह्येन्द्रियाणां क्वचित संनिवेशावश्यम्भावात् प्राणस्य क्रियाशक्तिप्रधानस्य बुद्धेश्च ज्ञान-

10 शक्तिक्रियाशक्तिमद्ज्ञानेन्द्रियकर्मेन्द्रियगण[208a]भेदेऽपि मनसः साङ्ख्यै-र्योगैश्च ज्ञानक्रियोभयशक्तिमत्त्वस्वीकारेण मनस्युभयगणसाधर्म्याद् मनः-पर्वण्येव संनिवेशौचित्याद् अहङ्कारस्य ज्ञानशक्तिमत्त्वेन मनसोऽप्यचेतनत्वेन मनसाऽप्यव्रियमाणत्वेन विज्ञानपर्वण्यन्तर्भावाद् अयं ब्र ह्म व ल्ली भावः समुल्लिखितः समुचित एव। अत एवैतस्यां परिगृहीतायां ब्र ह्म व ल्ल्यां

15 श्रुतिर्दृग् वाक् चेति त्रितयम् चक्षुःश्रोत्रवाक्त्रयम् इतरेषां सप्तेन्द्रियाणां ग्राहकतया उपलक्षणविधया सङ्ग्राहकत्वेन; वाचः कर्मेन्द्रियत्वेनेतरकर्मे-न्द्रियोपलक्षकत्वात्, चक्षुःश्रोत्रयोर्ज्ञानेन्द्रियत्वेनेतरज्ञानेन्द्रियोपलक्षकत्व-सम्भवात्, तत्रापि घ्राणरसनचक्षुस्त्वक्श्रोत्रेषु ज्ञानेन्द्रियेषु घ्राणरसनत्वचां स्वसंनिहितविषयमात्रग्राहकत्वेनानभ्यर्हितत्वात् चक्षुःश्रोत्रयोर्दूरं गत्वाऽपि

20 विषयग्राहकत्वेन श्रैष्ठ्यात् वाक्पाणिपादपायूपस्थेषु कर्मेन्द्रियेषु वागिन्द्रिय-स्यार्थप्रपञ्चाधिकशब्दप्रपञ्चसामान्यनिर्वर्तकत्वात् पाण्यादीनामल्पार्थपरत्वादि-तरापेक्षया वाचः श्रैष्ठ्यात् श्रेष्ठानामेवाश्रेष्ठोपलक्षकत्वेन ग्रहणं समुचित-मिति मनसा मध्यमणिना नायकमणिस्थानापन्नेन मध्यवर्तिना पठितं विलसति। इत्यन्वयः। एवं च बाह्येन्द्रियाणां मनःपर्वणि संनिवेशो भवेदेव।

25 इत्यभिप्रायः ॥६॥

[208b] समग्रानन्नादीन् समकलयदग्रे श्रुतिरियं
यदादौ तानल्पाक्षरमितिपरेणान्वकथयत्।

भृगुस्तत्पूर्वस्यामपनियति वल्ल्यां श्रुतकथो
नियत्याः सम्पूर्त्यै गुरुमुपससारेति सरणिः ॥७॥

"अन्नं प्राणमि"[1]ति सङ्ग्रहोक्तेः फलं हेतुं च दर्शयति—समग्रानिति ॥
इयम् भृगुवल्ली श्रुतिरग्रे द्वितीयोत्तरादग्रे "स तपोऽतप्यत। स तपस्तप्त्वा"[2]
5 "अन्नं ब्रह्मेति"[3] "प्राणो ब्रह्मेति"[4] "मनो ब्रह्मेति"[5] "विज्ञानं ब्रह्मेति"[6] "आनन्दो-
ब्रह्मे"[7]ति प्रभृतिवचनैरन्नादीन् पञ्चापि कोशान् समग्रान् लक्षणविचारादेर्यां-
शपरिहार्यांशसमेतान् भृगुज्ञातान् यत् यस्मात् समकलयत् सम्यक् कथितवती,
आदौ द्वितीयोत्तरादादौ तानेवान्नादीन् वरुणेनोच्यमानान् इतिपरेण वाक्येन
"अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिती"[8]त्यन्तेन वाक्येन अल्पाक्षरम् परिमिताक्षरं
10 यथा भवति तथा यत् यस्मात् कारणात् अन्वकथयत् कथितवती, तत् तस्मात्
कारणात् पूर्वस्यां वल्ल्याम् ब्रह्मवल्ल्यां भृगुरपनियति नियमरहितं श्रुतकथः
अन्यैर्नियमेन श्रूयमाणायां ब्रह्मकथायां सत्यां श्रुतब्रह्मकथः सन्
ब्रह्मवल्ल्या मध्ययननियमानिष्पत्तेः, सनियमविद्याग्रहणस्यैव सफलत्वात्
स्वस्य विद्याङ्गनियम[209a]सम्पूर्त्यै वरुणं गुरुमुपससारेति सरणिः श्रुतिमर्या-
15 देति योजना। यद्ययं भृगुरश्रुतब्रह्मवल्लीकः, तर्हि गुरुणा वरुणेन
ब्रह्मवल्ल्यर्थः पृथक् साकल्येनोपदिष्टः स्यात्, न तथोपदिष्टो दृश्यते;
"अन्नमि"[9]त्यादौ सङ्ग्रहोक्तेरेव दर्शनाद्। नच—ब्रह्मवल्ल्यर्थो भृग-
वे नोपदिष्टो"ऽन्नमि"[10]त्यादिना, किन्त्वर्थान्तरमेवेति—शङ्क्यम्; द्वितीयो-
त्तरोर्ध्वं भृगुज्ञातत्वेन ब्रह्मवल्ल्यनुकरणदर्शनेनार्थान्तरशङ्कानुदयात्।
20 एवं च सति श्रुतब्रह्मवल्लीकत्वेन भृगोर्नियमार्थमेव गुरूपसरणात्
श्रुतब्रह्मवल्लीकोऽयमिति ज्ञापनायैव सङ्ग्रहोक्तिरिति विवेकः। एवं च
ब्रह्मवल्ल्याः पूर्वश्रुतत्वमेव सङ्ग्रहोक्तौ कारणम्, सङ्ग्रहोक्त्या च श्रुत-
ब्रह्मवल्लीक एवायमित्यनुमेयम्। इति भावः ॥

अथ—भृगुर्न श्रुतब्रह्मवल्लीकः, किन्तु वरुणेन साङ्गमेव भृगव
25 उपदिष्टम्, परन्तु तृतीयो गुरुरनुवादकः स्वशिष्यः श्रुतब्रह्मवल्लीक इति
सर्वानुवादे प्रयोजनाभावादन्नवाक्यं प्रतीकन्यायेन गृहीतवान्। "अन्नं
ब्रह्मे"[11]त्यादौ तु फलपर्यवसानाय क्रमेणानन्दान्तं चोक्तवानिति—चेत्, सत्यम्;
अश्रुतब्रह्मवल्लीकत्वे भृगोः "अधीहि भगवो ब्रह्मे"[12]त्यखण्डपरप्रश्नानुपपत्तिः।

अतो भृगुः श्रुतब्रह्मवल्लीक एव। अत एवाह—उपससारेति ॥ उपससारेतिपदम"धीहि"[1]त्यादिवाक्यग्राहकम्, उक्तयुक्तेः। इति दिक् ॥७॥

[209b] निरुच्यान्नादीन् प्राग् यत इति च सामान्यकथना-
द्विशिष्यान्नादीनामुपरि पृथगुन्मीलिततया।
5 यदुक्ते जीवांशे सकलजगदीशत्वविधितः
परं ब्रह्म प्रोक्तं प्रविघटितजीवेश्वरभिदम् ॥८॥

अथ "अधीहि भगवो ब्रह्मे"[2]त्यखण्डार्थप्रश्नानुरूपमेवोत्तरद्वयमिति विवेचयति—निरुच्येति ॥ "तस्मा एतत् प्रोवाच। अन्नमि"[3]त्यादावन्नादीन्कोशान् पञ्चापि प्राक् द्वितीयोत्तरात् प्राक् निरुच्य "तं होवाच। यतो वे"[4]त्यादावन्नादि-
10 पञ्चसु मध्ये यतः यस्माद् जगज्जन्मादीति सामान्यात्मना कथनात् सामान्यात्मना कथितेष्वन्नादिषु पञ्चसु मध्ये ईशगतजगज्जन्मादिहेतुत्वं नान्नस्य, न प्राणस्य, न विज्ञानस्य चेति विशेषेणान्नादिचतुष्टयस्य पृथगुन्मीलिततया शोधितत्वाद् यत इति यत्पदेन सामान्यात्मनोक्ते परिशेषप्रमाणेन पञ्चम आनन्दे पर्यवसन्न "इमानि भूतानि जायन्त"[5] इति निरङ्कुशजगदभिन्ननिमित्तोपादानत्वस्य
15 विधानादीशगतेशतायाः शोधिते जीवे सम्बन्धायोगात् तटस्थविधया ज्ञापकत्वाद् जीवेशाभेदलभ्यमखण्डार्थलक्षणं प्रविघटितजीवेश्वरभिदम् विगतजीवेशभेदं परं ब्रह्म प्रोक्तं भवति 'तस्मा एतदि"[6]त्यारब्धैरानन्दवाक्यान्तवचनैः। इति भावः ॥८॥

[210a] जगज्जन्मस्थेमप्रविलयनिदानैकतनुता
20 परेशं लक्ष्मेदं प्रविशति तदात्मात्मकतया।
तथाऽपि स्वच्छन्दे प्रविगलितजीवेश्वरभिदे
तटस्थं तल्लक्ष्म प्रभवति परिज्ञापकतया ॥९॥

अथ निरुक्तं जगज्जन्मादिहेतुत्वमीशदशा स्वरूपलक्षणमखण्डार्थदशा तत्सम्बन्धाभावात् तटस्थलक्षणमिति विवेचयति—जगज्जन्मेति ॥ जगज्जन्मस्थेम-

प्रविलयनिदानैकतनुता **जगतो जननस्थितिनाशेषु निदानभूतैका मुख्या माया-लक्षणा तनुः शरीरं यस्य परमेश्वरस्य तत्ता** लक्ष्मेदम् **तादृशतनुतारूपमिदं लक्षणम्** परेशं तदात्मात्मकतया **परेशस्वरूपात्मकत्वेन** प्रविशति **स्वरूप-लक्षणत्वेन प्रविशति। तथाच जगदभिन्ननिमित्तोपादानत्वमीशस्य यद्यपि**
5 **स्वरूपलक्षणमेव भवति ;** तथाऽपि स्वच्छन्दे **जीवेशाधिष्ठानभूतचैन्यरूपत्वेना तिस्वतन्त्रे** प्रविगलितजीवेश्वरभिदे **विच्युतजीवेशभेदे** तत् **जगदभिन्ननिमि-त्तोपादानत्वम् शाखाग्रचन्द्रन्यायेन शुद्धस्य** परिज्ञापकतया तटस्थं लक्ष्म **लक्ष्यासंसृष्टं लक्षणम्** प्रभवति **ज्ञापनसमर्थं भवति। इति यावत** ॥९॥

[210b] निरातङ्के नित्ये निखिलपुरुषार्थात्मकतया
10 निरुक्ते निर्णेये निहितमनुना नीतिनिचयैः।
गुहागुप्तानन्दे परमविमलव्योमनि परा-
मिमां विद्यां हृद्यां भृ गु व रुण वेद्यां समवदत् ॥१०॥

**अथ भृ गु व ल्ल्या ब्र ह्म व ल्ली समर्थनार्थतां विशदयति**—निरातङ्क इति ॥
निरातङ्के **निर्गत आतङ्कः भयं यस्मात् तद् निरातङ्कम्**—"अभयं प्रतिष्ठां विन्दते।
15 अथ सोऽभयं गतो भवति"[1] "न बिभेति कुतश्चन"[2] "अभयं वै जनके"[3]**त्यादिश्रुति-निकरात् ईशे** नित्ये **कालत्रयाबाध्ये, सत्य इति यावत्,** निहितमनुना **ब्रह्मवल्लीगतेन** "यो वेद निहितं गुहायां परमे व्योमन्नि"[4]**ति मन्त्रेण सकल-पुरुषार्थात्मकतया** निरुक्ते "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेती"[5]**ति रीत्या सर्वानन्दानां ब्रह्मानन्दैकदेशत्वेन सकलपुरुषार्थरूपत्वेन गदिते**
20 नीतिनिचयैः **निर्णयश्रुत्यनुकूलतर्कसमुदायेन** निर्णेये गुहागुप्तानन्दे **गुहासु अन्नमयादिगुहासु गुप्ते प्रच्छन्ने** "यो वेदे निहितं गुहायामि"[6]**ति** "आविस्सं-निहितं गुहाचरं नाम महत् पदमि"[7]**ति समाम्नात आनन्दे** [211a] "यदेष आकाश आनन्दो न स्यात्"[8] "तस्माद्वा एतस्माद् विज्ञानमयात्। अन्योऽन्तर आत्मानन्दमयः"[9] "आनन्द आत्मा"[10] "रसं ह्येवायं लब्धाऽऽनन्दी भवती"[11]**ति**
25 **परिगृहीते** "सैषानन्दस्य मीमांसा भवति। युवे"[12]**त्युपक्रान्ते** "स एको ब्रह्मण आनन्द"[13] **इत्युपसंहृते** "आनन्दं ब्रह्मणो विद्वानि"[14]**त्यादिश्रुतिसमुपात्ते**

शोधितत्त्वम्पदार्थात्मक आनन्दे निहितपदवाच्यजीवाधिष्ठानभूते परमविमल-व्योमनि "निहितं गुहायां परमे व्योमन्नि"[1]त्याम्नाते परमे सर्वोत्तरे, विमले शोधित-सकलकोशतया निर्मले, व्योमनि चिदाकाशेऽखण्डस्वरूपपर्यवसन्ने ब्रह्म-वल्ल्युपात्ते विषये पराम् "द्वे विद्ये वेदितव्ये परा चैवापरा च। अथ परा 5 यया तदक्षरमधिगम्यत"[2] इत्यादिवचननिकरैः परत्वेन निगदिताम् इमाम् "यतो वा इमानी"[3]ति प्रस्तुताम् हृद्याम् अनुभवरूपाम्, भृगुवरुणवेद्याम् भृगुवरुणाभ्यां सिद्धसाधकाभ्यां स्वायत्तत्वेन ज्ञेयाम् श्रुतिः समवदत् "आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ती"[4]त्युपक्रम्य "सैषा भार्गवी 10 वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"[5]ति सम्यगकथयत। एतेन ब्रह्म-वल्लीभृगुवल्ल्योरेकार्थत्वं स्पष्टीकृतम्। इति भावः ॥१०॥

[211b] इहाम्नाद्याः कोशाः परिहृतविकारत्वविमला
मयण्मुक्ताः प्रोक्ता निखिलजगदीट्त्वाविधितया।
परन्त्वीशत्वस्यानवधिधरणीत्वेन चतुरो
15 निरस्यानन्दोऽन्त्यश्चरमवचसाऽबोधि मधुरम् ॥११॥

अथ "अधीहि भगवो ब्रह्मे"[6]ति प्रश्नमुख्यविषयमखण्डार्थं जीवेशोभय-कथनद्वारा वाक्यानां समभिव्याहारेण पौर्वापर्यालोचनया सिद्धान्तं ब्रह्मभृगु-वल्ल्योर्विभिन्नार्थत्वशङ्कामन्नमयान्नादिशब्दजनितां परिहरन् प्रकटयति—इहेति ॥ यद्यपि ब्रह्मवल्ल्यामन्नमयादिपदैर्व्यवहाराद् भृगुवल्ल्यामन्नादि-20 पदैर्व्यवहाराद् वल्ल्याविमे विभिन्नार्थे एव स्याताम्; शब्दभेदात्, तथाऽपि नेहा-त्यन्तं शब्दभेदः; ब्रह्मवल्ल्यामपि मयडर्थविकारांशपरिहाण्या"ऽऽनन्द आत्मे"[7]ति निर्दिष्टस्य "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। सैषानन्दस्य मीमांसा भवती"[8]त्यादिना विकारांशत्यागेन व्यष्टिभावत्यागेन समष्टिभावापन्नस्य "स यश्चायम्"[9] "आनन्दं ब्रह्मण"[10] इत्यखण्डरूपतानिर्देशेनान्नमयादिपर्वस्वपि 25 व्यष्टिभावपरिहारेण समष्टिभावस्य "तेनैष पूर्णः। स वा एष पुरुषविध एवे"[11]-त्यादिना विवक्षितत्वेन भृगोश्श्रुतब्रह्मवल्लीकत्वेन नियमसम्पत्त्यर्थ-

मेव प्रवृत्तत्वेन पदार्थानां सङ्ग्रहोक्त्याऽपि निर्वाहसम्भवेन लाघवाद् भृ ग वे व्यष्टिभावपरित्यागेन मयडंशं परिहृत्य समष्ट्यंशमात्रमेवानूदितम्। अत एवा"न्नं ब्रह्मे"[1]त्यादौ समष्ट्यंश एव प्रकटीकृतः। एवं च इह भृ गु व ल्ल्याम् अन्नाद्याः कोशाः परिहृतविकारत्वैः [212a] परित्यक्तकार्यत्वपरिच्छिन्नत्वादि-
5 दोषैर्विमला निर्मलाः समष्टिभावेन प्रतीयमानाः, अत एव विकारप्रतिपादन-परमयण्मुक्ताः "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"[2]ति कथिताः निखिल-जगदीशत्वावधितया प्रोक्ता भवन्ति "यतो वा इमानि भूतानि जायन्त"[3] इत्यादि-वचसि। तत्र यतो वा अन्नादिषु पञ्चसु शोधितपर्वसु मध्ये यस्माद् भूतानि जायन्त इत्यादिना परमेश्वरगतस्य निखिलजगदीशत्वस्येशगतस्य अवधित्वेन
10 पर्यन्तभूत्वेन यतो येन यदिति शब्देन निगदिता अन्नादयः पञ्चेत्यर्थः। यद्यपि सर्वेऽप्यन्नादय ईशत्वावधित्वेनोदिताः, परन्त्वीशत्वस्यान्नादिषु पञ्चस्व-वधित्वे प्रथमेन यत इत्यादिवचसा प्रसक्ते सति "अन्नं ब्रह्म"[4] "प्राणो ब्रह्म"[5] "मनो ब्रह्म"[6] "विज्ञानं ब्रह्मे"[7]ति चतुर्भिर्वाक्यैश्चतुरोऽन्नादीन् कोशान् अनवधि-धरणीत्वेन अवधिभूमित्वानर्हतया निरस्यानन्दः पञ्चम "आनन्दो ब्रह्मे"[8]ति चर-
15 मवचसा अन्तिमवचसा यद्वा—अनवधिधरणीत्वेन भूम्नः सर्वावधित्वेन ; तस्या-वध्यन्तराभावात्, अवधिमत्त्वे चानवस्थापत्तेर्निरवधिभूत्वेन व्यापकभूत्वेन वा मधुरम् अतिरमणीयम् अबोधि ज्ञापितमभूत्। इत्यर्थः। एवं च "यतो वा इमानी"[9]ति वचसः पञ्चसाधारण्येनेशसामानाधिकरण्यपरस्या"न्नं ब्रह्मे"[10]-त्यादिना"ऽऽनन्दो ब्रह्मे"[11]तिवाक्यशिरस्केन शोधितजीवेशोभयसामानाधिकर-
20 ण्यलभ्याखण्डार्थे पर्यवसानं गमितम्। इति भावः ॥११॥

[212b] पदं ब्रह्मेत्यादौ गदितमथ सद्यद्गिरि च त-
न्निरस्तद्वतांशं निरवधिकसच्चित्सुखरसम्।
निरातङ्कं नित्यं निखिलनिगमान्तैकहृदयं
विनिर्णेयं निर्णायकचरमवाचा निगदति ॥१२॥

25 अथ ब्र ह्म व ल्ली भृ गु व ल्ल्यो रखण्डार्थपरब्रह्मपदानि गणयति अन्य-ब्रह्मपदानां शोधितेशपरत्वसूचनाय—पदमिति ॥ ब्रह्मेतिपदमादौ ब्र ह्म-

व ल्ल्या दौ भृ गु व ल्ल्या दौ च "ब्रह्मविदाप्नोति परमि"[1]ति, "अधीहि भगवो ब्रह्मेती"[2]ति च गदितम्। अथ अनन्तरम् सद्भिरि च गदितम् सद्भिरि "असन्नेव स भवति। असद् ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद् वेद। सन्तमेनं ततो विदुरि"[3]ति ब्र ह्म व ल्ल्यां गदितम्। भृ गु व ल्ल्यां पुनः "यतो वा
5 इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद् विजिज्ञासस्व। तद् ब्रह्मे"[4]ति गदितम्। तत्तावत् चतुर्विधं ब्रह्मपदं कर्तृ। निरस्तद्वैतांशम् जीवत्वेशत्वाद्यंशेन भेदकेन रहितम्। निरवधिकसच्चित्सुखरसम् निरवधिकम् व्यापकम्। सत् कालत्रयाबाध्यम्। चिद्रसम् चैतन्यसारम्। बुद्धिः प्रतिफलितचैतन्या सती चिदिति वक्तुं शक्या, बिम्बचैतन्यन्तु चिद्रसरूप-
10 मिति विवेक्तव्यम्। ईदृशं सुखरसम् सुखसारभूतम्। वृत्तिरूपसुखन्तु न सारः, किन्तु भूमरसमेव तादृशमिति भावः। निरातङ्कम् अभयम् "अथ सोऽभयं गतो भवति"[5] 'न बिभेति कुतश्चन"[6] "न बिभेति कदाचन"[7] "अभयं वै जनक प्राप्तोऽसी"[8]त्यादिश्रुतिगमितम् नित्यम् नियतमेकरूपं विकारविधुरम् निखिलनिगमान्तैकहृदयम् वेदान्तनिकरतात्पर्यरूपम् निर्णायकचरमवाचा "आनन्दो
15 ब्रह्मे"[9]ति वाचा निर्णेयम् निश्चेयम् निगदति कथयति। एतेन—ब्र ह्म व ल्ली-भृ गु व ल्ल्यो रेतद्ब्रह्मपदचतुष्टयातिरिक्तानि ब्रह्मपदानि "सत्यं ज्ञानमनन्तं ब्रह्म"[10] "येऽन्नं ब्रह्मोपासते"[11] "ब्रह्म ज्येष्ठमुपासते"[12] "स एको ब्रह्मण आनन्दः"[13] "आनन्दं ब्रह्मणो विद्वान्"[14] "अन्नं ब्रह्म"[15] "प्राणो ब्रह्म"[16] "मनो ब्रह्म"[17] "विज्ञानं ब्रह्म"[18] "आनन्दो ब्रह्मे"[19]त्यादिब्रह्मपदानि मायोपाधिकेशपरतया तत्पदार्थपराणि।
20 तत्रापि जीवेशाभेदपरत्वे वाच्यार्थद्वारा शुद्धपराणि, नो चेद् विरोधाभावाद् विशिष्टपराण्येवेति—ध्वनितम्। इति दिक्॥१२॥

[213a]  जगज्जातं पुष्टं तदनु च विनष्टं यत इति
स्फुटामुक्तिं मुक्त्वा कथनमथ सूत्रेऽत्र विभृतम्।
जगज्जन्मादीनां विषयवचनं ति त्ति रि गतं
25 समादायैतस्मिन् विशदविशयादीन् गमयितुम्॥१३॥

अथेदं प्रपञ्चजातं यत इति लघुनिर्देशे सम्भवति जन्माद्यस्येति जन्मादि-

पर्यन्तानुधावनं निरर्थकमित्याशङ्क्य जन्मादिग्रहणप्रयोजनं दर्शयति—जगदिति ॥ यतो जगज्जातं पुष्टं विनष्टं च तद् ब्रह्मेति स्पष्टोक्तिं परिहृत्य जन्माद्यस्येति जगज्जन्मादीनां कथनं तैत्तिरिगतं विषयवचनम् "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ती"[1]त्येवं-
5 लक्षणं समादाय यतो जायन्ते यदुपादानकजनिकर्तृणि, येन जीवन्ति यत्कर्तृक-जीवनकर्तृणि, यदभिसंविशन्ति यत्कर्मकप्रवेशकर्तृणीति जन्मादिहेतुतावगमात् तस्मिन् वाक्ये तैत्तिरीये स्पष्टं संशयादीन् गमयितुं भवतीत्यर्थः । तथाच विषयवाक्यविशेषद्योतनाय जन्मादित्रयघटितलक्षणत्रयसूचनाय च जन्मादिग्रहणम् । इति भावः ॥१३॥

10 [213b] समुत्पत्तौ धाता कमलनयनः पालनविधौ
पिनाकी संहारे प्रभवतु नियन्ता नियमतः ।
इतीमामाशङ्कां निखिलमुनिराजो गमयितुं
जगज्जन्मादीनां त्रयमयमबध्नादिह नयात् ॥१४॥

अथ संशयादिषु पूर्वपक्षे जन्मादित्रयग्रहणस्य फलभेदं दर्शयति—समुत्पत्ता-
15 विति ॥ जन्मस्थितिभङ्गेषु ब्रह्मविष्णुरुद्रा नियन्तार इति न्यायेन गमयितुं जन्मादित्रयं सूत्रेऽत्र निबद्धम् । इति भावः ॥१४॥

परस्मिन्नीशाने जनुषि रजसो योगमवने
विधाने सत्त्वस्य प्रतिहतिविधौ साधु तमसः ।
क्रमादस्मिन् सूत्रेऽवगमयितुमाद्यो मुनिवर-
20 स्त्रयं जन्मादीनां श्रुतिहृदयवेत्ता व्यरचयत् ॥१५॥

जन्मादित्रयग्रहणे सिद्धान्तेऽपि फलमाह—परस्मिन्निति ॥ परमात्मनि जन्मस्थितिभङ्गेषु रजःसत्त्वतमसां क्रमेण योगं दर्शयितुं व्यासेन जन्मादि-त्रयमिहोपबद्धम् । इति भावः ॥१५॥

तदित्याद्येकोक्तिर्भवतु ननु सामान्यविधया
यदावृत्त्या हेतून् गमयतु बहून् गीर्यत इति ।
नियन्तारो नित्यं वि धि ह रि ह राः सन्तु जगता-
मितीमामाशङ्कां परिहरति जन्मेति मुनिराट् ॥१६॥

5 **अथ सूत्रपदानि योजयितुं शङ्कोत्तरत्वेन सूत्रमवतारयति**—तदित्याद्येको-
क्तिरिति ॥ "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभि-
संविशन्ति । तद् विजिज्ञासस्व । तद् ब्रह्मेती"[1]**ति** गीः **वाक्यं यत्पदाभ्यासादभ्या-
सेऽर्थभेदौचित्याद् जन्मस्थितिलयहेतून् बहून्** गमयतु । **एवं च ब्र ह्म वि ष्णु-
रु द्रा** जगतां नियन्तारो **भवन्तु। यदि यत्पदावृत्त्या जन्मादिहेतवस्त्रयः,
10 तर्ह्युत्तरत्र प्रतिनिर्देशे** "तद् विजिज्ञासस्व । तद् ब्रह्मेती"[2]**त्यत्र तत्पद एकवचन-
मसङ्गतं स्यादित्याशङ्क्य तत् समर्थयते**—तदित्याद्येकोक्तिर्भवतु ननु सामान्य-
विधयेति ॥ **सामान्यस्य जगद्धेतुत्वेन जगद्धेतुसामान्यस्य विधया प्रकारेण
जात्यभिप्रायेण** "तद्विजिज्ञासस्वे"[3]**त्यादिवाक्य एकोक्तिः एकवचनोपादानं**
भवतु । **एवं च यत्पदावृत्तिरर्थभेदनियतैवेति भावः । तथाचे**मामाशङ्काम्
15 **कारणबहुत्वाशङ्कां** मुनिराट् **श्री वे द व्या सः जन्मादिसूत्रेण** परिहरति ।
**इत्यन्वयः** ॥१६॥

[214a] क्रियाणां वैजात्यात् तदुचितविभक्त्याकलनतो
यदावृत्तिर्जाता ननु तदवगम्यार्थविधया ।
निरस्यैवान्नादीन् चरमपठितानन्दवचसा
20 नितान्तं निर्णीतं निगमनयुतं चैकमतुलम् ॥१७॥

**निरुक्तां शङ्कां सूत्रतात्पर्यसूचनेन परिहरति**—क्रियाणामिति ॥ **जायन्ते
जीवन्ति अभिसंविशन्तीति** क्रियाणां वैजात्यात् **विरुद्धधर्माक्रान्तत्वात् विशधातोः
सकर्मकत्वाद् इतरयोरकर्मकत्वाद् जायत इत्यस्यापादानसापेक्षत्वाद् इतरयो-
स्तदनपेक्षत्वाद् जीवन्तीत्यस्य साधनसापेक्षत्वाद् इतरयोस्तद्वत्तदनपेक्षत्वात्**

तदुचितविभक्त्याकलनतः विभिन्नाकाङ्क्षजन्यादिक्रियोचितकारकविभक्तिपरिग्रहात् एकस्मात् शब्दात् नानाविभक्तीनां युगपत् समावेशायोगाद् यत्पदावृत्ति-र्विभिन्नार्थकविभक्तिसंनिवेशनिबन्धना, न तावद् विभिन्नार्थकत्वनिबन्धना। एवं चानेनानन्यथासिद्धाभ्यासस्थल एवार्थभेदेन प्रकृतेऽभ्यासस्यान्यथा-
5 सिद्धत्वेनार्थभेदकत्वं न सम्भवति। एवं च सति "तद्विजिज्ञासस्व, तद्ब्रह्मे"[1]ति तत्पदस्य सामान्यपरताकल्पनक्लेशोऽपि नावतरतीति विवेचनीयम्। अथ यतो येन यदिति यत्पदावृत्तिर्नार्थभेदं गमयेत्; उपसंहारविरोधात्, इति हेत्वन्तरं दर्शयति—निरस्यैवेति॥ "तद्विजिज्ञासस्व तद्ब्रह्मे"[2]ति वाक्यानन्तरम् "अन्नं ब्रह्म।"[3] "प्राणो ब्रह्म"[4] मनो ब्रह्म"[5] "विज्ञानं ब्रह्मे"[6] त्यनेनान्नादींश्चतुरः
10 कोशान् निरस्य जगत्कारणत्वोपलक्षितं ब्रह्म भवितुं नार्हतीति निरस्य "आनन्दो ब्रह्मे"[7]त्यन्तपठितेन वचनेन "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"[8]ति निगमनवचनयुतं यथा भवति तथा अतुलम् तुलारहितम् "न तत्समश्चाभ्यधिकश्च दृश्यत"[9] इति श्रुतेः एकम् द्वितीयरहितम् नितान्तम् अत्यर्थं निर्णीतं भवति। एतेन यत्पदार्थबाहुल्यम्, तत्पदस्य सामान्यपरत्व-
15 कल्पनं च निराकृतं वेदितव्यम्॥१७॥

[214b] इमानीति त्यक्त्वा बहुवचनमस्येति कथनं
प्रभृत्यादीन् शब्दानपिच परिहृत्यादिपठनम्।
लघुत्वाद् व्यत्यासाद् विरचनमिहार्थान्तरकृते
तदाद्यस्येत्येतद् द्रु घ ण परमीदृक्श्रुतिवशात्॥१८॥

20 अथ सूत्रे श्रौतपदानां मध्ये कस्यचित् परिग्रहः, परस्यापरिग्रहः, परि-गृहीतेऽपि पदे श्रुत्यपेक्षया प्रकारान्तरेण पाठः, श्रौतक्रमविपरीतक्रमादरणं चेत्यत्र निमित्तं दर्शयति—इमानीति॥ "यतो वा इमानी"[10]ति श्रौतं बहु-वचनान्तं पदं परिहृत्य अस्येत्येकवचनान्तस्य सूत्रे कथनं जीवन्ति प्रविश-न्तीति श्रौते पदे परित्यज्य बहुव्रीहिणा तदर्थपरिग्रहे विवक्षिते सति
25 प्रभृत्यादिपदवर्जनेनादिपदस्य वचनं च लाघवादादृतम्;

"अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥"[11]

इति लक्षणात्। "यतो वा इमानि भूतानि जायन्त"[1] इति श्रौते पदानां क्रमे जागरूके सति "जन्माद्यस्य यत"[2] इति विपरीतक्रमेण विरचनमर्थान्तरार्थम् अर्थान्तरं सूचयितुम्। तत् तस्मादीदृशविलक्षणरचनावत्त्वाद् जन्म आद्यस्य यत इति पदच्छेदोऽपीहाभिप्रेतः। एवं चाद्यस्येति हु घ ण परं विज्ञेयम्।
5 तथाच आद्यस्य हि र ण्य ग र्भ स्य जन्म यतः प्रपञ्चोपादानभूतनिमित्तकर्तुः तद्ब्रह्मेत्यपि योजनं सूचितं भवति। इदं च योजनमीदृक्श्रुतिवशाद् विनिर्णेयम्— "यो ब्र ह्मा णं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये"[3] "यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रु द्रो महर्षिः। हि र ण्य ग र्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्त्वि"[4]त्यादि-
10 श्रुतितो निश्चेयमिति गोलार्थः। अत्रेमानीतिस्थानेऽस्येति पाठो लाघवा- यत्तोऽपि आद्यस्येति पदच्छेदप्रयुक्तोऽपि विवेचनीयः ॥१८॥

[215a] यतश्शब्दे सौत्रे श्रुतिगतविभक्तिर्न कलिता
यतः सूत्रे तन्त्रादखिलयदनूक्तिः समुचिता।
विभक्तीनां भेदाद् यदुपघटितानां जनिमुख-
15 क्रियायोगाद् योगे युगपदुपसंहृत्य घटनात् ॥१९॥

अथ सूत्रगतस्य यत इति पदस्य विभक्त्यर्थं विवेचयति—यतः शब्द इति ॥ सौत्रे यतःशब्दे "यतो वा इमानी"[5]ति श्रुतिगतविभक्तिर्न कलिता न निबद्धा। यतः यस्मात् कारणात् श्रुतौ "जनिकर्तुः प्रकृतिरि"[6]ति जनियोगे पञ्चमी, येनेति करणतृतीया, "यत् प्रयन्ती"[7]ति द्वितीया। सूत्रे तावत् सर्वयत्पदाना-
20 मनूक्तिस्तन्त्रावलम्बेन समुचिता; सूत्रे भेदेनापरिग्रहात्, श्रुतौ यत्पदोपघटितानां विभक्तीनां जनिजीवनसंवेशनलक्षणविभिन्नविरुद्धक्रियायोगेन भेदात्। योगे "जन्माद्यस्य यतः"[8] इति सूत्रे त्रिविधस्यापि कारकस्य युगपदुपसंहृत्य घटनात् एकयत्पदे कारकत्रयसाधारणहेतुत्वांशमात्रमुपादाय यत इति घटनात् सौत्रे यतःशब्दे जगज्जन्मस्थितिभङ्गहेतुत्वमात्रं प्रतीयते। इति योजना ॥१९॥

25 [215b] जगज्जन्मादीनां श्रुतिशिरसि हेतुत्वमुदितं
यदेतत्पञ्चम्या यदुपहितया सूत्रगतया।

यदादिष्टं सम्यक् तसिपरिणतिद्योतिवपुषा
जडोपाधीशस्थं निगदितमखण्डाय मुनिना ॥२०॥

अथ पूर्वश्लोकसूचितमर्थं प्रकटयन् त्रिविधकारकसाधारणहेतुत्वनिर्देशस्य फलं सूचयति—जगज्जन्मादीनामिति ॥ श्रुतिशिरसि "यतो वा इमानी"[1]ति श्रुत्यन्ते यत्तावत् त्रिविधकारकसाधारणं हेतुत्वमुदितम् निरुक्तम्, कारकत्वप्रयुक्तमेतत्कारकत्रयसाधारणं हेतुत्वम् आद्यादित्वात् "सार्वविभक्तिकस्तसिरि"[2]ति हेतुपञ्चम्यन्तात् "पञ्चम्यास्तसिरि"[3]ति तसौ "सुपो धातुरि"[4]ति विभक्तिलोपे तसिपरिणतिद्योतिवपुषा तसिपरिणामप्रकाशमानवपुषा पञ्चम्या हेतुपरया यदुपहितया यत्पदनिबद्धया "जन्माद्यस्य यत"[5] इति सूत्रगतया सम्यक् स्पष्टम् आदिष्टम् निर्दिष्टम् जडोपाधीशस्थम् जडा मायोपाधिर्यस्येदृशो य ईशः, तत्र स्वरूपलक्षणत्वेन विद्यमानं निरङ्कुशजगद्धेतुत्वं सूत्रे "यत"[6] इति श्रुतिव्याख्यापरे मुनिना वे द व्या से न अखण्डाय जीवेशोभयसामानाधिकरण्यलभ्याखण्डार्थायाखण्डार्थस्फूर्तये निगदितम् कथितमित्यर्थः। अयमाशयः—"अधीहि भगवो ब्रह्मे"[7]ति प्रश्ने "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"[8]ति जीवघटकानर्थान् निर्दिश्य तदनु निरुक्तान्नादिषु पञ्चसु मध्ये "यतो वा इमानि भूतानि जायन्त"[9] इत्यादिना जीवघटकपदार्थोद्देशेनेशगतजगत्कारणत्वं तटस्थविधया लक्षणत्वेन जीवीयपदार्थनिर्धारणमन्तरा निरुच्य तदनन्तरं जीवसम्बन्धिपदार्थांश्चतुरोऽन्नादीन् निरस्य "आनन्दो ब्रह्मे"[10]ति निर्धारणाद् यथाश्रुत्यैव तद्व्याख्यानपरसूत्रस्यापि तात्पर्यान्वयनौचित्यात् सूत्रमिदमखण्डार्थपरमेवेति ॥२०॥

[216a] प्रपूर्त्तिः सूत्रेऽस्मिन् प्रभवति तदित्यादिवचसा
तदेतद् व्याख्येयश्रुतिगतमुपेयं मतिमता।
न लोकादानेयं निगदितसूत्रादपि परं
च्युताकाङ्क्षामूलाज्झटिति हि समभ्यर्हिततरात्॥२१॥

अथ जन्मादिसूत्रस्य यत इति यत्पदघटितत्वाद् यत्पदे च सति तत्प्रतिनिर्देशकतत्पदस्यापेक्षितत्वात् तत्पदार्थोद्देशेन च विधेयांशस्याप्यपेक्षितत्वेन

तत्पदमुद्देश्यसमर्पकम्, विधेयपरं पदं च कुतः समानेयमिति सन्देहे व्याख्येय-
श्रुतेरेव यत इत्यादितोऽपेक्षितत्वात् परिग्राह्यम्, न पूर्वस्मात् "अथात"[1] इति
सूत्रात् न वा लोकादिति निरूपयति—प्रपूर्तिरिति ॥ जन्मादिसूत्रेऽस्मिन्
तद् ब्रह्मेति वचसा वाक्यप्रपूर्तिः प्रभवति। तदेतद् वाक्यं "तद् ब्रह्म"[2]ति-
5 लक्षणं व्याख्येयश्रुतिगतमेव "यतो वै"[3]त्यादिश्रुतिगतमेव "तद् ब्रह्म"[4]त्येवंलक्षणं
मतिमता सुधिया पुरुषेणाभ्युपेयम् अङ्गीकार्यम्। तद्ब्रह्मेति न लोकादानेयम्,
तदिति लोकादानीय ब्रह्मेतिपदम् "अथातो ब्रह्मजिज्ञासे"[5]तिसूत्रात् समस्तैक-
देशमपि कथञ्चिद् नादेयं भवति। कुतः। हि यस्मात् कारणात् समभ्यर्हित-
तराद् मूलात् "यत"[6] इत्यादिवाक्यादाकाङ्क्षा च्युताऽभूत् इत्यन्वयः।
10 अयमभिप्रायः—प्रकृते व्याख्यानभूतसूत्राकाङ्क्षाशान्तयेऽध्याहारोऽनुषङ्गो
वा समादरणीयो भवति। तत्र व्याख्यानस्य व्याख्येयस्फूर्तिसापेक्षत्वेन
व्याख्येयस्य व्याख्यानशरीरात्मभूतत्वेनात्यभ्यर्हितत्वात् तत एव प्रथमोपस्थि-
ताद् व्याख्यानाकाङ्क्षायाः शान्तेर्विलम्बोपस्थितिकादन्यतोऽध्याहारानुषङ्ग-
परिकल्पनमनुचितमिति ॥२१॥

15 [216b] इदं सूत्रं प्राचा परिकलितवृत्त्या प्रथमतः
स्वतन्त्रं व्याख्याय श्रुतिविवृतितामुक्तवपुषा।
पदाहृत्या रीत्याऽ क्ष च र ण मतं नेति यतिराट्
स्फुटं प्रत्याख्याय श्रुतिविवरणात्मेत्यकथयत् ॥२२॥

अथैतत्सूत्रभाष्यं तात्पर्यविवेचनतो विभजन् पूर्वापरविरोधपरिहारं सूचयति
20 —इदं सूत्रमिति ॥ यतिराट् श ङ्क र देशिकेन्द्रः इदम् जन्मादिलक्षणम् सूत्रं
श्रुतिविवृतितामुक्तवपुषा श्रुतिविवरणत्वविनिर्मुक्तदेहया प्राचा उ प व र्षा दिना
प्राचीनेन व्याख्यात्रा परिकल्पितवृत्त्या परिगृहीतव्याख्यया प्रथमतः एतदधिकरणा-
रम्भे स्वतन्त्रम् अन्याव्याख्यारूपं लोकादिप्रसिद्धलक्षणपरं तद्ब्रह्मेति पदाहृत्या
रीत्या पदाहरणपरिपाट्या व्याख्याय तदनन्तरम् अ क्ष च र ण स्य गौ त म स्या-
25 नुमानरूपं मतमिदं सूत्रं न भवतीति स्फुटम् विस्पष्टं शब्दत एव प्रत्याख्याय
जन्मादिसूत्रमिदं "यतो वा इमानि भूतानी"[7]ति श्रुतिविवरणात्मा भवति इत्यकथयत्

कथयामासेत्यर्थः। तथाचेह त्रिविधं भाष्यम्—प्रथमं प्राचीनवृत्तिकारमताभिप्रायेण सूत्रमिदं लोकसिद्धलक्षणपरमिति। द्वितीयं पुनरिदं सूत्रं न्यायमतरीत्येश्वरानुमानपरमिति पक्षनिराकरणपरम्। तृतीयन्तु "यतो वा इमानी"[1]त्यादिश्रुतेर्विवरणपरं सूत्रमिदमिति। तथाच न पूर्वोत्तरविरोधः।
5 इति भावः ॥२२॥

[217a] पुरः कल्पोऽनल्पो विहितविशयो निश्चयपरः
परः कल्पश्चेति स्थिरमुदितकल्पं गुरुवरैः।
यतो जन्माद्याद्यं निचितमिह सूत्रं नयचयैः
समुद्दिष्टं स्पष्टं श्रुतिशिखरवाचा कवलितम् ॥२३॥

10 "विषयो विशयश्चे"[2]त्याद्यधिकरणलक्षणाभावाशङ्कां परिहरति—पुरः कल्प इति॥ अत्र विहितविशयः कृतसंशयः अनल्पः दृढयुक्तिबहुलः पुरः कल्पः पूर्वः पक्षः, तादृश एव निश्चयपरः निर्णयप्रधानः परः कल्पः सिद्धान्तपक्षश्चेत्येतत् स्थिरं यथा भवति तथा गुरुवरैः आचार्यवर्यैः उदितकल्पम् कथितप्रायं भवति। कुतः यतः यस्मात् कारणात् जन्माद्याद्यम् जन्मादीतिपदादिकं नयचयैः न्याय-
15 समुदायेन निचितम् खचितं सूत्रम् इह अस्मिन्नधिकरणे श्रुतिशिखरवाचा "यतो वा इमानि भूतानी"[3]त्येवंलक्षणया "भृगु र्वै वारुणिरि"[4]त्यादिकया "सैषा भार्गवी"[5]त्याद्यन्तया कवलितम् ग्रस्तं तन्मात्रविषयकं गुरुवरैरेवैतत्सूत्रविवरणोत्तरार्धे स्पष्टं समुद्दिष्टं भवति। एवं च विषयप्रदर्शनद्वारा संशयादीनामपि प्रदर्शनादधिकरणलक्षणमिहोपपन्नं भवति। पूर्वपक्षसिद्धान्ताकारौ च
20 "तदित्याद्येकोक्तिः"[6] "क्रियाणामि"[7]ति श्लोकाभ्यां प्रागेव प्रदर्शितौ विज्ञेयौ ॥२३॥

[217b] यतीन्द्राणां सम्राट् सरसवचनैर्वर्णकमथो
पुराणानां पूर्वं स्वमतिविभवेनापरमपि।
विधाय द्वौ न्यायांशुभिरभिनिबद्धौ विधुरवी
25 धुनोति स्म ध्वान्तं ननु सुमनसां मानसगतम् ॥२४॥

अथ ब्रह्म जिज्ञासितव्यमित्यादिभाष्यस्य वेदान्तवाक्यप्रथनार्थत्वादिति भाष्यस्य च मतभेदेन प्रवर्तितत्वेन परस्परविरोधो नावतरतीति व्युत्पादयति— यतीन्द्राणामिति ॥ अथो प्रथमसूत्रानन्तरं यतीन्द्राणां सम्राट् यतिराजः श्री श ङ्क रा चा र्यः पूर्वम् प्रथमं पुराणानाम् उ प व र्षा दीनां वर्णकम् जन्मादिसूत्र-
5 व्याख्यानं ब्रह्म जिज्ञासितव्यमित्यादिलक्षणं पश्चात् स्वमतिविभवेन स्वबुद्धिसामर्थ्ये-नापरमपि वर्णकम्, एवं द्वौ वर्णकावेव न्यायांशुभिः न्याया एवांशवः, तैरभिनिबद्धौ शशिरवी चन्द्रसूर्यौ विधाय कृत्वा सुमनसाम् पण्डितानां मानसगतं ध्वान्तम् अन्धकारं सूत्रार्थाज्ञानलक्षणं धुनोति स्म दूरीकरोति स्म ननु। अत्र पक्षद्वयावलम्बेन प्रकृतभाष्यप्रवृत्तेर्न परस्परविरोध इति सूचितम्। शशि-
10 रवी इति कथनात् प्राचीनपक्षो न तथा तेजस्वी, युक्त्यपनोद्योऽपि भवति, द्वितीयः पक्षोऽतितेजस्वी युक्तिभिरनपनोद्य इति गमितम् ॥२४॥

[218a] यतोवाणीं मध्यां चरमगतमानन्दवचनं
समुद्गृह्णन्नार्यः प्रथममपि वाक्यं भृ गु रिति।
यदुक्तिं जीवार्थामगमयदिहान्नादिवचनं
15 द्विरित्येकप्रश्ने द्विविधमुदितं चोत्तरमिति ॥२५॥

अथ जन्मादिसूत्रे यत्पदं नेशपरम्, किन्तु जीवपरं सदखण्डार्थपर्यवसायीति श्री श ङ्क र भगवत्पादसंमतं द्वितीयवर्णकरीत्येति विवेचयति—यतोवाणीमिति ॥ किं पुनस्तद्वेदान्तवाक्येनेह लिलक्षयिषितमित्यवतार्य "भृ गु र्वै वारुणिः। व रु णं पितरमुपससार। अधीहि भगवो ब्रह्मेती"[1]त्युपक्रम्याह—"यतो वा इमानि
20 भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मे"[2]ति। तस्य च निर्णायकवाक्यम्—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ती"[3]ति भाष्ये पठितम्। तत्र आर्यः देशिकेन्द्रः मध्याम् मध्ये भवां यतोवाणीम् "यतो वा इमानी"[4]त्यादिकां ब्राह्मीम्; चरमगतम् चतुर्थकोशावसानस्थानगत-
25 मानन्दवचनं भृ गु रिति प्रथमं वाक्यमपि समुद्गृह्णन् सन् समुद्धरन् सन् यदुक्तिम् "यतो वा इमानि"[5] "जन्माद्यस्य यत"[6] इति यत्पदोक्तिं जीवार्थाम् अखण्डार्थ-

घटकजीवार्थम् अकथयत् ज्ञापयाम्बभूव । तत्र हेतू वदति—इहेति ॥ "अधीहि भगवो ब्रह्मेती"[1]त्येकप्रश्ने "तस्मा एतत् प्रोवाच"[2] "तं होवाचे"[3]त्युत्तरद्वयं दत्तं भवति । इदञ्चोत्तरद्वयमर्थद्वयविवक्षायाम् । अर्थद्वयं चेहाखण्डार्थ-परिग्रहार्थं तद्घटकीभूतजीवेशोभयपरिग्रहे घटते । तत्रापि प्रथमं जीव-
5 पदार्थाना"मन्नं प्राणमि"[4]त्यादिना परि[218b]ग्रहात् परिगृहीतानामन्नादीना-मन्यत्र विनियोगेन तत्संसृष्टतयैवोपस्थितपदार्थपरामर्शकयत्पदावलम्बेन "यतो वा इमानी"[5]तिपाठादन्नादिषु पञ्चसु मध्ये यतो जन्मादीति जग-त्कारणत्वस्येशगतस्य निर्देशाद् जीवेशोभयसामानाधिकरण्यलभ्याखण्डार्थ-एव "अधीहि भगवो ब्रह्मेतो"[6]ति पृष्ट इति प्रश्नैक्य उत्तरद्वयवशात् सदीशां-
10 शस्य जन्मादिवाक्यतो लाभाद् जीवांशलाभः प्रस्तुतान्नादिसंनिधानादिति यत इति यत्पदं जीवपरमिति सिद्ध्यति । एवमिह प्रकरणे "भृगु र्वै वारुणिरि"[7]त्यादौ "अन्नं प्राणमि"[8]ति प्रथमतो"ऽन्नं ब्रह्मेति"[9] "प्राणो ब्रह्मेती"[10]ति पश्चाच्चान्नादीनां द्विः पाठात् प्रथमपाठस्य संनिधानेनोद्देश्यपर-यत्पदार्थसमर्पकत्वेनोपयोगादुत्तरत्र यत्पदपरिगृहीतेष्वन्नादिष्वन्नादीनाम-
15 ब्रह्मत्वेन शोधितत्वम्पदार्थभूतानन्दपरिग्रहार्थत्वादग्रिमान्नादिवाक्यस्थ यत इति यत्पदं जीवपरमित्येव सिद्ध्यति । इति दिक् ॥२५॥

[219a] प्रतिज्ञायाः सूत्रं प्रथममिति पक्षः प्रथमतः
परेषां यः प्रोक्तस्तदुपकलनेनापरमपि ।
परब्रह्मस्फूर्तावतुलविलसल्लक्षणपरं
20 स्फुटाटोपं स्पष्टं प्रकटितमिहाचार्यचरणैः ॥२६॥

अथ द्वितीये जन्मादिसूत्रे पक्षद्वयप्रवर्तनं प्रथमसूत्रे पक्षद्वयप्रवतनायत्तमिति श्लोकाभ्यां दर्शयति—प्रतिज्ञाया इति ॥ अथेतीति ॥ अथ जन्मादिसूत्रं गौ त-मा दि मतवत् श्रुतिस्पर्शरहितलक्षणपरमिति पक्षो जिज्ञासासूत्रं प्रतिज्ञा-परमिति पक्षाश्रयणेनेत्याह—प्रतिज्ञाया इति ॥ प्रथमं सूत्रम् "अथात"[11]
25 इत्येवंलक्षणं प्रतिज्ञाया भवति प्रतिज्ञासम्बन्धि भवतीति यः परेषां वृत्ति-काराणां पक्षः प्रोक्तः, तदुपकलनेन तत्पक्षाश्रयणेन अपरमपि सूत्रं जन्मादि-

लक्षणं कर्म आचार्यचरणैः श्री श ङ्क र देशिकैः परब्रह्मस्फूर्तौ अखण्डार्थप्रतिपत्ति-विषये तन्निमित्तमिति यावत् अतुलविलसल्लक्षणपरम् अतुलम् तुलारहितं सादृश्यविनिर्मुक्तमत्युत्तमं दोषविनिर्मुक्तम् विलसत् प्रकाशमानं लक्षणम् लक्ष्म, तत्परम् तदर्थकं स्फुटाटोपम् विस्पष्टसंभ्रमम् स्पष्टम् सत्वरबोधार्हं 5 यथा भवति तथा प्रकटितम् प्रकाशितमभूत् । इत्यन्वयः ॥२६॥

अथेत्याद्यं सूत्रं श्रुतिशिखरतात्पर्यगमकं<br>
भवेदेवेत्येवं स्वयमुदितपक्षाश्रयणतः ।<br>
द्वितीयं सूत्रं च श्रुतिहृदयनिर्णायकतया<br>
निरुक्तं निष्णातैर्नयनियमने देशिकवरैः ॥२७॥

10 अथ जन्मादिसूत्रस्य श्रुतिविवरणरूपत्वं प्रथमस्य श्रुतिव्याख्यापक्षत्व-माश्रित्य निरुक्तमित्याह—अथेत्याद्यमिति ॥ "अथातो ब्रह्मजिज्ञासे"[1]त्याद्यं सूत्रं न प्रतिज्ञापरम्, किन्तु "तद्विजिज्ञासस्वे"[2]त्यादिश्रुतिव्याख्यारूपम्, श्रुति-तात्पर्यगमकमेवेत्येवं स्वयमेवोदितपक्षाश्रयणतः स्वोक्तपक्षावलम्बेन नयनियमने न्यायव्यवस्थापने निष्णातैर्देशिकवरैः श्री श ङ्क र भगवत्पादैर्द्वितीयं सूत्रमपि 15 श्रुतिहृदयनिर्णायकतया "यतो वे"[3]त्यादिश्रुत्यर्थनिश्चायकत्वेन निरुक्तम् । इत्य-न्वयः ॥२७॥

[219b] जगज्जन्मादीनां यदतुलबलं साधकवरं<br>
परं तद् ब्रह्मेति प्रकटयति लक्ष्मेशनिलयम् ।<br>
इदं सूत्रं जन्मादिमघटितलक्ष्मत्रयपरं<br>
20 परत्वात्रांशांशादपि वपुषि दोषानवधृतेः ॥२८॥

अथ जगज्जन्मादिकारणत्वं मायोपाधिकेश्वरगतं जीवेशोभयसामानाधिकरण्य-लभ्याखण्डार्थस्य चन्द्रस्य शाखाग्रवत् तटस्थलक्षणमिति वदन् जन्मादि-कारणत्वानि त्रीणि लक्षणानि, नैकं लक्षणं सर्वं मिलितमिति दर्शयति—जगज्जन्मादीनामिति ॥ मायोपाधिकस्येशस्य स्वरूपलक्षणभूतं यद् जन्मादि-

हेतुत्वमीशनिलयं लक्ष्म कर्तृ जगज्जन्मादिनां साधकवरम् साधकमीशस्वरूपम्, साधकवरमीशस्याप्यधिष्ठानभूतं चैतन्यम् अतुलबलम् अत्युत्तमबलं यत्संनिधानादेव सर्वकार्यसिद्धिः, तदिति यावत्। ईदृशं यत् परम् सर्वोत्तरं निरतिशयम् ब्रह्म भवतीति शाखाचन्द्रन्यायेन तटस्थं सत् प्रकटयति प्रकाशयति।
5 इत्यन्वयः। इदमिति॥ परत्र परस्मिन्नखण्डेऽर्थे तटस्थं निरङ्कुशजन्मादिकारणत्वं नैकं लक्षणम्, किन्तु त्रीणि लक्षणानि। एवञ्चेदं सूत्रं जन्मादिलक्षणं परत्र परस्मिन् ब्रह्मणि जन्मस्थितिभङ्गघटिततटस्थलक्ष्मत्रयपरं भवति। मिलितमेव लक्षणं कुतो न भवतीत्याशङ्क्याह—इदमिति। अत्रापि जन्मकारणत्वादिरूपलक्षणत्रैविध्यवति लक्षणवपुषि अशांशादपि अशांशाव-
10 लम्बनेनापि दोषानवधृतेः दोषानवधारणात्। अव्याप्त्यादिदोषवत्त्वे किल तत्परिहाराय विशेषणान्तराण्युपादेयानि, प्रकृते निरङ्कुशजन्मादिकारणत्वेषु त्रिविधलक्षणेषु क्वापि दोषास्पर्शाद् मायायाः कारणतावच्छेदकत्वेन कारणत्वाभावात् प्रत्येकमेव लक्षणं भवति। इति दिक्॥२८॥

[220a] इदं सूत्रं लक्ष्मार्थमिति न घटेतैव विषयो
15 न लक्ष्यात्मा मानप्रमितवपुषा यत् प्रभवति।
परन्त्वेतद् नेयं परकलपरब्रह्मविषयाऽ-
नुमित्यामित्यादि स्फुटमकथि का णा द नयतः॥२९॥

अथ लक्षणपरं जन्मादिसूत्रमिति पक्षेऽस्वरसं सूचयितुं क णा द स्य मतमवतारयति—इदमिति॥ जन्मादिसूत्रमिदं ब्रह्मणो लक्षणपरमिति न
20 घटेतैव। शुद्धब्रह्मरूपे विषये किलेदं लक्षणं वक्तव्यम्। तत्र लक्ष्यस्वरूपो न विषयः। यत् यस्मात् कारणात् मानप्रमितवपुषा माननिर्णीतदेहेनोपलक्षितो न प्रभवति प्रकर्षेण न भवति; ईशस्य लोकप्रत्यक्षागोचरत्वात्, लक्ष्याप्रसिद्धौ लक्षणाकाङ्क्षाया एवानुदयात्। तस्मादिदं जन्मादिसूत्रं न लक्षणपरम्, किन्तु परकलपरब्रह्मविषयानुमित्यां विषये नेयम् पराः उत्कृष्टाः कलाः शक्तयः
25 सामर्थ्यानि यस्य, ईदृशं यत् परं ब्रह्म, तद्विषयानुमितिविषये सूत्रमिदं योजनीयमिति यावत्। तथाचानुमानपरमिदं सूत्रमित्यादिकं का णा द नयतः

क णा दो क्रमार्गेण स्पष्टमकथि कथितं भाष्येऽभूदित्यर्थः। आदिपदाल्लक्षण-पक्षास्वरसेन प्रवृत्तं का णा द मतमपि भाष्य एव दूषितमिति भावनीयम् ॥२९॥

[220b] स्वतन्त्रं लक्ष्मेदं विशदयति सूत्रं श्रुतिवचोऽ-
5 नपेक्षत्वेनेति प्रतिघटनमुन्मूलितनयम्।
निदानं जन्मादेरिति विरचने सम्भवति यद्
यतोऽस्येत्यादानं भवति गुरु वाक्यान्तरमपि ॥३०॥

अथ जन्मादिसूत्रं न श्रुतिव्याख्यापरम्, किन्तु श्रुत्यनपेक्षलक्षणपरमिति पक्षमनूद्य दूषयति—स्वतन्त्रमिति ॥ इदं सूत्रम् जन्मादिसूत्रम् श्रुतिवचोऽनपेक्षत्वेन
10 श्रुतिवाक्याव्याख्यानरूपत्वेन स्वतन्त्रं लक्ष्म लक्षणम् विशदयति स्पष्टीकरोति इति प्रतिघटनम् श्रुतिव्याख्यात्वविरुद्धघटनम् उन्मूलितनयम् न्यायरहितमिति यावत्। न्यायाभावमेव दर्शयति—निदानमिति ॥ यत् यस्मात् कारणाद् जन्मादिनिदानं ब्रह्मेति लघुविरचने सम्भवति सति यतोऽस्येत्यादानम् यत इति व्यस्तत्वेनान्वयरीत्या ग्रहणं गुरु भवति। यत्पदग्रहणेन तद्ब्रह्मेत्यन्व-
15 यावश्यम्भावेनैकवाक्यविधया विरचनमपहाय वाक्यभेदेन विरचनमपि गुरुरूपं भवतीति भावः। तथाच व्या स वाक्यान्तरविरचनान्यथानुपपत्त्या नेदं लक्षणपरम्, किन्तु श्रुतिव्याख्यानपरमेव। श्रुतिव्याख्यात्वे च व्या स-वाक्यान्तरे सार्थके एव भवतः। व्याख्येयश्रुतौ यत इति इमानीति तद्ब्रह्मेति दर्शनेन तद्व्याख्यापरमिदं सूत्रमिति सूचनायैवेद्दृशसूत्रविरचनौचित्यात्।
20 इति दिक् ॥३०॥

[221a] इदं सूत्रं लक्ष्मार्थकमथ परब्रह्मविषया-
नुमित्यर्थं व्याख्यार्थकमथ पुनः श्रौतवचसः।
इति त्रेधा सिद्धा विशदवचनैर्वर्णकभिदा
परन्त्वाद्यद्वन्द्वं प्रतिविहतमर्थोक्तिविधया ॥३१॥

अथैतदधिकरणभाष्यं मतभेदेन त्रेधा सूत्रव्याख्यानाय प्रवर्तितं भवतीति कथयन् प्रथमं पक्षद्वयं दुष्टमिति दर्शयन्नन्त्यपक्षमदुष्टं सूचयति—इदमिति ॥ इदं सूत्रं जन्मादिलक्षणं लक्षणार्थकमिति परब्रह्मविषयकानुमित्यर्थमिति अथ पुनः श्रुतिवाक्यस्य व्याख्यानार्थमिति च त्रेधा वर्णकभिदा वर्णकानां भेदो विशद-वचनैः भाष्यकारस्पष्टवचनैः सिद्धा भवति। परन्तु लक्षणानुमानपक्षद्वन्द्व-मर्थोक्तिविधया प्रतिविहतं भवति। तत्र लक्षणपक्षः पूर्वोक्तरीत्याऽर्थाद् निराकृतः। अनुमानपक्षस्तु शब्दत एव भाष्यकृद्भिर्निराकृतः। इति भावः ॥३१॥

प्रतिज्ञाद्यान् पक्षान् प्रथममुपनीतानुपसर-
न्नथार्यो ब्रह्मेति प्रकटयति लक्ष्मार्थमपरम्।
समासं जन्मेति क्रममपि समानं विशदय-
न्नथास्येत्यस्यार्थं यत इति पदस्यापि वदति ॥३२॥

अथ जन्मादिसूत्रावतारणभाष्यं सूत्रगतपदयोजनाभाष्याणि च वृत्तिकार-सरण्या प्रवर्तितानीत्यवतारयति—प्रतिज्ञाद्यानिति ॥ अथ प्रथमसूत्रव्याख्या-नन्तरम् आर्यः श्रीमान् श ङ्क र देशिकः प्रथमं "अथातो ब्रह्मजिज्ञासे"[1]ति सूत्र-व्याख्यानावसरे उपनीतान् उल्लिखितान् प्रतिज्ञाद्यान् पक्षान् ब्रह्मविचार आरभ्यत इति प्रतिज्ञा, साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मविचारः कर्तव्य इति विधिः, साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मविचारो भवतीत्यनुवादः। एतान् पक्षान् उपसरन् अनुसरन् अपरम् द्वितीयं जन्मादिसूत्रम् लक्ष्मा[221b]र्थम् लक्षणार्थकं प्रस्तुतब्रह्मणो लक्षणप्रतिपादकं प्रकटयति प्रकाशयति ब्रह्मेति वाक्येनेत्यर्थः। ब्रह्म जिज्ञासितव्यमित्युक्तम्। किंलक्षणं पुनस्तद् ब्रह्मेत्यादि भाष्यम्। अथ जिज्ञासितव्यमिति ब्रह्मविचारः कर्तव्य इति यावद्। इदं चोपलक्षणम् —ब्रह्मविचार आरभ्यते, ब्रह्मविचारो भवतीत्येतयोरपि ; प्रथमसूत्र एतयोरपि प्रस्तावात्। तथाच पूर्वं प्रस्तुतस्य ब्रह्मणो लक्षणपरं सूत्रमिदमिति भावः। समासमिति ॥ जन्मेति ॥ जन्मोत्पत्तिरादिरित्यादिना समासं तद्गुणसंविज्ञानं बहुव्रीहिं दर्शयन् जन्मनश्चादित्वमित्यादिना क्रममपि समानम् प्रमाणसहितम्— "यतो वै"[2]त्यादिश्रुतिनिर्देशलक्षणप्रमाणेन वस्तुस्वभावग्राहकलोकदर्शनप्रमाणेन

च सहितम् विशदयन् प्रदर्शयन् अथ अनन्तरमस्येति सूत्रगतस्य पदस्य षष्ठ्यन्तस्य यत इति हेतुपरपदस्य चार्थं अस्येतीति षष्ठीति यत इतीति भाष्यैर्वदतीत्यर्थः। अयमत्रार्थः—जिज्ञासासूत्रे प्रस्तुतस्य ब्रह्मणो गोः सास्नादिमत्त्वं लक्षणमितिवद् जगज्जन्मादिकारणत्वं लक्षणमिति लक्षणनिर्देश-
5 परं जन्मादिसूत्रम्। जन्म आदिरस्येति तद्गुणेन जन्मस्थितिभङ्गाः परिगृह्यन्ते। जन्मादीनां क्रमो यत इति श्रुतिवस्तुस्वभावसिद्धः। अस्य प्रपञ्चजातस्य प्रत्यक्षतः परिगृह्यमाणस्य जन्मादि यतः कारणात् सर्वज्ञात् सर्वशक्तेर्भवति तद् ब्रह्मेति सिद्धं भवति। पदार्थनिर्देशानन्तरं वाक्यार्थनिर्देशपरम् अस्य जगतो नामरूपाभ्यामित्यादि भाष्यम् ॥३२॥

10 [222a] समायेशं ब्रूते यत इति गिरा गम्यमखिल-
प्रपञ्चोपादानं निरुपमनिमित्तात्मकमपि।
स्वरूपात्मावोक्तं भवति जगदीशैकनियतं
परेषां पक्षेण स्फुटतरमतो लक्षणमिदम् ॥३३॥

अथ यत इति कारणनिर्देश इत्यादेः वाक्यशेष इत्यन्तस्य भाष्यस्य भावं
15 सङ्ग्रहेण दर्शयन् ब्रह्म जिज्ञासितव्यमित्युक्तमित्युपक्रान्तप्रकरणसिद्धमर्थं दर्शयति —समायेशमिति॥ यत इति कारणनिर्देश इत्यादिना वाक्यशेष इत्यन्तेनाखिल-प्रपञ्चोपादानं समायेशम् मायासहितमीशम् निरुपमनिमित्तात्मकमपि सर्वज्ञ-त्वानन्तशक्तिमत्त्वादिना निरुपमकर्तृरूपनिमित्तात्मकमपि भगवन्तम् यत इति गिरा सूत्रस्थया गम्यम् बोध्यम् ब्रूते भाष्यकृत्। एवं च अतः निरुक्ताद्
20 भाष्यकृत्प्रयोगात् इदं लक्षणम् जगज्जन्मादिकारणत्वरूपम् जगदीशैकनियतम् स्वरूपात्म जगदीशस्वरूपात्मकम् परपक्षेण वृत्तिकृन्मतेन स्फुटतरं भाष्यकृतोक्तं भवति, ननु स्वमतेन; स्वमतेऽखण्डार्थतटस्थलक्षणस्यैव "यतो वा इमानि"[1]ति वाक्ये विवक्षितत्वात्। इति दिक् ॥३३॥

[202b] विकारोऽस्तित्वादिस्त्रिषु विशति जन्मादिषु पुन-
25 र्यथायोगं यास्कोदितमखिलभावान्वयि सदा।

परित्यज्यैवैतत्त्रिकमुपहितं सर्वजगतां
निदानं निर्णेतुं निखिलगुणपूर्णं नियमतः ॥३४॥

अथ अन्येषां भावविकाराणामिति भाष्यस्य या स्क परिपठितानामिति भाष्यस्य च भावं दर्शयति—विकार इति ॥ जायतेऽस्ति वर्धते परिणमतेऽपक्षीयते
5 विनश्यतीत्येवंविधेषु स्थितावस्तित्वम्, जनने परिणामः, विनाशेऽपक्षयश्चान्तर्भूत इति सकललोकव्यवहारादस्तित्वादिस्त्रिविधो विकारो यथायोगं जन्मादिषु त्रिषु विशति। एवं च जन्मादित्रिकग्रहणमिह सङ्गतम्; इतरेषामत्रैवान्तर्भावादिति भावः। या स्के ति ॥ या स्के नोदितं "जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यती"[1]त्युपात्तं जन्मादिकं सकलं सदा सृष्टिकाले
10 स्थितिकाले च सकलभावान्वयिघटपटादिभावसम्बद्धं सद् घटादिकारणपृथिव्यादिगतत्वाद् या स्क मतरीतिभावं लक्षणमिदमतिव्याप्तं भवेदिति वेदितव्यम्। एवं चैतद्दोषभिया एतत् या स्क परिगृहीतजन्मादि परित्यज्य त्रिकम् जन्मस्थितिभङ्गलक्षणं सकलप्रपञ्चगतं निखिलगुणैस्सर्वज्ञत्वादिभिः पूर्णं सर्वजगतां निदानं मूलकारणम् नियमतः अव्यभिचारेण निर्णेतुम् "जन्मा-
15 द्यस्य"[2]ति सूत्र उपहितम निबद्धम्, न या स्क परिगृहीतजन्मादि; तस्य नियमेनेशसम्बद्धत्वाभावात्। इति भावः ॥३४॥

[223a] गृहीतं सूत्रेऽस्मिन्निखिलजगतोऽस्येतिगमकं
पदं यत्तज्जन्मादिकमुभयमीशैकनियतम्।
जगत्सामान्यं चेदिह परिगृहीतं नहि भवे-
20 न्मतद्वन्द्वेऽप्येतद् न खलु जगदीशात्मनिरतम् ॥३५॥

अथैतद्भाष्ये सन्दर्भविसंष्ठुलतां दर्शयति—गृहीतमिति ॥ भाष्ये लोकशास्त्रप्रसिद्धेतरभावविकारगर्भकजन्मादित्रिकमस्मिन् सूत्रे गृह्यते चेद् निरङ्कुशविचित्रनिखिलप्रपञ्चजन्मादिहेतुत्वमभिन्ननिमित्तोपादानत्वलक्षणं ब्रह्मणः सर्वज्ञस्य लक्षणमतिव्याप्त्यादिदोषरहितं भवितुमर्हति। सूत्रेऽस्मिन् जन्मादि-
25 पदेन या स्क परिपठितानां "जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्य-

त्या"[1]दिविकाराणां परिग्रहे या स्कोक्तजन्मादिहेतुत्वं स्थितिकालवर्ति-
घटादिजन्मादिहेतुमृदादिष्वतिव्याप्तमिति तल्लक्षणं भवितुं नार्हतीत्युक्तम्,
तदयुक्तम्; अस्मिन् सूत्रे "जन्माद्यस्य"[2]इत्यत्र निखिलजगतो गमकं पदमस्येति यत
यस्मात् कारणाद् गृहीतम्, तत् तस्मात् कारणाद् निखिलजगन्निष्ठं लोक-
5 प्रसिद्धपूर्वोक्तजन्मादित्रिकं या स्क परिपठितजन्मादिकं चोभयमपि ईशैकनियतम्
ईशमात्रगतं द्विविधमपि लक्षणं नातिव्याप्तम्; प्रपञ्चसामान्यनिष्ठ-
जन्मादिनिरूपितकर्तृलक्षणनिमित्ताभिन्नोपादानत्वस्य ब्रह्मातिरिक्ते क्वाप्य-
सम्भवात्। जन्मादिसूत्रेऽस्येति पदेन जगत्सामान्यं न परिगृहीतं चेद् भवेत्, तर्हि
जगत्सामान्यपरिग्रहाभावाद् यत्किञ्चिज्जन्यपदार्थस्यैव परिग्रहाद् मतद्वन्द्वेऽपि
10 या स्क मततदितरमतद्वयेऽपि एतद् द्विविधमपि जन्मादित्रिकम् जन्मादि-
षट्कं च यत्किञ्चिज्जगद्धेतुषु घटादिकारणेष्वपि पर्यवसानेन जगदीशात्मनिरतम्
परमात्मनियतं न भवेदेव; अन्यत्रापि सम्भवात्। तस्माद् भाष्यमिदं
परस्परविरुद्धम्। इति भावः ॥३५॥

[223b]　　विशेषादन्येषामविकृतपदालिप्रकटिता-
15　　पविद्धन्यायार्थप्रवणपदवीबन्धुरगतिम्।
　　अशेषैतद्दोषं परिमुषितदोषं गमयितुं
　　यतीन्द्राणामिन्द्रो विवृतिमपतन्द्रोऽन्वकुरुत ॥३६॥

अथाचार्यैरग्रे जन्मादिसूत्रं श्रुतिव्याख्यापरमिति वर्णकान्तरस्य दोष-
विनिर्मुक्तस्य वक्ष्यमाणत्वात् प्रथमं सूत्रमिदं केवललक्षणपरं भवतीति योजन-
20 परं भाष्य मु प व र्णा दि वृत्तिकारकृतयोजनानुकरणपरम्। तच्च योजन-
मेतत्सूत्रस्य न ग्राह्यमिति सूचयितुं दोषोऽयं परमत आचार्यसम्मत एवेत्याह
—विशेषादिति ॥ अपतन्द्रः दोषोद्भावनस्यावश्यकत्वात् परमतानुवादेऽपग-
तालस्यः यतीन्द्राणामिन्द्रः देशिकवर्यः विशेषाद् विशेषेण अविकृतपदालि-
प्रकटितापविद्धन्यायार्थप्रवणपदवीबन्धुरगतिमन्येषां विवृतिम् परमतानुवादे पदपङ्क्ति-
25 रपि न विकृता प्रकृतभाष्ये पठिता। यथा वृत्तिकृतां लेखनपङ्क्तिः, तथैव
सा पङ्क्तिरिह पठिता। तेनाविकृता पदावलिरिह भवति। तयाऽविकृत-

पदाल्या प्रकटिता प्रकाशिता अपविद्धन्यायार्थप्रवणपदवीबन्धुरगतिः अपविद्धाः प्रतिहता न्यायाः नया येषु ते च तेऽर्थाश्च, ईदृशार्थेषु प्रवणा प्रवृत्ता या पदवी पद्धतिः, तस्यां बन्धुरा उन्नतानता विषमा गतिर्यस्याः सा, ताम्। अविकृतपदावलिप्रकाशितपरिहृतन्यायार्थानतमार्गविसंष्ठुलगमनामन्येषा मु प-
5 व षै प्रभृतिवृत्तिकृतां विवृतिम् जन्मादिसूत्रस्य व्याख्याम्। परिमुषितदोषम् परिहृतदोषं विदोषम्। अशेषैतद्दोषम् अशेषः शेषरहितः, उपपादनशेषरहितः सर्वांशेनाप्युपपादितः। एष पूर्वश्लोकोक्तो यो दोषः, तं दोषं समाधानरहितत्वात् समाधानलक्षणदोषरहितमुक्तदोषम्। गमयितुम् ज्ञापयितुमेव। अन्वकरोत् अनुकरोति स्म। दोषमुक्तं ज्ञापयितुमेव वृत्तिकार-
10 कृतजन्मादिसूत्रव्याख्याऽविकृता पठिता। एवं च विसंष्ठुलवृत्तिग्रन्थलेखनं दोषोद्भावनायैव देशिकेन्द्रसम्मतमिति प्रस्तुतदोषो भाष्यकृदनुमत एव, न स परिहर्तुं शक्यः। इति भावः ॥३६॥

[224a] प्रपञ्चोऽयं चित्रो न भवति विनेशं प्रकृतितो
नवाणुभ्योऽज्ञत्वाद् न पुनरसतः सत्त्वकलनात्।
15 अनीशत्वाज्जीवादपि न हि घटेतैव न पुन-
स्स्वभावाद्धेतूनां विविधवपुषामाकलनतः ॥३७॥

अथ न यथोक्तेत्यादिभाष्यतात्पर्यं दर्शयति—प्रपञ्च इति॥ चित्रः अनेककर्तृभोक्तृसमेतो व्यवस्थितदेशकालनिमित्तक्रियाफलाश्रयो मनसाऽप्यचिन्त्यरचनः प्रपञ्चोऽयं परिदृश्यमान ईशं विना प्रकृतितः प्रधानादचेतनाद् भवितुं
20 नार्हति, नवाऽणुभ्यः परमाणुभ्योऽपि भवितुमर्हति ; अज्ञत्वादेव प्रकृतिवत् परमाणूनाम्। चेतनस्यैव सर्वज्ञस्य सर्वशक्तेर्व्यवस्थितविचित्रानन्तपदार्थहेतुत्वौचित्यात्, प्रकृत्यादेरचेतनस्येदृशानुसन्धानाभावेन व्यवस्थया विचित्रप्रपञ्चकर्तृत्वासम्भवात्। असतः शून्यादपि प्रपञ्चो भवितुं नार्हति ; प्रपञ्चस्य सत्त्वेन प्रतीयमानस्यासत उत्पत्त्ययोगात्, "कथमसतः सद् जायेत"[1]ति
25 श्रुतेः। जीवादपि प्रपञ्चो न घटेतैव ; जीवस्यानीशतया विचित्रप्रपञ्चजननानुकूलसामर्थ्याभावात्। एवं स्वभावादपि प्रपञ्चजनिर्न भवेदेव ; देशकाल-

निमित्तादिहेतूनां विविधवपुष्मतां आकलनतः परिग्रहात्। तस्मादीशादेव प्रपञ्चजननमुचितम्। इति भावः ॥३७॥

[224b]　प्रशस्तं लक्ष्मेदं तदवयवजन्मादि हि दृढा-
नुमानं क्षित्यदौ क ण भु ग यने कर्तृविधये।
5　न लक्ष्मार्थं सूत्रं भवति हि परार्थानुमितिकृ-
न्न सूत्राणामेषां श्रुतिशिखरचर्चात्मकतया ॥३८॥

अथैतदेवेति भाष्यस्य नन्वित्यादिपूर्वपक्षसिद्धान्तभाष्ययोश्च तात्पर्यं सङ्ग्रहेण दर्शयति—प्रशस्तमिति ॥ इदं लक्ष्म जगज्जन्मादिहेतुत्वलक्षणं लक्षणं प्रशस्तं भवति। कुतः। हि यस्मात् कारणात् क ण भु ग य ने क णा दा द्दतमार्गे 10 क्षित्यादौ कर्तृविधये कर्तृविधानाय कर्तारं साधयितुं तदवयवजन्मादि तस्य लक्षणस्य जन्मादिकारणत्वस्य घटकतयाऽवयवभूतं जन्मादि दृढानुमानम् हेतुः; दृढदोषरहितो भवति। अन्यत्र लक्षणावयवस्य धर्म्यनुमापकत्वं नास्ति। प्रकृते क्षित्यादिकं सकर्तृकं जन्मादिमत्त्वात्, कुलालनिर्मितघटवत्। एवं चोपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वे सिद्धेऽनन्तक्षित्याद्युपादान- 15 गोचरज्ञानादिमान् सर्वज्ञ [225a] ईशः सिद्ध्यतीत्येवम्प्रकारेण लक्षणमिद-मतिप्रशस्तम्। इति भावः। नेति। सूत्रम् "जन्माद्यस्य"[1]त्येतल्लक्षणम् लक्ष्मार्थम् लक्षणार्थकम् पूर्वोक्तरीत्या न भवत्येव। कुतः। हि यस्मादिदं सूत्रं परार्थानुमितिकृत् परार्थानुमितिं करोति, ततः परार्थानुमानमेव जन्मादि-सूत्रम्। अस्य क्षित्यादेर्जन्म यतो भवतीत्युक्ते क्षित्यादिकं सकर्तृक 20 जन्मादेरित्यनुमानमेव सञ्जातमिति भावः। एतेन नन्विहापि तदेवानुमानमुप-न्यस्तमित्यादिभाष्यभावः प्रकाशितः। सिद्धान्तभाष्यभावं सङ्ग्रहेण दर्शयति —नेति ॥ जन्मादिसूत्रं नानुमानपरम्; चतुरध्यायीसूत्राणां सर्वेषामप्येषां श्रुतिशिखरचर्चारूपत्वात्। ननु द्वितीयाध्याये तर्कचरणेऽन्यत्रापि श्रुति-संस्पर्शमन्तरेव विचारात्मकानि सूत्राणि सन्तीति सूत्रत्वावच्छेदेन श्रुत्यर्थ- 25 विचारात्मकता नेति—चेत्, न; साक्षाद्वा परम्परया वा सर्वेषां सूत्राणां श्रुत्यर्थविचारात्मकत्वात्। तर्कचरणादेपि श्रुतिविचारपरत्वं घटत इति तर्क-

चरणादावेवोपपादयिष्यामः । प्रकृतसूत्रेऽपि सूत्रपदविचारावसरे श्रुतिव्याख्यापरता सिद्धान्तितैवेति विवेचनीयम् ॥३८॥

[225b] अमीषां सूत्राणामुपनिषदुपायत्वनियमा-
त्स्वतन्त्रं सूत्रं नो किमपि भवतीत्येव गमितम् ।
5 अतः स्वातन्त्र्येण प्रथमपठितं सूत्रयुगलं
प्रतिज्ञालक्ष्माद्यर्थमिति घटनाऽनार्यघटिता ॥३९॥

अथ वेदान्तवाक्यग्रथनार्थत्वात् सूत्राणामित्यादेर्नानुमानादिप्रमाणान्तरनिर्वृत्तेत्यन्तस्य भाष्यस्य तात्पर्यं विशदयति—अमीषामिति ॥ अमीषां सूत्राणाम् चतुरध्यायीगतसूत्राणां सर्वेषामपि उपनिषदुपायत्वनियमात् उपनिषदपेक्षितन्यायसमर्पक-
10 त्वव्याप्तेः—यद्यच्चतुरध्यायीसूत्रं तत् सर्वं साक्षाद्वा परम्परया वोपनिषपेक्षितन्यायपरमिति व्याप्तेः । चतुरध्याय्यां श्रुतिनिरपेक्षतया स्वतन्त्रं सूत्रं किमपि नो भवति, किन्तु श्रुतिसापेक्षमेवेति प्रकृतभाष्येण ज्ञापितं भवति । अतः हेतोः प्रथमपठितं सूत्रयुगलम् "अथातः"[1] "जन्मादी"[2]ति सूत्रद्वन्द्वं ब्रह्मविचार आरभ्यते, ब्रह्मजिज्ञासा साधनसम्पत्तौ स्वतो भवति, साधनसम्पत्तौ
15 ब्रह्मजिज्ञासा कर्तव्येति, जगज्जन्मादिकारणत्वं ब्रह्मलक्षणम्, क्षित्यादिकं सकर्तृकम् जन्मादिमत्त्वादित्याद्यर्थकमिति घटना सूत्रयोजना नाचार्यघटिता, किन्तु वृत्तिकारघटिता । अनार्यैः वाक्यमर्यादानभिज्ञवृत्तिकारैर्घटितेति योजना । तथाच जन्मादिसूत्रं श्रुतिव्याख्यारूपम्, न स्वतन्त्रम् । इति भावः ॥३९॥

[226a] विशुद्धब्रह्मात्मावगमकतया यद्यदुचित-
20 म्भवेत्तत्तत्सूत्रं श्रुतिविवृतिभावं समयते ।
यतः सा तद्वित्तिः श्रुतिशिखरवागेकनियते-
त्यभिप्रायाद् वाक्यप्रभृतिवचनं साधुरचनम् ॥४०॥

[226b]अथ जन्मादिसूत्रमनुमानपरं न भवति, किन्तु वेदान्तवाक्यग्रथनार्थम् ; चतुरध्याय्यन्तर्गतसूत्रत्वात्, यद्यच्चतुरध्यायीसूत्रम्, तत्तद् वेदान्त-

वाक्यग्रथनरूपम् ; यथेक्षत्यादिसूत्राणीति मानेऽमानलक्षणे न ; वेदान्तवाक्य-
ग्रथनार्थत्वात् सूत्राणामिति भाष्येण प्रवर्तिते चतुरध्यायीगतं किञ्चित् सूत्रं
वेदान्तवाक्यग्रथनानात्मकमपि भवतु, तथाच निरुक्तव्याप्तेस्तत्र व्यभिचारः
स्यादिति शङ्कायां वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्त इति भाष्येण
5 सूत्रत्वावच्छेदेन वेदान्तवाक्यविचारो नियतः प्रसिद्ध एवेत्यर्थकेन निवारितायां
सर्वसूत्राणां वेदान्तवाक्यविचारपरतानैयत्यं कुत इत्याशङ्कायां तदाशङ्का-
निवृत्तये वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिरिति भाष्यं प्रवर्तितम्
हि यस्मात् कारणाद् ब्रह्मावगतिश्चतुरध्यायीसूत्रत्वावच्छिन्नसूत्रसामान्य-
जन्या, ब्रह्मावगतिर्वेदान्तवाक्यार्थविचारणाध्यवसाननिर्वृत्ता भवति, तस्मात्
10 सर्वाणि सूत्राणि वेदान्तवाक्यग्रथनार्थानीत्यर्थे पर्यवसन्नम्। चतुरध्यायी-
गतसूत्रत्वावच्छेदेन ब्रह्मावगतिसाधनत्वे सति ब्रह्मावगतिसाधनताया वेदान्त-
वाक्यार्थविचारणायां सत्यामेव सिद्धिर्भवति। तथाच चतुरध्यायीसूत्रत्वं
व्याप्यम्, ब्रह्मावगतिसाधनत्वं व्यापकम्, ब्रह्मावगतिसाधनत्वस्य व्यापकं
वेदान्तवाक्यार्थविचारणापरत्वम्, वेदान्तवाक्यार्थविचारणाध्यवसानपरत्वस्य
15 व्यापकं वेदान्तवाक्यग्रथनार्थत्वमिति व्याप्यव्यापकधारायां चतुरध्यायी–
सूत्रत्वमन्तिमं व्याप्यं साधनतालक्षणसम्बन्धेन ब्रह्मावगतिरन्तिमं व्यापकमिति
सिद्धम्। तत्र सर्वेषामपि सूत्राणां शुद्धब्रह्मावगतिपरत्वं बाधितम्, पञ्चाग्नि-
विद्योपासनापरविद्यापरसूत्रेषु शुद्धब्रह्मपरत्वाभावादिति भाष्यासाङ्गत्यं परि-
हरति—विशुद्धेति ॥ वाक्यार्थेत्यादिभाष्यं न पूर्ववाक्यार्थे हेतुपरम्, किन्तु
20 जन्मादिसूत्रस्यानुमानपरत्वाभावे वेदान्तेत्यादिवाक्यवत् स्वतन्त्रहेतुपरम्।
तत्र जन्मादिसूत्रं वेदान्तग्रथनपरम् ; चतुरध्यायीसूत्रत्वादिति हेतुः प्रथमः।
ब्रह्मावगतिहेतुचतुरध्यायीसूत्रत्वादिति द्वितीयो हेतुः। प्रथमो हेतुर्वेदान्त-
वाक्येति सव्याप्तिग्रहः प्रथममुक्तः। द्वितीयो हेतुस्तु वाक्यार्थविचारणेति-
वाक्येन यद्यद् ब्रह्मावगतिहेतुभूतं चतुरध्यायीसूत्रम्, तत्तद्वेदान्तवाक्यग्रथन-
25 रूपमिति व्याप्तिसूचनपूर्वकं निरूपितः। एवं च विशुद्धब्रह्मात्मनोऽखण्डस्य
निर्गुणतत्पदार्थस्य शोधितत्वम्पदार्थस्य वा गमकतया प्रतिपादकतया यद्यत्
सूत्रं चतुरध्यायीगतम्, तत्तत् सूत्रं श्रुतिविवृतिभावम् श्रुतिविवरणत्वं समयते
सम्यक् प्राप्नोति। यतः यस्मात् कारणात् सा तद्वित्तिः निरुक्ता शुद्ध-
ब्रह्मात्मादिविज्ञानम् श्रुतिशिखरवागेकनियता वेदान्तवाक्यमात्राधीनैव भवति

इत्यभिप्रायात् **तात्पर्येण** वाक्यप्रभृतिवचनम् वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हीत्यादिवचनम्। साधुरवचनं **भवति पूर्वोक्तदोषरहितं भवति। अतो भाष्यमिदमतिगभीरत्वाद् विसंष्ठुलमिव शब्दमर्यादानभिज्ञैरेव विज्ञेयम्। शब्दमर्यादाविदां तु सङ्गतमेवेदं भाष्यम्। इति भावः** ॥४०॥

5 [227a] श्रुते वेदान्तार्थे भवतु सहकारी दृढतर-
प्रमित्यै तर्कोऽपि श्रुतिपरिगृहीतोऽनुनयतः।
स्वतस्सिद्धार्थत्वादनुभवसरण्युद्भटतया
स्वविद्याविध्वस्तातनुवृतिमयाविद्यकतया ॥४१॥

**अथ जन्मादिसूत्रस्यानुमानपरत्वं नेत्याग्रहेण कथनात् किमखण्डब्रह्मात्म-**
10 **ज्ञानेऽनुमानं नापेक्षितमेवेत्याशङ्कापरिहारपरम् स्वतन्त्रानुमानन्त्वपरिग्राह्यम्, श्रुत्यपेक्षितमनुमानन्तु परिग्राह्यमेव; श्रुत्यैव स्वानुकूलतर्कस्यानुमतत्वा-दित्यर्थकं** सत्सु च वेदान्तवाक्येष्वित्यादि**भाष्यम्** भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्येत्यन्तं **तात्पर्यतः सङ्ग्रहेण विवृणोति**—श्रुत इति ॥ श्रुतिपरिगृहीतस्तर्कोऽपि **अनुमान-मपि**—"श्रोतव्यो मन्तव्यः"[1] "पण्डितो मेधावी"[2]**त्यादिश्रुतिसम्मतम्** अनुनयतः
15 **अनुनयेन श्रुतेरनुरञ्जनेन।** श्रुते वेदान्तार्थे**ऽखण्डब्रह्मात्माद्यर्थे** दृढतरप्रमित्यै **पकसाक्षात्काराय** सहकारी **सहकारिकारणं** भवतु; **श्रुताखण्डब्रह्मात्मादेः स्वतः सिद्धार्थत्वेन तत्र मानान्तरप्रवृत्तिसम्भवात्। किञ्च** अनुभवसरण्युद्भटतया **अनुभवपथ एव स्पष्टं प्रकाशमानत्वात्। अपिच** स्वविद्याविध्वस्तातनुवृतिमया-विद्यकतया **अविद्यैवाविद्यका, अतनुवृतिमयी महत्तरावरणरूपा, सा चासाव-**
20 **विद्यका च, तथा स्वविद्याविध्वस्ता स्वम् अखण्डब्रह्मात्मा, तस्य विद्या अप्रतिहतसाक्षात्कारः, तया ध्वस्ता निवृत्ता अतनुवृतिमयाविद्यका यस्या-खण्डस्य स तथा, तस्य भावस्तत्ता, तया। आविद्यकतयेति पाठे स्वविद्या-विध्वस्ता अतनुवृतिमयाविद्या यस्य, समासान्तः कप्, स तथा, तत्तया तत्त्वादित्यर्थः। आत्मसाक्षात्कारस्यैवाविद्यानिवर्तकत्वात् साक्षात्कारस्य**
25 **चानुभवपूर्वकत्वात् सिद्धार्थभूतेऽखण्डार्थे तस्मिन्ननुमानप्रवृत्तिरुचिता। इति भावः** ॥४१॥

[227b] न धर्मः श्रुत्यर्थोऽप्यनुभवमपेक्षेत यदयं
क्रुतेः साध्योऽसिद्धो विविधपुरुषाधीनतनुमान् ।
अलोके लोके वा सकलमपि साध्यं मतिभवं
विकल्पोत्सर्गादेरपि भवति भूमिः परतरा ॥४२॥

5 **अथ** कर्तव्ये हीत्या**दिभाष्यस्य साध्यार्थपरस्य** विकल्पोत्सर्गापवादाश्चेत्य**न्तस्य पूर्वापरग्रन्थानुसारेण सङ्ग्रहेण तात्पर्यं दर्शयति**—न धर्म इति ॥ श्रुत्यर्थोऽपि धर्मः **स्वोत्पत्तये स्वफलोत्पत्तये वा**ऽनुभवं नापेक्षेतैव । **कुतः** । यत् **यस्मात् कारणाद्** अयं **धर्मः** कृतेः साध्यः **सन्** विविधपुरुषाधीनतनुमान् **विविधाः नाना-विधाः पुरुषाधीनास्तनवः साङ्गनिरङ्गाधिकाङ्गादिभेदभिन्नास्तनवः, तद्वान् सन्**
10 असिद्धो **भवति** । अलोके **वेदस्मृत्यादिप्रतिपादितधर्माधर्मादिमार्गे** लोके **कृष्यादिमार्गे** वा सकलं साध्यं मतिभवम् **पुरुषबुद्ध्या नानाविधया जन्यम्** । **अत एव** विकल्पोत्सर्गादेः **आदिपदेनापवादस्य च** परतरा भूमि**र्विषयो** भवति । **इत्यर्थः** । **षोडशिग्रहणाग्रहणोदितहोमानुदितहोमव्रीहियवादीनां विकल्पः** । "न हिंस्यादि"[1]**त्युत्सर्गः** "अग्नीषोमीयं पशुमालभेते"[2]**त्यपवादः** । **इतरद् भाष्य**
15 **एव स्पष्टम्** ॥४२॥

[228a] प्रमा वस्त्वायत्तेतरकमतिवैलक्ष्यभरिता
समस्ताऽपि ब्रह्मप्रमितिरथ वस्त्वेकघटिता ।
अविद्यासर्वस्वप्रहरणपटीयःप्रकृतिभाक्
स्वतःसिद्धे वस्तुन्यखिलमपि मानं विजयते ॥४३॥

20 **अथ** वस्त्वेवम् नैवमित्या**दिभाष्यस्य** भूतविषयत्वादित्य**न्तस्य सिद्धे विकल्पो न भवति, साध्य एव बुद्धिप्रभवो विकल्पः, वस्त्वधीनं ज्ञानमेव प्रमा, न बुद्ध्यधीनज्ञानमित्यर्थकस्य सङ्ग्रहेण भावं दर्शयति**—प्रमेति ॥ समस्ताऽपि प्रमा वस्त्वायत्ता **वस्त्वधीना** । इतरकमतिवैलक्ष्यभरिता **इतरकमतिः प्रमाभिन्न-मतिः संशयविपर्ययतर्कमतिः, तद्वैलक्षण्यम्, तेन भरिता सम्भृता भवति** ।

प्रमा संशयादिभिन्नस्वरूपेति यावत्। अथ विशेषः कश्चिदुच्यते—वस्त्वेकघटिता वस्तुमात्रतन्त्रा ब्रह्मप्रमितिरप्यविद्यासर्वस्वप्रहरणपटीयःप्रकृतिभाक् अविद्यायाः सर्वस्वम् आत्मस्वरूपावरणमविद्यास्वरूपं च, तत्प्रहरणे विनाशे पटीयसी या प्रकृतिः, तद्भाक् तद्भजमाना भवति। स्वतःसिद्धे साध्यविलक्षणे
5 वस्तुनि सकलमपि मानमनुमानादिकं विजयते विशेषेण स्वकार्यकार्येव भवति। एवं चाखण्डब्रह्मवस्तुनः स्वतःसिद्धत्वेनाविद्यानिवर्तनक्षमब्रह्मप्रमासम्पत्तये श्रुत्यनुकूलमनुमानं परिग्राह्यमेवेति वर्तुलार्थः। वस्तुनि न विकल्पः, बुद्ध्यायत्तो विकल्पः स्थाणुः पुरुषो वेति। तच्च ज्ञानं मिथ्याभूतम्। वस्तुतन्त्रमेव ज्ञानं प्रमा। ब्रह्मज्ञानमपि वस्तुतन्त्रं प्रमैव।
10 तदर्थं श्रुत्यनुमानप्रवृत्तिर्घटते। इति भाष्यभावः ॥४३॥

[228b] स्वतःसिद्धोऽर्थश्चेच् श्रुतिवदनुमाऽपि प्रसरतां
स्वतन्त्रैवात्रातः श्रुतिनियमचर्चैव विफला।
हृषीकासम्बन्धादविषयतया व्याप्त्यकलना-
द्विशिष्यैतत्कार्यात् प्रकृतमनुमेयं कथमिव ॥४४॥

15 अथ ननु भूतवस्तुत्व इत्यादिके शक्यं निश्चेतुमित्यन्ते पूर्वपक्षसिद्धान्तात्मके पूर्वपक्षं सङ्ग्रहेण व्याकुर्वन् सिद्धान्तभाष्यं द्वेधा विवृणोति श्लोकाभ्याम्—स्वतः सिद्ध इति ॥ चिदानन्द इति च ॥ अखण्डब्रह्मलक्षणोऽर्थः स्वतःसिद्धश्चेदखण्डेऽर्थेऽनुमापि स्वतन्त्रैव सती श्रुतिनिरपेक्षैव सती श्रुतिवदेव प्रसरताम् प्रवर्तताम्। एवं च अतः अनुमानप्रवृत्तिसत्त्वात् श्रुतिनियमचर्चा श्रुत्यैवाखण्डार्थो
20 विज्ञेयः, नेतरेणेति नियमस्य चर्चा विचारणा विफलैव निरर्थिकैव; अनुमयाऽप्यखण्डार्थनिर्णयसम्भवादिति पूर्वपक्षः। ब्रह्मणो भूतवस्तुत्वाद् मानान्तरविषयत्वसम्भवात् श्रुत्यैवाखण्डो ज्ञेय इति नियमोऽनर्थक इति नन्वित्यादिपूर्वपक्षभाष्यभावः। नेत्यादिसिद्धान्तभाष्यभावं श्लोकोत्तरार्धेन विवृणोति—हृषीकेति ॥ क्षित्यादिकम्, सकारणकम्; कार्यत्वात्, घट-
25 वदित्यनुमानात् कारणं किञ्चिदस्ति घटस्य मृद्वदिति कारणेऽनुमितेऽपि ब्रह्मैव क्षित्यादिप्रपञ्चकारणमिति विशिष्य ब्रह्मानुमानं कथं भवेत्। ब्रह्मणो-

विषयत्वेन हृषीकासम्बन्धात्। इन्द्रियसम्बन्धस्य विषयमात्रगत[229a]त्वेन ब्रह्मणि वक्तुमशक्यत्वेन ब्रह्मलक्षणकारणसम्बद्धं क्षित्यादिलक्षणं कार्यमिति विशिष्य व्याप्तिग्रहाभावात्। यद्यत् कार्यम्, तत्तत् सकारणकमिति सामान्यव्याप्त्या कारणसामान्यानुमानसम्भवेऽपि एतत्कार्यात् क्षित्यादिलक्षणात् प्रकृतं ब्रह्म कथमिव विशिष्यानुमेयं भवेत्। इत्यर्थः। ब्रह्मण इन्द्रियविषयत्वे ब्रह्मणा सम्बद्धमिदं कार्यमिति व्याप्तिग्रहात् कार्याद् विशिष्य ब्रह्मणोऽनुमानं भवेदपि। ब्रह्मण इन्द्रियाविषयत्वाद् इन्द्रियाणां विषयेष्वेव सम्बन्धाद् ब्रह्मणि सम्बन्धाभावेन नियतसम्बन्धरूपव्याप्त्यग्रहाद् विशिष्य कार्याद् ब्रह्मानुमानं दुर्घटमेव। अतः श्रुत्यैव ब्रह्मनिर्णय उचितः। इति सिद्धान्तभाष्य-भावः। इतरत् सुगमम् ॥४४॥

[229b] चिदानन्दोऽखण्डस्त्रिविधपरिभेदैरकलितः
समुत्थो जीवेशोभयलसदभेदात्मकतया।
परस्मिन् निर्वाणे श्रुतकरणबोधैकविषयोऽ-
नुमानाद्विज्ञेयः कथमधिगतव्याप्तिविरहात् ॥४५॥

ननु—इदमनुपपन्नम्; क्षित्यादिकम्, सकर्तृकम्, कार्यत्वात्, घटवदित्य-नुमानेन प्रधानाण्वादिविलक्षणं ब्रह्मानेन पृथिव्यादिलक्षणकार्येण विशिष्यानु-मातुं शक्यमेव। तथाहि:—तत्कार्यं प्रति कर्तृत्वं तत्कार्योपादानगोचरा-परोक्षज्ञानचिकीर्षाकृतिमत्त्वं घटकर्तरि कुलाले दृष्टमिति क्षित्यादिकार्येऽपि कर्ता क्षित्याद्यखिलकार्योपादानगोचरचिकीर्षाकृतिमानन्योऽसम्भवीति पक्ष धर्मतापरिशेषानुमानबलादीश्वर एव प्रधानादिविलक्षणः कर्ता विशिष्यानु-मानेन सिद्ध्यतीति प्रागुक्तसमाधानं भाष्ययोजनं चायुक्तमिति प्रकारान्तरेण भाष्यभावं दर्शयन् पूर्वपक्षं निराकरोति– चिदानन्द इति॥ सिद्धान्तभाष्ये नेत्यादौ ब्रह्मपदं श्रूयमाणं न जगत्कारणीभूतविशिष्टब्रह्मपरम्; शुद्धाखण्डार्थ-ज्ञानस्यैवाविद्यानिवर्तकत्वेन सूत्रस्याप्यस्याखण्डार्थपरताया एव सिद्धान्ते विवक्षितत्वेन कारणब्रह्मदृशा जगत्कारणस्य स्वरूपलक्षणस्य तटस्थलक्षण-त्वव्यपदेशेनेहाखण्डार्थपरिग्रहस्यैवाचार्यसम्मतत्वात्। अतोऽखण्डार्थपरमेव

सर्वं ब्रह्मपदम्। एवं च क्षित्यादिकार्यात् सर्वज्ञत्वादिशिष्टकर्तुघटादौ सामान्यव्याप्तिग्रहेण पक्षधर्मताबलाद् विशिष्यानुमानासम्भवेऽपि विशिष्टब्रह्मज्ञानस्याविद्यानिवर्तकत्वाभावाद् अखण्डज्ञानस्यैवाविद्यानिवर्तकत्वात् तदखण्डनिश्चयस्यानुमानात् सम्पादयितुमशक्यत्वात् श्रुतिं विना नानुमानमादरणीयम्। तथाहि :—नानुमानपक्षो घटते ; अखण्डस्येन्द्रियाविषयत्वे सति नियतसम्बन्धलक्षणव्याप्तिग्रहाभावात्। इन्द्रियाणि प्रकृत्या विषयग्राहकाणि नाखण्डस्य ब्रह्मणो ग्रहणसमर्थानि भवन्ति। यदि ग्रहणसमर्थानि, तर्ह्यखण्डब्रह्मण इदं तटस्थविधया कार्यं भवति, अखण्डब्रह्मणा तटस्थरीत्या सम्बद्धमिति कार्यमिदं गृह्येतापि। कारणमात्रसम्बद्धं कर्तृमात्रसम्बद्धं कार्यमिति वा पृथिव्यादि के[230a]वलं कार्यमिति वा ग्रहणं भवति। एवं च कार्यमिदं किमखण्डब्रह्मणा सम्बद्धं तटस्थविधया किंवा स्वरूपविधया विशिष्टब्रह्मणा सम्बद्धमिति निश्चेतुमशक्यमेव। निश्चयात्मकमेव ज्ञानमखण्डावगाह्यविद्यानिवर्तकं तादृशानुमानाद् न भवति। इति सिद्धान्तभाष्याशयः। अयमेव भाष्यार्थः श्लोकेन सङ्गृहीतः। तथाहि—चिदानन्दः ज्ञानात्मानन्दः त्रिविधपरिभेदैः त्रिविधपरिच्छेदैः कालदेशवस्तुकृतैः अकलितः अस्पृष्टः एवाखण्डो जीवेशोभयलसदात्मकतया समुत्थः जीवेशोभयस्मिन् लसन् योऽभेदः, "तत्त्वमसि"[1] "अहं ब्रह्मास्मी"[2]तिवाक्यसमधिगतः, तदात्मतया तद्रूपतया समुत्थः प्रादुर्भूतः परस्मिन् निर्वाणे मुख्यमुक्तौ श्रुतकरणबोधैकविषयः "नान्यः पन्था विद्यतेऽयनाय"[3] "नान्यः पन्था विमुक्तये"[4] "याति नान्येन हेतुने"[5]ति श्रुतं यत् करणम्, तद्रूपो यो बोधः, तद्बोधमात्रविषयः। ईदृशोऽर्थः कथमनुमानाद् विज्ञेयो भवेत् ; क्षित्यादिकार्येण सह तटस्थविधया शुद्धाखण्डेन च सह सामान्यविधयाऽपि ज्ञातव्याप्तेरभावात्। तथाच व्याप्तिज्ञानाभावाद् नानुमानं श्रुतिं विना निर्णायकम्। इति श्लोकभावः ॥४५॥

[230b] अधीहीत्यारब्धा यत इति च मध्ये विनिहिता
विनिर्णीत्यै प्रान्ते सरसलसदानन्दवचना।
श्रुतिर्ह्यस्मिन् सूत्रे विषय इति विस्पष्टविधया
विनिर्दिष्टं पुष्टं नयचयनिविष्टं गुरुवरैः ॥४६॥

**अथ** तस्माद् जन्मादिसूत्रं नानुमानपरम्। किन्तर्हि। वेदान्तवाक्यप्रदर्शनार्थमिति **पूर्वोक्तानुमानपरत्वनिषेधोपसंहारपूर्वकं वेदान्तवाक्यग्रथनार्थत्वं जन्मादि-सूत्रस्योपक्षिप्य प्रवर्तितं** किं पुनस्तद्वेदान्तवाक्यमित्यादि भाष्यं **प्रश्नप्रतिवचनात्मकं** संविशन्तीत्यन्तं **सङ्गृह्य तात्पर्यांशेन विवृणोति**—अधीहीतीति॥ अधीहीत्यारब्धा "भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेती"[1]**त्याधीहि-पदघटितवाक्येन समारब्धा** "तस्मा एतत् प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिती"[2]**ति प्रथमोत्तरयुता तदनन्तरं** "तं होवाचे"[3]**त्यावतार्य** "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्मेती"[4]**ति** मध्ये निहिता **स्थापिता पश्चा**"दन्नं ब्रह्मे"[5]-**त्यादिपक्षाणां चतुर्णां निराकरणवाक्यानन्तरं** यत **इति यत्पदस्य संनिहि-तान्नादिपञ्चपर्वग्राहित्वेन सन्दिग्धार्थकत्वादन्नादिचतुष्टयपरिहारेण पञ्चमपर्वण आनन्दस्य परिग्राह्यत्वेन** विनिर्णीत्यै **निर्णयाय** प्रान्ते **समाप्तिभागे** सरसलसदा-नन्दवचना **सरसम् रसेन परमपुरुषार्थेन सहितं तत्प्रतिपादनपरम्, लसत् अक्लिष्टार्थकम्, आनन्दवचनम्** "आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्वि-मानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्तीति। सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"[6]**ति वचनयुक्ता** श्रुतिर्हि **भृगुवल्ली लक्षणा श्रुतिः किल** अस्मिन् "जन्मादी"[7]**त्येवंलक्षणे** सूत्रे विषयः **विषयवाक्यं भवतीति** गुरुवरैः **श्रीशङ्करभगवत्पादैः** पुष्टम् **बह्वर्थगर्भ** नयचयनिविष्टम् **न्यायसमूहेन निविष्टं न्यायनिकरललितं** विस्पष्टविधया **असन्दिग्ध-प्रसारेण** विनिर्दिष्टम् **कथितम्। एवं च जन्मादिसूत्रं श्रुतिव्याख्यापरम्, न त्वनुमानपरमिति भाष्यकृदाशयः। इति भावः**॥४६॥

[231a] अभेदो जीवेशोभयनियतदेहो यदि भवेत्
लय्यन्तोऽयं यत इति हि तर्हि स्फुटतरम्।
वचोभ्यामाबद्धः प्रथमचरमाभ्यां समरसो
नये येषां नैष प्रभवति स तेषां न घटते॥४७॥

**अथाखण्डार्थाभ्युपगन्तृणामेव मते जन्मादिसूत्रविषयवाक्यं सङ्गतार्थम्,**

न तदनभ्युपगन्तृमत इत्याह—अभेद इति ॥ जीवेशोभयनियतदेहः शोधिततत्त्वम्पदार्थसामरस्यरूपोऽभेदोऽखण्डलक्षणो यदि भवेत्, तर्हि "यतो वा इमानि भूतानि जायन्त"[1] इत्यादित्रय्यन्तः प्रथमचरमाभ्यां वचोभ्याम् "अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"[2]ति वचसाऽऽद्येन "अन्नं ब्रह्म"[3] "प्राणो ब्रह्म"[4] "मनो ब्रह्म"[5]
5 "विज्ञानं ब्रह्म"[6] "आनन्दो ब्रह्मे"[7]त्यादिचरमवचसा च स्फुटतरमाबद्धः सन् समरसो भवेत् सम्पन्नस्वारस्यो भवेत्। येषां नये मते—भेदवादिनां मते एषः अभेदो न प्रभवति, तेषां मते स त्रय्यन्तः वेदान्तभागः न घटते सङ्गतार्थो न भवति। इत्यर्थः ।।४७॥

[231b] सूत्रभाष्यकृदनुग्रहपक्षालम्बनादमृतमान्तरमाप्तुम् ।
10 वैनतेय इव पुष्करदेशं जन्मयोगमतरं जलराशिम् ॥४८॥

अथ सूत्रभाष्यकृतावधिकरणान्ते मङ्गलसम्पत्तये तावदनुस्मरन्नधिकरणसमाप्तिं सूचयति—सूत्रेति ॥ वैनतेयोऽमृतं प्राप्तुं पुष्करप्रदेशम् गगनप्रदेशं स्वर्गं प्रति गन्ताऽतरत्, तथा सूत्रभाष्यकृदनुग्रहरूपपक्षबलेन आन्तरम् स्वस्मिन्नेव विद्यमानममृतं प्राप्तुं जलराशिरूपं जन्मादिसूत्रमतरम्। इति
15 गोलार्थः ॥४८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्री स्व य म्प्र का श- स र स्व ती पूज्यपादशिष्य श्री श्री ध रा न न्द स र- स्व ती चरणकमलपरिचर्यापरायण श्री बा ल कृ ष्णा न न्द- स र स्व ती विरचिते श्री म च्छा री र क मी मां सा-
20 भा ष्य वा र्ति के जन्मादिसूत्रं सम्पूर्णम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य श्री स्व य म्प्र का श स र स्व ती पूज्यपादशिष्य श्री श्री ध रा न न्द स र स्व ती चरणकमलपरिचर्यापरायण श्री बा ल कृ ष्णा न न्द स र स्व ती विरचिते श्री म च्छा री र क मी मां सा-भा ष्य वा र्ति क वि व र णे जन्मादिसूत्रम् ॥

[1a] मुनिगणसेवितचरणं मुदितहृदं मुदिरनीलवपुषमहम् ।
सत्यवतीसुतमनिशं संसेवे तदितियोगसंशुद्ध्यै ॥१॥

श्रीम च्छ ङ्क र यतिवरचरणं शरणं ममास्तु करणानाम् ।
तत्त्वितिसूत्रं येन प्रकटिततत्त्वार्थसंशुद्धम् ॥२॥

5 श्री भि क्षु सू त्र नेतृ श्री श ङ्क र यतिपुरन्दरौ नत्वा ।
तत्सूत्रभाष्यवार्तिकविवृतिं करवाणि विबुधसन्तुष्ट्यै ॥

अथ "तत्तु समन्वयादि"ति सूत्रतद्भाष्यभावज्ञानेन निष्प्रत्यूहमधिकरणविवृति-सिद्धये सूत्रभाष्यकृतौ श्लोकाभ्यामनुस्मरति—मुनीति ॥१॥ श्रीमदिति ॥२॥ श्लोकौ सुगमौ ॥२॥

10 ## ॥ तत्तु समन्वयात् ॥ I.1.4.

तत् ब्रह्म शास्त्रप्रमाणकम् । कुतः समन्वयात् सर्ववेदान्तवाक्यानां तात्पर्येण ब्रह्मण्येवान्वयात् । इत्यर्थः । अत्रेदं विचार्यते—"आनन्दमयोऽभ्यासात्"[1] "ज्योतिश्चरणाभिधानादि"[2]त्यादौ सहेतुकप्रतिज्ञायां सिद्धायामेव "विकारशब्दान्नेति चेदि"[3]ति "छन्दोऽभिधानान्नेति चेदि"[4]ति शङ्कातत्परि-
15 हारयोः प्रवर्तनात् "ईक्षतेर्नाशब्दमि"[5]त्यत्र प्रतिज्ञाहेतुनिर्देशमन्तरा पूर्वपक्ष-तत्परिहारप्रवर्तनाद् न्यूनमिदमधिकरणं स्यात् । यदि च "तत्तु समन्वयादि"[6]ति सूत्रं "तदैक्षते"[7]ति छा न्दो [1b] ग्य वाक्यावलम्बेन तत् ब्रह्म समन्वयात् सर्व-कार्येषु प्रकृतित्वेन चान्वयदर्शनात्, "तदैक्षत बहु स्यां प्रजायेये"[8]त्यभिन्न-निमित्तोपादानतायाः प्रकटीकरणादिति प्रधानसूत्रत्वेन योज्यत इति,
20 तर्हि "आनन्दमय"[9] इत्यादौ तुपदाभावेऽपि वाक्यार्थपरिसमाप्तेः, तद्वत् तत् समन्वयादित्येतावतैव परिपूर्तेस्तुपदमधिकमनर्थकं स्यात् । शङ्कावारणाय तुपदमिति चेत् , तत्रोत्तरत्रेक्षतेरित्यादिनैव विशिष्याक्षेपतत्परिहारयोः

प्रवर्तनेन पूर्वं विशिष्याक्षेपस्थले गम्याक्षेपस्थले वा तन्निराकरणतुपदप्रयोगौचित्यात् प्रकृते तदभावात् तुपदमनर्थकमेव भवेत् ॥ अपि च भाष्ये कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यत इति तस्माद् न ब्रह्मणः शास्त्रयोनित्वमिति च ब्रह्मणि शास्त्रप्रमाणकत्वं न सम्भवतीति कथनोत्तरम् "तत्तु समन्वया-
5 दि"[1]ति सूत्रे सिद्धान्तपरे तत्पदस्य पूर्वप्रस्तुतप्रधानपरामर्शकत्वस्वाभाव्याद् भाष्यकृद्भिरपि सूत्रानुरोधेनैव पूर्वपक्षादेर्विरचनीयत्वेन पूर्वं ब्रह्मणः शास्त्रप्रमाणकत्वं न सम्भवतीत्युक्तत्वात् तत्तु शास्त्रप्रमाणकत्वन्तु ब्रह्मणः सम्भवति समन्वयादिति योजने कर्तव्ये सति तत् परिहृत्य तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादवगम्यते। कथम्। समन्व-
10 यादिति विरचनमसङ्गतमेव भवति। किञ्च "शास्त्रयोनित्वादि"[2]ति पूर्वसूत्रे ब्रह्म, सर्वज्ञम्, शास्त्रकर्तृत्वात्, ब्रह्म, जगत्कारणम्, [2a] शास्त्रप्रमाणकत्वादिति वर्णकद्वयप्रस्तावात् तत्र द्वितीयं वर्णकमुपादाय ब्रह्मणः शास्त्रप्रमाणकत्वं नोपपद्यत इत्याक्षेपसङ्गत्या समन्वयसूत्रावतारणात् प्रथमवर्णकरीत्या समन्वयसूत्रानवतारणाद् न्यूनता भाष्ये समवतरति ॥

15 अपिच जन्मादिसूत्रे वेदान्तवाक्यप्रथनार्थत्वात् सूत्राणाम्। वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिरिति भाष्यकारैरेव स्पष्टं कथनात् समन्वयसूत्रान्त एवं च सत्यथातो ब्रह्मजिज्ञासेति शास्त्रारम्भ उपपद्यते। ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति तदर्थो युक्तः शास्त्रारम्भः "अथातो ब्रह्मजिज्ञासे"[3]ति प्रथमसूत्रस्य प्रतिज्ञापरत्वेनोपवर्णनमसङ्गतप्रायं भवति ॥

20 किञ्च समन्वयसूत्रयोजनमसङ्गतमिव ; ब्रह्म, शास्त्रप्रमाणकम्, षड्विधलिङ्गैस्तात्पर्येण शास्त्रगम्यत्वादिति साधने साध्यसाधनयोरविशेषात्। अपिच वेदान्तवाक्यं सर्वमुपासनाविधिशेषं सदेव सप्रयोजनत्वात् प्रमाणम्, नतु केवलज्ञानपरत्वमात्रेण ; सप्तद्वीपेत्यादौ केवलज्ञानेन प्रयोजना दर्शनादित्याक्षेपे, रज्जुरियं न सर्प इति ज्ञानात् सर्पभ्रमनिवृत्तिवदसंसा-
25 रित्वमितिज्ञानात् संसारित्वभ्रान्तिनिवर्तनेन सप्रयोजनत्वं केवलज्ञानस्यापीति सिद्धान्तिकल्पे निरुक्ते, रज्जुसर्पस्थले रज्जुरिति [2b] ज्ञानात् सर्पभ्रमनिवृत्तिः सर्वानुभवसिद्धा, असंसारित्वज्ञानात्तु सहस्रशः सम्पादिताद् न संसारित्वभ्रमो निवर्तते, यथापूर्वं संसारित्वमेवानुभूयत इति पूर्वपक्षिणा सिद्धान्तिकल्पे प्रत्याख्याते, पुनरपि प्रत्याख्यातकल्पस्यावगतब्रह्मात्म-

भावस्य न यथापूर्वं संसारित्वमिति निर्युक्तिककथनमसङ्गतमेव। यदपि धनाद्यभिमानिनस्तदपहारनिमित्तदुःखं दृष्टमिति त्यक्तधनाभिमानस्य तदेव धनाद्यपहारनिमित्तं दुःखं न जायते, तद्वद् देहाद्यभिमानजः संसारो देहाभिमाने गलिते भवितुं नार्हतीति तदपि कथं वा योजनीयम्; सहस्रकृत्वोऽपि
5 ब्रह्मात्मभावे ज्ञातेऽपि ज्वरसंनिपातादिकृतपरितापदुःखादेः सर्वात्मज्ञानामप्यनुभवसिद्धत्वाद्, भावरूपमूलाविद्याकृतनियतसूक्ष्मस्थूलदेहसम्बन्धात् सङ्गित्वसम्पादनेन दुःखादिसम्बन्धस्य विना सर्वांशेन मूलाविद्यानिवृत्तिं प्रत्याख्यातुमशक्यत्वात्, धनाद्यभिमानहीनस्य धनापहारनिमित्तं दुःखन्तु न जायते; यथेष्टविनियोगार्हतासक्तिविशेषलक्षणस्वामित्वस्य मनःसम्पादित-
10 त्वेन मनस एव धनानासक्तिवासनया धनासक्तिविलये सति धनापहारनिमित्तदुःखसम्पादकासक्त्यभावात, तथैव सर्वानुभवात्, न तथा देहात्माभिमानस्थले। तस्माद् मार्गान्तरमेव तत्राश्रयणीयम्। नच तद् भाष्य उपलभ्यते। यदपि शरीरात्माभिमानलक्षणमिथ्याज्ञानमेवात्मनो देहसम्बन्धहेतुरिति, इदमपि कथमुपपादनीयम्। देहाद्यतिरिक्तोऽशनायाद्यतीत आत्मेति
15 दृढतरप्रत्ययवतोऽपि पूर्वावस्थितमिथ्याभिमानशून्यस्य भवद्रीत्या देहसम्बन्धाभावादसङ्गत्वाद् ज्वराद्युपतापादिकृतपरितापादिदर्शनमनुपपन्नं स्यात्। किञ्च देहादावात्माभिमानलक्षणमिथ्याज्ञानस्य गौतमादिमतसाधारणत्वात् स्वमते च भावरूपाविद्याया एवाज्ञानरूपाया ज्ञानसुखभूमरूपाच्छादिकाया [3a] देहादिनिखिलसंसारहेतुतया तत्कथनमन्तराऽऽन्तरालिकाभिमानस्य सम्बन्ध-
20 हेतुत्वेन कथनं न्यूनतावहम्। नच—एवमविद्यादोषवतां धर्माधर्मतारतम्यनिमित्तमिति अत्रापरे प्रत्यवतिष्ठन्त इति पूर्वपक्षोत्तरभाष्ये अत्राभिधीयत इत्यादौ निर्देशाद् मूलाविद्यापरिग्रहाद् न न्यूनतेति—वाच्यम्, एतदविद्यापदस्य "अविद्याऽस्मितारागद्वेषाभिनिवेशा"[1] इति योगसूत्रारूढाविद्यापरत्वात, प्रथमसूत्रे तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्त इति भ्रमरूपाविद्याया एव प्रस्तावात्।
25 अपि चाविद्याया एव देहादिसङ्गहेतुत्वेन देहात्माभिमानस्यापि देहसम्बन्धोत्तरभावित्वेन देहसम्बन्धकथनमनौचित्यावहमेव भवेत्॥

कथमित्यवतारणतो गुरुणा
परसूत्रमिदं तदिति स्फुटतः।

घटितं प्रथमेन समन्वयतः
प्रतिभाति परन्तु शिरोविवृतौ ॥३॥

**अथोक्तान् दोषान् परिहरिष्यन्** "तत्तु समन्वयादि"[1]**ति सूत्रस्थभाष्ये प्रकटाद् वर्णकादन्यद् वर्णकं भाष्यकृद्भिः सूचितमिति श्लोकद्वयेनाह**—कथमिति ॥ न पुर इति ॥ कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वमुच्यत **इत्याद्यवतारणेन** "तत्तु समन्वयादि"[2]-**ति** परसूत्रमिदं प्रथमेन "शास्त्रयोनित्वादि"[3]**त्येवंलक्षणेन** समन्वयतः **सङ्गत्या आक्षेपिक्याः** स्फुटतः **स्पष्टमेव** गुरुणा **भाष्यकृता** घटितं प्रतिभाति । परन्तु शिरोविवृतौ **द्वितीयव्याख्याने** घटितं प्रतिभाति ।३॥

[3b] न पुरोविवृतौ घटितं तदिदं
10 स्फुटमार्यवरेण ततोऽनुमतम् ।
विधया परया नयसंयुतया
घटतां हि समन्वयसूत्रमिति ॥४॥

पुरोविवृतौ **प्रथमवर्णके** तदिदं **सूत्रं सङ्गत्या** घटितं न प्रतिभाति । ततो **हेतोः** आर्यवरेण **भाष्यकृता** नयसंयुतया **न्यायसंवलितया** परया विधया **अन्यप्रकारेण** समन्वयसूत्रं घटतामिति स्फुटमनुमतम् । **इत्यर्थः । तथाच द्वितीयवर्णकरीत्यैव भाष्ये सङ्गतिप्रदर्शनात् प्रथमवर्णकरीत्या सङ्गत्यप्रदर्शनेन स्वतन्त्रवर्णकान्तरं न्यायानुगृहीतं सूचितम् । इति भावः** ॥४॥

जगतां जननादिकरत्वमिति
स्फुटमेव तटस्थतया गमकम् ।
20 निगमप्रमितत्वमखण्डतनौ
न भवेत् क्रियया खलु वेदविधिः ॥५॥

[4a] अत एव हि सिद्धपरं वचनम्
विधिना मिलितं किल मानमभूत् ।

इति निर्गलितं कथमादिगिरा-
मवतारणभावजुषां हृदयम् ॥६॥

अथ कथं पुनरित्याद्यवतारणभाष्यतात्पर्यं श्लोकार्भ्यां सङ्ग्रहेण दर्शयति— जगतामिति ॥ अत एवेति ॥ "जन्माद्यस्य यत"[1] इति सूत्रे "यतो वा इमानि भूतानी"[2]ति विषयवाक्यानुरोधेन यत्पदस्य पञ्चपर्वजीवपरत्वात् तदुद्देशेन जगज्जन्मादिहेतुत्वस्येशगतस्य विधानादर्थाद् जीवेशोभयसामानाधिकरण्यज्ञापनाद् जगज्जन्मादिकारणत्वस्येशगतस्य जीवेशोभयलभ्याखण्डस्वरूपलक्षणत्वाभावेन तटस्थलक्षणत्वेनैवाखण्डज्ञापकतया विवक्षणादखण्डार्थ एव जन्मादिसूत्रे विवक्षितः। एवञ्चेदृशेऽखण्डतनावात्मनि निगमप्रमितत्वं न भवेदेव। कुतः। वेदविधिः वेदसम्बन्धी विधिः सर्वोऽपि क्रिययोपलक्षित एव भवेत्। एवञ्चाखण्डस्य क्रियासंस्पर्शायोगादखण्डपरं वेदान्तवाक्यं प्रमाजनकमेव न भवति। लक्षणया कर्तृदेवतादिपरं वोपासनाविषयसमर्पकं वा भवेत्। अत एव सिद्धपरं वचनं "सोऽरोदीदि"[3]त्यादिलक्षणम् "इषे त्वे"[4]त्यादिलक्षणं च विधिना मिलितमेव परम्परया मानमभूद् नान्यथेति कथं पुनरित्यादिगिरामवतारणत्वभाजाम् इति उक्तरीत्या निर्गलितम् निर्णिक्तं हृदयं भवतीत्यर्थः। तथाच द्वितीयवर्णकानुरोधेनैवावतारणप्रवृत्तिः। इति भावः ॥५-६॥

तुपदेन विनाऽपि हि सूत्रमिदम्
परिपूर्णमिहार्थसमर्पणतः।
तुपदं पठितं तु तथाऽप्यधिकं
ननु वर्णकभेदविवक्षणतः ॥७॥

अथ "आनन्दमयोऽभ्यासात्"[5] 'आकाशस्तल्लिङ्गादि"[6]त्यादिष्विव तुपदं विनाऽपि यथाश्रुताधिकरणपूर्तिसम्भवात् तुपदमधिकं दृश्यमानं वर्णकान्तरमतिप्रसिद्धं भाष्यारूढत्वेन सकलव्याख्यातृसम्मतं भाष्यकारैरप्यवतारणग्रन्थेन स्पष्टीकृतं सूचितमित्याह—तुपदेनेति ॥ तुपदं विनाऽपि सूत्रमिदम् तदित्यादिलक्षणमर्थ-

समर्पणेन पूर्णमेव। तथाऽप्यधिकं तुपदं वर्णकभेदविवक्षयेति गोलार्थः। तथाच वर्णकद्वयमपि सूत्रकृतोऽभिप्रेतमेव। तत्र शास्त्रयोनित्वद्वितीयवर्णकरीत्यैकम्, स्वातन्त्र्येणापरम्। इति दिक् ॥७॥

[4b] प्रथमं नियमं हि ससाधनकम्
5 प्रतिपाद्य ततो यदि सम्भवति ।
ननु तर्हि परापरपक्षयुगम्
प्रथितं बहुशः परतः स्फुटतः ॥८॥

अथ सूत्ररचनाशैल्याऽपि "तत्तु समन्वयादि"[1]ति सूत्रस्येक्षतिसूत्रान्वयित्वेन वर्णकान्तरपरत्वमुचितमिति श्लोकाभ्यां दर्शयति—प्रथममिति ॥ नियमेनेति ॥
10 प्रथमम् आदौ ससाधनकं नियमम् सहेतुकं प्रतिज्ञास्वरूपम् प्रतिपाद्य पश्चाद् यदि सम्भवति पूर्वपक्षः, तर्हि परापरपक्षयुगम् पूर्वपक्षसिद्धान्तयुगम् परतः उत्तरत्र बहुशः बाहुल्येन स्फुटतः स्पष्टम् प्रथितं ननु प्रसिद्धं किल। "आनन्दमयोऽभ्यासात्"[2] "विकारशब्दाद् नेति चेन्न प्राचुर्यात्"[3] "ज्योतिश्चरणाभिधानात्"[4] "छन्दोऽभिधानाद् नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम्"[5] "प्राणस्तथाऽनुगमात्"[6]
15 "न वक्तुरात्मोपदेशादि"[7]त्यादौ प्रतिज्ञास्वरूपहेतुनिर्देशानन्तरमेव पूर्वपक्षादिप्रवृत्तिदर्शनात् ॥८॥

[5a] नियमेन विनेक्षतिसूत्रमहो
परपूर्वनयैकपरं हि कथम् ।
तदिहाश्रवमाश्रयति श्रुतितः
20 श्रितहेतुसमन्वयसूत्रमिदम् ॥९॥

"ईक्षतेर्नाशब्दमि"[8]त्यत्र नियमेन विना प्रतिज्ञास्वरूपं विनैव परपूर्वनयैकपरम् सिद्धान्तपूर्वपक्षन्यायैकपरमीक्षतिसूत्रं कथं हि। अहो आश्चर्यम्। लोकप्रसिद्धव्याख्यानरीत्या प्रतिज्ञाहेतू विनैवेदमधिकरणं जातमिति मुने र्या स स्यैवाचातुरी सम्पादिता भवेत्, तत् कथं भवेत्। तत् तस्मात् कारणात्

समन्वयसूत्रमिदं समन्वयादिति हेतुवाचकपदेनान्वितं सत् श्रुतितः शब्दत एवेक्षत्यधिकरणापेक्षितम् आश्रवम् प्रतिज्ञाम् आश्रयति प्रतिपादयति। एव-
श्चानन्दमयाद्यधिकरणेष्विवेक्षत्यधिकरणेऽपि प्रतिज्ञाहेतुपरं "तत्तु समन्वया-
दि"[1]ति वाक्यं प्रधानसूत्रात्मकम्। अन्यत् सर्वमीक्षतेरित्यादि गुणसूत्रम।
5 इति भावः ॥९॥

[5b]

तदिति प्रकटा ननु सामगवाग्
द्विविधाऽपि भवेद् विषयात्मतया।
सकलात्मतयैकतयाऽप्यणुभि-
र्द्विविधोऽपि समन्वयहेतुरपि ॥१०॥

अथ "तत्तु समन्वयादि"[2]त्येतत्सूत्रस्येक्षतिसूत्रादिभिरेकवाक्यतेति कथना-
10 दीक्षतिसूत्रे या श्रुतिर्विषयः, सैव श्रुतिस्तत्तुसूत्रस्यापि द्विविधतत्पदप्रत्यभि-
ज्ञादिसत्त्वाद् विषय इति दर्शयन् सूत्रगतं हेतुं तत्पदद्वैविध्यात् स्वातन्त्र्येण
योजयति—तदितीति ॥ "तदैक्षत बहु स्यां प्रजायेय"[3] "तत्त्वमसी"[4]ति
द्विविधाऽपि सामगवाक् छान्दोग्य श्रुतिः विषयात्मतया प्रत्यभिज्ञाबलेन प्रकटा
अतिविशदाऽसन्दिग्धा भवेत् ननु निश्चयेन। तथाच तत्तु "सदेवे"[5]त्युपक्रान्तं
15 जगदभिन्ननिमित्तलक्षणं तत्पदेन परामृश्यमानं सर्वज्ञं सर्वशक्ति ब्रह्मैव
भवेत्। तत्र हेतुः—समन्वयादिति। "तदैक्षत बहु स्यां प्रजायेय"[6] "ऐत-
दात्म्यमिदं सर्वमि"[7]ति जडाजडप्रपञ्चाभेदबोधनात् "तत्त्वमसी"[8]ति स्पष्टमणुभि-
र्जीवैः सामानाधिकरण्यबोधनात् चेतनाभेदस्य जडे प्रधानेऽनुपपत्तेस्तत्पदार्थो
ब्रह्मैव भवेत्। तथाच सकलात्मतया जडाजडप्रपञ्चात्मकतयाऽणुभिर्जीवैरेकतया
20 च समन्वयहेतुरपि द्विविधो भवति। अपिना त्रिविधोऽपीत्यपि सूच्यते।
तृतीययोजनाप्रकारस्तु भाष्ययोजनावसरे प्रकटीभविष्यति। इति दिक् ॥१०॥

[6a]

परमात्मनि शास्त्रमितत्वमहो
न भवेदिति युक्तिभिराकलिते।

प्रमितत्वमिहोदितमाश्रयितुम्
क्षमते ननु सूत्रगतल्पितम् ॥११॥

अथ "तत्तु समन्वयादि"[1]ति सूत्रयोजनपरसिद्धान्तभाष्यस्य तुशब्दः पक्षव्यावृत्त्यर्थ इत्यादिलक्षणस्य पूर्वापरग्रन्थरचनाविरोधपरिहारलक्षणस्वारस्यादपि वर्णकान्तरं भष्यकृत्सम्मतमिति श्लोकाभ्यां दर्शयति—परमात्मनीति ॥ उचितमिति ॥ कथं पुनर्ब्रह्मणः शास्त्रप्रमाणकत्वम् । उच्यत इत्युपक्रम्य महता प्रबन्धेन शास्त्रप्रमाणकत्वं ब्रह्मणो न सम्भवतीति प्रसाध्य तस्माद् न ब्रह्मणः शास्त्रयोनित्वमित्युपसंहृत्य तत्पूर्वपक्षपरिहाराय "तत्तु समन्वयादि"[2]ति सूत्रे समादृते पूर्वपक्षे शास्त्रयोनित्वं न सम्भवतीति शास्त्रयोनित्वस्य प्राधान्येन निर्देशात् तत्पदस्य सर्वनाम्नो मुख्यतः प्रकान्तप्रधानपरामर्शकत्वस्य साहजिकत्वात् सूत्रगततत्पदस्यापि शास्त्रयोनित्वं त्वित्येवार्थनिर्देशौचित्यादुचितं तदपाहाय तद्ब्रह्म सर्वज्ञं सर्वशक्तीति जघन्यमर्यादया तत्पदार्थकथनं विना प्रयोजनमनुचितमिति वर्णकान्तरमत्र विवक्षितं भाष्यकृतेति श्लोकद्वयगोलार्थः । परमात्मनि अखण्डार्थे शास्त्रयोनित्वं न भवेदिति कथं पुनरित्यादिना युक्तिभिराकलिते निरूपिते सति सूत्रगतल्पितम् तत्त्वितिसूत्रगतल्पितम् तत्त्वितिसूत्रगततत्पदप्रमितत्वम् पूर्वत्र प्राधान्येन निर्दिष्टमाश्रयितुं क्षमते ननु निश्चयेन ; शब्दस्वाभाव्यात्, न त्वप्रधानम् । इत्यक्षरार्थः पूर्वश्लोकस्य ॥११॥

[6b] उचितं परिहाय तदेतदिमे
गुरवोऽखिलनीतिनिविष्टहृदः ।
परमात्मपरं तदिति स्फुटतो
जगुरन्यकवर्णकचित्ततया ॥१२॥

उचितमिति ॥ इमे गुरवः भाष्यकृतोऽखिलन्यायाभिनिविष्टचेतसः उचितम् पूर्ववाक्ये प्रधानीभूतं शास्त्रयोनित्वं परिहृत्य तदितिपदं गुणीभूतपरमात्मपरम् अन्यकवर्णकचित्ततया वर्णकान्तरविवक्षया जगुः कथयामासुः; मुख्यं पक्षं परिहृत्य गौणपक्षादरणे प्रयोजनविशेषस्यैव निमित्तत्वात् । तच्च प्रयोजनं वर्णकान्तरमेव । इति द्वितीयश्लोकाक्षरार्थः ॥१२॥

नियमार्थतयाऽचरमं चरमे
कथयिष्यति सूत्रमदो यतिराट् ।
प्रथमैकवचस्कतयैवमिति
स्फुटमेव समन्वयसूत्रमपि॥१३॥

5 **समन्वयसूत्रान्तिमभाष्यस्वारस्यादपि वर्णकान्तरं विवक्षितमिति श्लोकाभ्यां दर्शयति**—नियमेति । श्रुतीति ॥ अदोऽचरमम् **आद्यं** सूत्रं यतिराट् **भाष्यकारः** चरमे **प्रकृतसूत्रविवेचनप्रान्तभागे** नियमार्थतया **प्रतिज्ञार्थत्वेन** कथयिष्यति—एवं च सति "अथातो ब्रह्मजिज्ञासे"[1]ति शास्त्रारम्भ उपपद्यत **इति भाष्येण । एवं च** समन्वयसूत्रमिदमपि प्रथमैकवचस्कतया **प्रथमसूत्रैकवाक्यतया** स्फुटमेव कथ-
10 यिष्यति **स्वतन्त्रमेव, ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यषड्विधलिङ्गान्वयादिति सिद्धे** "अथातो ब्रह्मजिज्ञासे"[2]ति **पृथक् शास्त्रारम्भ उपपद्यते ; प्रतिपत्तिविधिपरत्वे तु शास्त्रस्य** "अथातो धर्मजिज्ञासे"[3]**त्यनेन गतार्थत्वात् पुनः** "अथातो ब्रह्मजिज्ञासे"[4]**त्यारम्भोऽनर्थक एव भवेदिति स्पष्टमेव कथनात् । इति भावः** ॥१३॥

15 [7a] श्रुतिवाग्विवृतिः सकलं स्वमते
ननु सूत्रमिति स्फुटमाकलितम् ।
तत एव च वर्णकभेदमिहा-
न्वयसूत्रगतं ज्ञपयत्यतुलम् ॥१४॥

श्रुतीति ॥ **एवं च** सकलं सूत्रं स्वमते **श्री श ङ्क र भगवत्पादैः** श्रुतिवाग्विवृतिर्भव-
20 **तीति स्फुटमेवा**कलितम् **जन्मादिसूत्रव्याख्याप्रसङ्गे**—वेदान्तवाक्यग्रथनार्थत्वात् सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते । वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगतिरित्य**दिना । एवं च** स्वमते **श्रुतिविवरणत्वेन सर्वसूत्राण्यङ्गीकुर्वद्भिराचार्यैरेव समन्वयसूत्रव्याख्यान्ते प्रथमसूत्रं प्रतिज्ञापरम्, तदेकवाक्यतापन्नं समन्वयसूत्रमिति कथनात्** तत एव च **सर्वसूत्राणां स्वमते**
25 **श्रुतिव्याख्यात्वकथनादेव हेतोः श्रुतिव्याख्यारूपं** वर्णकभेदं **स्वमतेऽतुलम्**

अनुपमं दोषरहितं समन्वयसूत्रगतं ज्ञापयत्याचार्यः। तच्च वर्णकान्तरमीक्षत्यधिकरणैकवाक्यतया पूर्वमेवोक्तम्। इति भावः ॥१४॥

[7b] निगमप्रमितो जगतामधिपो
निगमप्रमितत्ववशेन पुनः।
5 इति तत्त्वकथा कथमत्र भवे-
न्नहि साधनसाध्यविभेद इह ॥१५॥

**अथ पुनरपि वर्णकान्तरे भाष्यगतं ज्ञापकान्तरमाह**—निगमेति ॥ तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादवगम्यते। कुतः। समन्वयात्। सर्वेषु हि वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन समनुगतानी**ति**
10 **भाष्येण** जगतामधिपः **परमेश्वरो** निगमप्रमितः **स्यात्; तात्पर्येण निगमप्रमितत्वादित्यर्थकथनेन** इति तत्त्वकथा **इति उक्तानुमानप्रकारेण तत्त्वकथा यथार्थकथा** अत्र **एतद्भाष्ये** कथं भवेत्। **न भवेदित्यर्थः। तत्र हेतुमाह**—नहीति ॥ इह **अनुमाने** साधनसाध्यविभेदो नहि **साध्यात् साधनभेदे सत्येवानुमानप्रवृत्तेः साध्याविशिष्टस्य साधनत्वायोगादिति भावः। अथ ब्रह्म, वेदान्त-**
20 **जन्यप्रमितिविषयः, वेदान्तवाक्यगतषड्विधलिङ्गोद्देश्यत्वादित्युक्ते साध्यसाधनयोर्भेदः प्रतीयत इति चेन्, सत्यं भेद इव प्रतीयते, नतु भेदः, षड्विधलिङ्गोद्देश्यत्वं षड्विधलिङ्गसहकृतवाक्यजन्यप्रमितिविषयत्व एव पर्यवस्यतीति पुनरपि तथैव साध्याविशेषदोषः समः। इति दिक्** ॥१५॥

[8a] इममेव विरोधमुपाश्रयता
25 गुरुणा ननु वर्णकभेदकथा।
गमिता श्रितवर्णकरूपमिदम्
परपक्ष इति स्फुटमुत्कलितम् ॥१६॥

**अथ दोषवतः पक्षस्य परिग्रहे फलं दर्शयति**—इममेवेति ॥ **इममेव निरुक्तमेव** विरोधम् **अनुमाने साध्याविशेषलक्षणदोषात्मकं विरोधम्** उपा-

श्रयता मनसि श्रितवता गुरुणा **श्री श ङ्क र वर्येण** वर्णकभेदकथा **प्रसिद्ध-वर्णकादस्माद् दुष्टाददुष्टवर्णकविशेषकथा** गमिता **ज्ञापिता भवति। प्रसिद्धतया सर्वैर्व्याख्यायमानवर्णकभेदस्वरूपन्तु दुष्टम्।** परेषाम् **अन्येषां प्राचामाचार्याणां कश्चन पक्षविशेष इति** स्फुटमुत्कलितम् **ज्ञापितम्। इति दिक्** ॥१६॥

इह भाष्यकृतः कथयन्ति मते
ननु तन्त्रसरण्युपसङ्ग्रहणात्।
अत एव च तत्पदमात्मपरम्
विवृतं घटते हि तदादिगिरि ॥१७॥

**अथ स्वमतं परमतं चेह तन्त्रश्लेषादिरीत्या स्पष्टमेव परिगृहीतम्, नतु परमतमेव स्पष्टमुक्तम्, स्वमतं केवलं ज्ञापितमिति दर्शयति**—इहेति॥ इह "तत्तु समन्वयादि"[1]**ति सूत्रव्याख्यानावसरे** मते द्वे **परमतस्वमते** तन्त्र-सरण्युपसङ्ग्रहणात् **तन्त्रसरणिः तन्त्रश्लेषादिलक्षणा, तस्याः परिग्रहण-मवलम्ब्य** कथयन्ति। **मतद्वयमपि युगपदेवैकेन वाक्येन कथयन्ति लाघ-वादित्यर्थः। तत्र परमतांशे दोषसत्त्वेऽपि स्वमतांशे दोषाभावाद् वाक्य-मदुष्टमेवेति भावः। तन्त्रेणेह मतद्वयं परिगृहीतं भवतीत्यत्र तत्पदेन प्रस्तुत-शास्त्रयोनित्वस्य प्रधानस्य परिग्रहे समुचिते सति गौणरीत्या तत्पदविवरण-मेवोपष्टम्भकमित्याह**—अत एवेति॥ तदादिगिरि तद् ब्रह्म सर्वज्ञमित्या**दिवाचि** तत्पदं **शास्त्रयोनित्वपरामर्शोन्मुखमपि** आत्मपरम् **परमात्माखण्डपरं** विवृतम्। अत एव **गौणपक्षपरिग्रहादेव हेतो**र्घटते हि। **तथाच भाष्यस्वारस्यादेव वर्णकान्तरमवश्यमभ्युपेयम्। इति भावः** ॥१७॥

[8b] सदिति श्रुतिवाक्पठनं प्रथमम्
गमयन्ननु सामगवाचमिह।
विषयात्मतयाऽपि विशेषदृशा
विनिवेदयतीतरपक्षमपि ॥१८॥

अथ स्वमतं परमतं च द्वयमपि विवक्षितमित्यत्र ज्ञापकान्तरमप्याह— सदितीति॥ श्री श ङ्क र देशिकः "तत्तु समन्वयादि"[1]ति सूत्रविवरणे प्रस्तुते सति समन्वयपदविवरणप्रसङ्गेन श्रुतिषु बह्वीषु समुदाहर्तव्यासु सतीषु "सदेव सोम्ये"[2]ति छ न्दो ग श्रुतिवचःपठनं प्रथमम् आद्यं स्थानं 5 प्रापयन् इह "तत्तु समन्वयादि"[3]ति सूत्रे सामगवाचम् "तदैक्षते"[4]ति तत्पदघटित-वाचं विशेषदृशा तत्पदघटितत्वदृशा विषयवाक्यत्वेनापि वर्णकान्तरविवक्षा-परेण निवेदयति। अपिः परमतरीत्या श्रुत्यन्तरसाधारण्यपरिग्रहं सूचयति। तदेतदाह—इतरेति॥ इतरपक्षमपि प्राचां पक्षमपि निवेदयति। इत्यन्वयः॥१८॥

[9a] तुपदं परपक्षनिवृत्तिपरम्
10 प्रकृते प्रकृतिः सदिति प्रकृता।
परपक्षतया तदपाकृतये
तुरवं वदतीह तुशब्द इति॥१९॥

अथ तुशब्दः पक्षव्यावृत्त्यर्थ इति भाष्यं भाष्यकृन्मतरीत्या योजयति— तुपदमिति॥ तुपदं सूत्रगतं परपक्षनिवृत्तये व्या सा चा यैं रुपात्तम्। तत्रैत-15 त्सूत्रविषये "तदैक्षत बहु स्यां प्रजायेये"[5]त्यत्र प्रकृते "सदेव सोम्येदमग्र आसीदि"[6]ति सत्पदेन परपक्षतया साङ्ख्यपक्षत्वेन प्रकृतिरेव प्रधानलक्षणा प्रकृता भवति। तत्पक्षापाकरणाय तुरवम् तुशब्दं सूत्रगतं भाष्यकृद् वदति तुशब्द इति वाक्येन। इत्यर्थः॥१९॥

जगतो जननादिकरं तदिति
20 प्रथितं ननु सामगवाचि परम्।
सदिति प्रकृतं परमात्ममयम्
नतु साङ्ख्यजनाकलिता प्रकृतिः॥२०॥

अथ तुशब्दव्यावर्त्यमभिनीय दर्शयति—जगत इति॥ सामगवाचि छा न्दो ग्ये "सदेव साम्येदमग्र आसीदि"[7]ति प्रसिद्धं जगतो जन्मस्थितिभङ्गकरं परम् उत्कृष्टं

परमात्ममयम् **परमात्मस्वरूपमेव, नतु साङ्ख्यलोकपरिगृहीतप्रधानम्।** इत्यर्थः ॥२०॥

[9b]
गतयोगयुगेन यदाकलितं
निगमान्तमितं जगदीशितृ तत् ।
5 तदितीरितसामगवाग्विदितम्
भवतीति तदादिगिरो विवृतिः ॥२१॥

**अथ** तद् ब्रह्म सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं वेदान्तशास्त्रादवगम्यते। कथम्। समन्वयादित्यादि **भाष्यं तन्त्रश्लेषादिरीत्या वर्णकद्वयपरत्वेन प्रवर्तितमाचार्याभिमतवर्णकान्तरपक्षे सङ्ग्रहेण योजयति**—गतेति ॥ गतयोगयुगेन
10 "शास्त्रयोनित्वात्"[1] "जन्माद्यस्य यत"[2] **इति सूत्रद्वयेन** यदाकलितम् **परिगृहीतम्** निगमान्तेन **वेदान्तेन** मितम् **प्रमितं जगतामीशितृ च भवति,** तत् "तदैक्षते"[3]ति **सामगवाग्विदितं वस्तु सर्वज्ञं सर्वशक्ति जगदुत्पत्तिलयकारणं वेदान्तशास्त्रावगतं** भवतीति तद् ब्रह्मे**त्यादिभाष्यस्य द्वितीयवर्णकरीत्या विवरणं भवति। इत्यर्थः** ॥२१॥

15
परमात्मपरैव हि सामगवाग्
जगदादिमसाधनबोधपरा ।
सकलश्रुतितः स्फुटतो गदितो
जगदादिमरूपतयैव सः ॥२२॥

**अथ** कथम्। समन्वयादिति **सूत्रगतहेतुयोजनपरं भाष्यं विवृणोति**—
20 परमेति ॥ "सदेव सोम्येति"[4] **जगतामादिमकारणबोधपरा** "तदैक्षते"[5]**ति** सामगवाक् परमात्मपरैव, **न प्रकृतिपरा।** कुतः। स **परमात्मा सकलश्रुतिभिः स्पष्टतया जगदादिमकारणत्वेनैव** गदितो भवति। **तथाच सर्वास्वपि शाखासु जगत्कारणस्य परमात्मत्वेन स्पष्टं बोधनात् सर्वशाखाप्रत्ययन्यायेन** छा-

न्दो ग्य श्रुतावपि "सदेवे"[1]ति सामान्याकारेण जगत्कारणत्वेन प्रस्तुत्य "तदैक्षते"[2]ति परामृश्यमानं ब्रह्मैव भवितुमर्हति। इत्यर्थः ॥२२॥

[10a] सकलज्ञमपारबलं निखिल-
श्रुतिशेखरगीर्भिरुपस्क्रियते।
5 यत इत्यथ सर्वपदादिगिरो
घटना करणार्थककाकुवशात् ॥२३॥

अथ "तदैक्षते"[3]ति तत्पदार्थः "सदेवे"[4]ति जगद्धेतुत्वेन प्रस्तुतो ब्रह्मैव। तत्र सर्वज्ञमित्यादेर्हेतुत्वपर्यवसानाय हेतुपरः काकुस्वरः पठनीयो यदित्यर्थे किलेत्यर्थे वा पर्यवसन्न इत्याह—सकलेति ॥ "तदैक्षते"[5]ति तत्पदगम्यं ब्रह्म 10 भवितुमर्हति जगत्कारणम् सकलज्ञम् सर्वज्ञम् अपारबलम् सर्वशक्ति निखिल-श्रुतिशेखरगीर्भिः वेदान्तवाग्भिर्यत उपस्क्रियते परिष्क्रियते परिच्छिद्य निरूप्यते इति एवं प्रकारेण सर्वज्ञं सर्वशक्तीति सर्वपदादिवचसः करणार्थककाकुवशाद् घटना कर्तव्या। हेत्वर्थककाकुवशाद् घटना कर्तव्येत्यर्थः। यत् यस्मादेवं शास्त्रादवगम्यते। एवं शास्त्रादवगम्यते किलेत्यर्थः। काकाऽवगन्तव्य इति 15 यावत् ॥२३॥

[10b] सकलोपनिषत्प्रतिपादितता
कथमित्युपनीतदिशा विशदम्।
घटयन्ति समन्वयवाचमथो
विविधेन नयेन मुहुर्गुरवः ॥२४॥

20 अथ कथम्। समन्वयादित्यारभ्य प्रवर्तितभाष्यस्य तस्मात् सिद्धं ब्रह्मणः शास्त्र-प्रमाणकत्वमित्यन्तस्य समन्वयविवेचनपरतां भाष्यकृतो दर्शयन्तीत्याह—सकलेति ॥ सकलोपनिषत्प्रतिपादितत्वं कथम्। समन्वयादिति ज्ञापितदिशा विशदम् अतिस्पष्टं समन्वयवाचम् सूत्रगतसमन्वयपदं गुरवः भाष्यकृतो विविधेन न्यायेन मुहुर्घटयन्ति विवेचयन्ति। इत्यर्थः ॥२४॥

निखिलोपनिषद्वचनानुगमो
मतयोरुभयोः सम एव मतः ।
अत एव परापरपक्षयुगम्
विविधं सममेव मतद्वयगम् ॥२५॥

अथ तुशब्द इत्यादिभाष्यवचनानाम् अवगम्यत इत्यन्तानामुद्देश्यविधेयभावभेदेन वाक्ययोजना वर्णकयोः पृथक् कर्तव्या। तत्र प्रसिद्धे वर्णके ब्रह्म शास्त्राद् गम्यत इति साध्यस्य यो हेतुः समन्वयः, तदुपपादनायोत्तरग्रन्थः सर्वोऽपि। द्वितीयवर्णके पुनस्तत्पदगम्यं जगत्कारणं ब्रह्मैव, यतो जगत्कारणं सर्वोपनिषद्भिरपि सर्वज्ञसर्वशक्तिब्रह्मरूपत्वेन प्रतिपाद्यत इति हेतौ कथिते स हेतुर्वेदान्तप्रमितत्वं कथमिति प्रश्ने तदुपपादनाय समन्वयनिरूपणमुत्तरग्रन्थेन सर्वेण क्रियत इति भेदः। यद्वा—"सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः"[1] इत्युपक्रम्य "कथं नु भगवः स आदेश"[2] इति प्रश्ने सति सकलवेदसाररूपतयैतत्प्रपाठकप्रवर्तनाद् एतदंशसूचनायैतद्भाष्ये वेदान्तशास्त्रादवगम्यत इति निर्देशात् "तदैक्षत"[3] "तत्त्वमसी"[4]ति तत्पदार्थः सर्ववेदसारभूतैतत्प्रपाठकाद् जगत्कारणं ब्रह्मावगम्यते ज्ञायत इति साध्यं समन्वयादिति योजना ; नतु मतयोर्द्वयोः समन्वयहेतूपपादने भेदः, किन्तु सममेव प्रथमोपपादनम्। अत्रापर इत्यादिग्रन्थश्च मतद्वयसाधारण इत्याह—निखिलेति ॥ समन्वयनिरूपणपरः सकलवेदान्तानुगमो मतयोर्द्वयोरपि सम एव मतः अनुमतो भवति। अत एव हेतोः अत्रापरे प्रत्यवतिष्ठन्त इत्यादिपूर्वपक्षः सर्वेषु वेदान्तेष्वित्यपरपक्षश्च विविधम् नानाविधपूर्वपक्षसिद्धान्तसंवलितं सममेव मतद्वयगं भवति। तत्र व्याख्याभेदो न। इति भावः ॥२५॥

[11a] ननु सिद्धतयेतरमानमिते
श्रुतिगीर्मितेति कथं घटते ।

न विना श्रुतिमैक्यपरोऽवगमो
निखिलश्रुतिसम्मतिरत्र ततः ॥२६॥

न च परिनिष्ठितवस्तुस्वरूपत्वेऽपि प्रत्यक्षादिविषयत्वम् ; "तत्त्वमसी" [1]तिब्रह्मात्मभावस्य शास्त्रमन्तरेणानवगम्यमानत्वादिति भाष्यं शास्त्रसमन्वितत्वद्रढीकरणाय विवृणोति
5 —नन्विति ॥ ब्रह्मणः सिद्धवस्तुत्वेन मानान्तरमितत्वसम्भवाद् श्रुतिगीर्मात्रगम्यता कथं घटत इत्याक्षेपः। अन्येषां सिद्धार्थानां मानान्तरगम्यत्वेऽपि ब्रह्मात्मैक्यस्य सिद्धत्वेऽपि न मानान्तरगम्यता श्रुतिं विना। अस्मिन्नर्थे सकलश्रुतिसम्मतिरेव भवति। "तं त्वौपनिषदं पुरुषं पृच्छामी" [2]त्यादिश्रुतेः श्रुतिमात्रगोचरताया एवात्मैक्येऽभ्युपेयत्वात्। इति भावः ॥२६॥

10 [11b] सकलागमशीर्षवचोविदिते
जननादिकरे जगतामधिपे।
तदिति स्फुटसामगवाग्गमिते
चलितं ननु साङ्ख्यमथैवमिति ॥२७॥

अथेक्षतिसूत्रावतारणग्रन्थमेवं वेदान्तवाक्यानामित्यादिलक्षणं प्रसिद्धवर्णकान्य-
15 वर्णकसङ्गततयाऽवतारयति—सकलेति ॥ जननादिकरे जन्मादिसूत्रार्थभूते सकलागमशीर्षवचोविदिते शास्त्रयोनित्वसूत्रद्वितीयवर्णकार्थभूते जगतामधिपे परमेश्वरे "तत्तु समन्वयादि" [3]ति सूत्रेऽपि प्रसिद्धवर्णकरीत्या सकलवेदान्तषड्विधलिङ्गगम्ये च वर्णकान्तररीत्या तत्रैव "तदैक्षते" [4]ति स्पष्टसामगवाचा गमिते सति "तदैक्षते" [5]ति तत्पदं न परमात्मपरम्, किन्तु प्रधानपरमिति साङ्ख्य-
20 मतमीक्षतिसूत्रावतारणत्वेन सङ्गततयैवमित्यादिना ग्रन्थेन चलितम् प्रवृत्तम्। इत्यर्थः ॥२७॥

महदादिसमस्तजगत्प्रकृतिः
प्रकृतिर्हि सती सकलात्मतनुः।

निखिलावगतेर्ननु सत्त्वगुणा-
ज्जननी प्रकृता गदिताऽस्तु तदा ॥२८॥

अथ स्वतन्त्ववर्णकान्तरेऽत्र स्वयं पूर्वपक्षं दर्शयति—महदिति ॥ प्रकृतिः प्रधानं साङ्ख्याभिमतमहदादिजगन्मूलोपादानं सती "सदेवे" [1]त्यादिपदाहा
5 सर्वात्मनां तनुः शरीररूपा सत्त्वगुणाद् निखिलविषयकज्ञानस्य जननी "सदेव सोम्ये"[2]ति प्रकृता "तदैक्षते"[3]ति तत्पदेन गदिता भवतु ॥२८॥

[12a] यतिराडपि साङ्ख्यमताश्रयणात्
प्रथमं किल पक्षमुपाश्रयति ।
परतः पुरतो न समाश्रयते
10 त्ववतारितवर्णकभङ्गभिया ॥२९॥

अथायं पूर्वपक्षो भाष्ये क्वापि न दृष्ट इत्याशङ्क्य, दृष्ट इत्याह—यतीति ॥ श्री श ङ्क रा चा र्यो ऽपि साङ्ख्यमतमाश्रित्य परतः समन्वयसूत्रान्ते ईक्षति-सूत्रात् पूर्वमाश्रयति, न पुरतः पूर्वपक्षमाश्रयते । तत्र हेतुमाह—अवतारितेति ॥ कथं पुनरित्याक्षेपसङ्गत्याऽवतारितवर्णकभङ्गभिया विरुद्ध-
15 पक्षाश्रयेणासाङ्गत्यदोषभयेन पूर्वपक्षोऽयं पुरस्ताद् नाश्रीयते । इत्यन्वयः ॥२९

[12b] परपक्षवदत्र न तन्त्रतया
घटनामयते रचना प्रथमम् ।
उभयार्थकवाग्विरहाद् रचितो
गुणयोगसमीरित एष ततः ॥३०॥

20 अथ यथा "तत्त्वि"[4]ति सूत्रार्थो मतद्वयसाधारण्येन तन्त्ररीत्या क्रियते, तथैव पूर्वपक्षोऽपि तन्त्ररीत्यैव कुतो न क्रियत इत्याशङ्क्य, सिद्धान्तवत् पूर्वपक्षे श्लिष्टवाचोऽलीकत्वादगत्या तन्त्ररीतिर्नादृतेत्याह—परेति ॥ परपक्ष-वत् सिद्धान्तवत् अत्र सूत्र आदौ तन्त्ररीत्या रचना घटनामुभयार्थकवाग्विरहात्

पूर्वपक्षद्वयात्मकवाचोऽभावात् नायते न प्राप्नोति। ततः तस्मात् पूर्वत्र विरचनायोगाभावात् एष पूर्वपक्षः गुणसूत्रसविध ईक्षतिसूत्रनिकटे रचितः। अतो न भाष्ये न्यूनतावतारः। इति भावः ॥३०॥

[13a] कथमादिवचस्त्ववतारणकम्
रचितं हि समन्वयसूत्रकृते।
विधिसंवलितं क्रियया वचनम्
ननु मानमतोऽन्यदतोऽन्यदथ ॥३१॥

अथ "तत्तु समन्वयादि"[1]ति सूत्रस्य वर्णकान्तरपरत्वं सूत्रभाष्याक्षरस्वारस्येन प्रसाधितम्। तच्च वर्णकान्तरं सङ्ग्रहेणेक्षत्यधिकरणप्रधानसूत्रविधया रचितम्। तच्चेक्षत्यधिकरणे स्पष्टीकरिष्यति। सम्प्रति "शास्त्रयोनित्वादि"[2]-त्यत्र वर्णकं यत्, तत्सङ्गतत्वेन "तत्तु समन्वयादि"[3]ति सूत्रावतारणभाष्यमवतारयन् तद्भाष्यभावं चतुर्भिः श्लोकैर्विशदयति—कथमादीति ॥ कथं पुनर्ब्रह्मण इत्यादिवाक्यं समन्वयसूत्रकृते तत्सूत्रार्थम् अवतारणकम् आक्षेपसङ्गतिप्रदर्शनपूर्वकावतारणं भाष्यकृता रचितं भवति। तत्र विधिसंवलितम् विधियुतं वचनं क्रिययोपलक्षितं तदर्थकं मानं ननु निश्चयेन। अतोऽन्यत् विधियुतवचनात् क्रियोपलक्षितादन्यदुपनिषद्वाक्यं सिद्धार्थपरम् अतोऽन्यत् मानादन्यत्। अप्रमाणं वेदान्तवाक्यम्; अक्रियार्थत्वादिति भावः। अनेन कथं पुनरित्यादिभाष्यमानर्थक्यमित्यन्तं व्याख्यातं भवति। कथं पुनरिति ॥ वेदान्तशास्त्रप्रमाणकं कथं ब्रह्म भवेत्। जे मि नि ना "आम्नायस्ये"[4]त्यादिना क्रियापरवचनानामेव प्रमाजनकत्वोपवर्णनेन सिद्धेऽखण्डरूपे ब्रह्मणि वेदान्तभागस्य प्रमाजनकतासामर्थ्याभावात्, अक्रियार्थत्वात्। अतो वेदान्तजन्यप्रमितिविषयत्वं ब्रह्मणोऽलीकमेव। एवं च क्रियापरत्वाभावेन प्रमाजनकत्वाभावादप्रमाणं वेदान्तवाक्यजातम्। इति भाष्यस्यैतस्य भावः ॥३१॥

[13b] श्रुतिशीर्षवचः सकलं सफलं
क्रियया ननु दैवतकर्तृपरम्।

तदुपासनविध्यवलम्बनत-
स्वत एव च मानतमं भवतु ॥३२॥

अथ सर्वथा वेदान्तवाक्यानामानर्थक्यमनुचितम्; निर्दोषत्वादित्यभिप्रेत्य क्रियाकर्तृदेवतापरत्वेनोपासनार्थत्वेन चास्तु प्रामाण्यम्, न तु शुद्धाखण्डार्थ-
5 परत्वेनेतितात्पर्यकं कर्तृदेवतादीत्यादि भाष्यं विवृणोति श्रुतिशीर्षेति ॥ वेदान्तवाक्यं सकलं दैवतपरं वा कर्तृपरं वा सत् अत एव क्रिययोपलक्षितं सफलं सत् प्रमाणं भवतु। अथवा तत् वेदान्तवाक्यमुपासनाविधिपरत्वेन स्वत एव क्रियार्थकत्वेन साक्षादेव मानतमं भवतु। पूर्वं कर्त्रादिप्रकाशनद्वारा परम्परया मानमित्युक्तम्, सम्प्रति साक्षादेवोपासनाविधिपरत्वेन मानत-
10 ममित्युक्तम्। इति भावः ॥३२॥

[14a]　परिनिष्ठितवस्तुनि भिन्नमिते-
विषये तदपूर्ववचो न भवेत्।
नहि सिद्धपदार्थकथाविषये
फलमस्ति किमण्वपि दृष्टिपदे ॥३३॥

15 अथ कर्तृदेवतापरत्वेन परम्परया साक्षाद् वोपासनाविधानेन वेदान्तवाक्यानां प्रामाण्यमित्यत्र विपक्षे बाधकपरं नहीत्यादि भाष्यं द्वाभ्यां श्लोकाभ्यां विवृणोति—परीति ॥ भिन्नमितेः प्रत्यक्षादिलक्षणाया विषये परिनिष्ठिते वस्तुनि सिद्धेऽर्थे तत् वेदान्तवाक्यम् अपूर्ववचो न भवेदेव अपूर्वार्थज्ञापकं न भवेदेव। किञ्च सिद्धपदार्थस्य मानान्तरवेद्यत्वेऽपि यदि फलं स्यात्,
20 तर्हि फलवत्त्वेन सप्रयोजनत्वलक्षणं प्रामाण्यं स्यात्। न खलु सिद्धार्थप्रतिपादनेऽण्वपि फलं दृश्यते। ततो वेदान्तवाक्यानां क्रियापरत्वाभावेऽप्रामाण्यमेव भवेदिति भावः। अनेन नहीत्यादिभाष्यं पुरुषार्थाभावादित्यन्तं विवृतम्। भाष्यं चातिस्पष्टम् ॥३३॥

[14b] अत एव मनुः स्तुतिकृच्च युतौ
क्रियया विधिना च परम्परया ।
परिनिष्ठितवस्तुनि नैव विधि-
स्त्रिविधोपनिषद्गतिरस्तु ततः ॥३४॥

5 अथ अत एव "सोऽरोदीदि"[1]त्यादि भाष्यमखिलमपि सङ्ग्रहेण व्याचष्टे—अत एवेति ॥ मनुः "इषे त्वे"[2]त्यादिः स्तुतिकृत् अर्थवादश्च "सोऽरोदीदि"[3]त्यादिः परम्परया क्रियया विधिना क्रियोपलक्षितविधिना अत एव तत्प्रामाण्याभाव-लक्षणाद् हेतोः युतौ सम्बद्धौ भवतः । ननु क्रियापरत्वेन विधित्वं किमर्थम्, परिनिष्ठितपरत्वेऽपि विधित्वमस्त्वित्याशङ्क्य परिहरति—परीति ॥ सिद्धे
10 वस्तुनि कृतिसाध्यत्वार्थकविधिर्नैव सम्भवति ; बाधात् । एवञ्चोपनिषदा-मुक्तया रीत्या त्रिविधा गतिः स्यात्—वेदान्तवाक्यं सर्वथाऽप्रमाणम्, कर्तृदेवताप्रकाशकतया प्रमाणम्, उपासनाप्रकाशकं वा प्रमाणमिति ॥

भाष्यम्—अत एव "सोऽरोदीदि"[4]त्याद्यर्थवादानामानर्थक्यपरिहाराय विधिनैक-वाक्यत्वम् । "इषे त्वे"[5]त्यादीनां क्रियातत्साधनाभिधायित्वेन विधिस्पर्शेन
15 प्रामाण्यम् । न क्वचिदपि वाक्यं विधिस्पर्शमन्तरा प्रमाणं भवद् दृष्टम् । नहि सिद्धेऽर्थे विधिः । उपसंहरति—तस्मादिति ॥ उपासनापक्षे कर्तृ-देवतापक्षात् प्रकरणान्तरकृतदोषो नेति गुणमाह—अथेति ॥ परमप्रकृतमुप-संहरति—तस्मादिति ॥ अन्यत् सुगमम् ॥३४॥

[15a] अथ तत्त्विति साधु विवेचयितुम्
20 रचयन्ति वचांसि तुशब्द इति ।
परमात्मनि शास्त्रमितत्वमदो
न भवेदिति नैव भवेन्नियतम् ॥३५॥

अथ "तत्तु समन्वयादि"[6]ति सूत्रविवरणभाष्यं सर्वमवतारयन् तुशब्दः पक्ष-व्यावृत्त्यर्थ इति भाष्यभावं कथं पुनरित्यवतारणिकानुरुद्धवर्णकरीत्या दर्शयति

—अथेति ॥ "तत्तु समन्वयादि"[1]ति सूत्रं साधु सम्यक् विवेचयितुम् विवरीतुं भाष्यकृतः तुशब्द इत्यादीनि वचांसि रचयन्तीत्यन्वयः । परमेति ॥ परमात्मनि अखण्डे "शास्त्रयोनित्वादि"[2]ति सूत्रद्वितीयवर्णकरीत्या यत् शास्त्र-प्रमाणकत्वम् , अदो न भवेदेवेति कथं पुनरिति ग्रन्थेनोपपादितं नैव भवेत् ।
5 एतन्नियतं शास्त्रमितत्वं नियतमेव ब्रह्मणः । इति भावः ॥३५॥

[229b] जगतो जननादिकरं प्रकृतम्
तदितिप्रतिपाद्यमखण्डवपुः ।
श्रुतिशेखरवाङ्निकरप्रमितम्
भवतीति च साध्यमपि प्रकृतम् ॥३६॥

10 अथ तद् ब्रह्मेत्यादिभाष्यविभागं कथं पुनरित्यवतारणपक्षेण दर्शयति—जगत इति ॥ जन्मादिसूत्रे यद् जननादिकरम् जन्मादिकारणत्वलक्षणतटस्थलक्षण-विशिष्टं प्रकृतम् प्रस्तुतम् अखण्डवपुः तदितिसूत्रगतपदप्रतिपाद्यं भवति पक्षः । स "शास्त्रयोनित्वादि"[3]ति सूत्रद्वितीयवर्णकरीत्या प्रकृतम् श्रुति-शेखरवाङ्निकरप्रमितं भवतीत्येतल्लक्षणं साध्यं भवति । तथाच पक्षोऽपि प्रकृतः,
15 साध्यमपि प्रकृतमिति भावः । तत्र भाष्ये तद् ब्रह्मेत्यारभ्य जगदुत्पत्तिस्थिति-लयकारणमित्यन्तं जन्मादिसूत्रसिद्धं पक्षस्वरूपम् , वेदान्तशास्त्रादवगम्यत इत्येतत् शास्त्रयोनित्वसिद्धं साध्यस्वरूपं भवति । इति विभागः ॥३६॥

[15a] अथ साधनमत्र विवेचयितुं
कथमादिवचःप्रचयो रचितः ।
20 ननु षड्विधलिङ्गयुतिः करणं
श्रुतिवाङ्मितता किल साध्यमहो ॥३७॥

अथ समन्वयादिति हेतुविवरणपरं कथमित्यादिभाष्यं सकलमपि हेतु-विवरणपरत्वेनावतारयन् साध्यस्वरूपमनुवदन् हेतुस्वरूपं साध्याविशेषदोष-

रहितं दर्शयति—अथेति ॥ अथ अनन्तरं प्रतिज्ञावाक्यानन्तरं साधनम् समन्वयादिति हेतुम् अत्र विवेचयितुं कथममित्यादिवचःसमुदायो भाष्यकृद्भिर्विरचितो भवति। षड्विधलिङ्गयुतिः षड्विधलिङ्गसमन्वयः करणम् लिङ्गम्। ननु निश्चयेन भवति। श्रुतिवचनप्रमितत्वं साध्यं भवति। अहो आश्चर्यम्।
5 साध्यस्य हेत्वविशेषो न। इति भावः ॥३७॥

[15b] श्रुतयोऽनुगमाय सदेवमुखाः
पठिता उपलक्षणतोल्लसिताः।
अथ षड्विधलिङ्गकलोत्कलिताः
समुदीर्णपुमर्थपरात्मपराः ॥३८॥

10 अथ भाष्यपठितवेदान्तवाक्यानि सकलवेदान्तवाक्योपलक्षकाणीति कथयन् तेषां वेदान्तवाक्यानां षड्विधलिङ्गैरखण्डार्थपरतां न च तद्गतानामित्यादिभाष्यसिद्धान्तसङ्ग्रहेण दर्शयति—श्रुतय इति ॥ अनुगमाय समन्वयार्थं पठिताः श्रुतयः "सदेव सोम्येदमि"[1]त्याद्याः श्रुत्यन्तरोपलक्षणतोल्लसिताः। निश्चयेन श्रुतीः सर्वा उपलक्षयन्त्येवेति यावत्। अथापरमुच्यते—ता एव श्रुतयः
15 षड्विधलिङ्गकलाभिस्तत्सामर्थ्यैरुत्कलिता उद्बोधिताः सत्यः समुदीर्ण उद्दीप्तो यः पुमर्थः आनन्दः, तद्रूपपरात्मतत्पराः तत्प्रतिपादनोत्सुका भवन्तीत्यर्थः। एतेन "सदेवे"[2]त्यादिश्रुतिगतपदानामखण्डार्थ एव पर्यवसन्नानामर्थान्तरकल्पने श्रुतपरिहारेणाश्रुतकल्पना जघन्येति न्यायविरोधापत्तिरिति न च तद्गतानामिति भाष्यभावः स्पष्टीकृतः। इति भावः ॥३८॥

20 [16a] स्वरसेन परत्र पराङ्मुखिका-
स्सदखण्डसुखात्मनिषक्तहृदः।
निजकारकपूर्वपदार्थगण-
प्रविभञ्जनिकाः कथमन्यविधाः ॥३९॥

अथ नच तेषामित्यादिभाष्यं विवृणोति—स्वरसेनेति ॥ "सदेव सोम्येदमग्र आसीदि"[1]त्यादिश्रुतयः स्वभावतः परत्र कर्तृदेवतास्वरूपादौ पराङ्मुख्यः सदखण्डसुखात्मनिषक्तहृदः कालत्रयाबाध्यत्रिविधपरिच्छेदशून्यसुखस्वरूपात्मनि निषक्तम् सक्तं हृद् यासां ताः "तत् केन कं पश्येदि"[2]ति निजकारकपूर्वपदार्थगण-
5 प्रविभञ्जनिकाः अनादिपरम्परया य आविद्यकाः कारकादिपदार्थाः, तत्समुदाय-निराकर्त्र्यः सत्यः कथमन्यविधाः कर्तृस्वरूपादिप्रतिपादनपरा भवेयुः । "तत् केने" [3]त्यादिश्रुतेर्वेदान्तवाक्यानामखण्डपरतां मुक्त्वा कर्त्रादिस्वरूपपरत्वमयुक्तम् । इति भावः ॥३९॥

परिनिष्ठितवस्त्वपि शास्त्रमिति-
10 प्रतिबोध्यमखण्डसदात्मसुखम् ।
नहि शास्त्रमृते सदखण्डमिदम्
परमानचयैरपि बोध्यवपुः ॥४०॥

अथ वस्तुनः सिद्धत्वे मानान्तरगम्यत्वात् केवलश्रुतिगम्यत्ववादो न सम्भवतीति शङ्कापरिहारपरं नच परिनिष्ठितवस्तुस्वरूपत्वेऽपीत्यादि भाष्यं
15 विशदयति—परीति ॥ अखण्डसदात्मसुखं परिनिष्ठितवस्त्वपि शास्त्रमितिप्रतिबोध्यम् शास्त्रैकप्रमाणगम्यम् । शास्त्रमन्तरा परेषां मानानां समुदायैरपीदं निरुक्तं सदखण्डबोध्यदेहं न भवेदेव । अखण्डस्वरूपं शास्त्रैकसमधिगम्यमेवेति यावत् ॥४०॥

[16b] परिपक्वतरस्फुरदात्ममते-
20 र्निखिलस्य मलस्य विनाशवशात् ।
सकलापुरुषार्थविभञ्जनतो
निजनित्यसुखात्मपुमर्थपदम् ॥४१॥

अथ हेयोपादेयभिन्नाखण्डवस्तूपदेशानर्थक्यम्, प्रयोजनाभावादिति शङ्काम् सगुणब्रह्मण इवाखण्डस्याप्यात्मन उपासनाविधिशेषत्वं भवत्विति-

शङ्कां च निराकुर्वन् नैष दोष इत्यादिभाष्यम् एकत्वे हेयोपादेयशून्यतयेत्यादि भाष्यं च तन्त्रेण तात्पर्यतो विवृणोति—परीति ॥ स्फुरदात्मनः स्वप्रकाशात्मनः परिपक्वतरा या मतिः साक्षात्कारः, तस्याः निखिलस्य मलस्य तूलमूलाविद्यालक्षणमलस्य विनाशात् सकलापुरुषार्थविभञ्जनतः संसारलक्षणनिखिलदुःखभञ्जनात् निजनित्यसुखात्मपुमर्थपदम् निजम् स्वस्वरूपम् नित्यं सुखम् आनन्दरूपम्, आत्मलक्षणम् प्रत्यग्रूपं पुरुषार्थपदं भवतीत्यर्थः। अत्र हेयोपादेयशून्यब्रह्मात्मावगमादेव सर्वक्लेशप्रहाणात् पुरुषार्थसिद्धेरिति भाष्यार्थः क्रमेण परिपक्वेति श्लोकेन विवृतः। एवम् एकत्वे हेयोपादेयशून्यतया क्रियाकारकादिद्वैतविज्ञानोपमर्दोपपत्तेः। न ह्येकत्वविज्ञानेनोन्मथितस्य द्वैतविज्ञानस्य पुनः सम्भवोऽस्तीति भाष्यार्थोऽपि परिपक्वतरेति निखिलस्येति विशेषणसमर्पणादिना विवृत इति विवेचनीयम्। इतरद् भाष्यमतिरोहितार्थम् ॥४१॥

[17a] विधितोऽविधितः फलवद्वचनम्
भजते किल मानपदं सकलम्।
फलवत्त्ववशेन च मानतया
किमिति ह्यनुमा सदुदाहरणा ॥४२॥

अथ विधिसंस्पर्शमन्तरेण वेदभागस्य प्रामाण्यं न सम्भवति। यद्यद् वेदवाक्यम्, तत् सर्वं विधिस्पर्शेनैव प्रमाणम्, यथा कर्मोपासनाकाण्ड इत्याक्षेपतत्परिहारपरे यद्यपि तथाऽपीत्यादिभाष्ये हृदि निधाय पूर्वपक्षं दूषयन् प्रयोजनवत्त्वमेव प्रामाण्ये तन्त्रम्, न विधिस्पृष्टत्वम्। विधिस्पृष्टत्वमपि प्रयोजनसमर्पणद्वारेव प्रामाण्यप्रयोजकम्, नतु साक्षादेव। एवं च वेदान्तभागस्य विधिसंस्पर्शानुमानेन विधिसंस्पर्शाभावेऽपि ज्ञानेन परिपक्वेनाविद्यामलनिवृत्त्या प्रयोजनवत्तया प्रामाण्यं भवेदेव। एवं च कर्मोपासनाकाण्डदृष्टान्तेन विधिसंस्पर्शानुमानं निरर्थकमेव प्रामाण्योपसङ्ग्रहार्थमिति सिद्धान्तयति—विधित इति ॥ सकलमपि वचनं विधिद्वारा विधिद्वाराभावेन वा फलवत् सत् मानपदम् प्रमाणपदवीं भजते। किल प्रसिद्धौ। लोकप्रसिद्धं प्रयोजनवत्त्वेन प्रामाण्यमिति भावः। वेदान्तभागस्याविद्यानिवृत्तिप्रयोजन-

वत्त्वेन मानत्वसम्भवाद् वेदान्तभागः, विधिस्पर्शी, वेदवाक्यत्वात्, कर्मकाण्डादिवदिति सोदाहरणा अनुमा किमिति किम्प्रयोजना हि। प्रकारान्तरेणैव लाभादिति भावः। भाष्यम्—यद्यपीति ॥ वेदवाचां विधिं विना प्रामाण्यादर्शनाद् वेदान्तभागोऽपि तथा स्यादिति विधिसंस्पर्शेन प्रामाण्यमभ्युपेयमिति
5 भावः। तथापीति ॥ वचनानां प्रयोजनवत्त्वेनैव प्रामाण्यादात्मज्ञानतोऽविद्यानिवृत्त्या प्रयोजनवत्त्वाद् वेदान्तः प्रमाणमेवेति प्रामाण्योपसङ्ग्रहार्थं विधिस्पर्शानुमानं निरर्थकमेव। तस्मादित्युपसंहारपरं भाष्यम्। इतरदतिरोहितार्थम् ॥४२॥

[17b] ननु कर्मविदां सरणिं सरलां
10 समुपाश्रयतेऽलमुखैर्वचनैः।
प्रतिपत्तिमतप्रतिपक्षतया
प्रतिपत्तिविधिं प्रतिपादयितुम् ॥४३॥

अथ पूर्वं ब्रह्मकाण्डस्य निर्दोषवेदैकदेशस्याप्रामाण्यं न सम्भवति, कर्तृदेवतादिप्रकाशनकर्मविधिसमवायित्वमपि न सम्भवति; क्रियाकारकादि-
15 निषेधपरस्य क्रियाकारकमयकर्मशेषत्वानुपपत्तेः, दूरे पाठाच्च। अत एवोपासनाविधिसमन्वयित्वमपि न सम्भवति, किन्तु ज्ञानद्वाराऽविद्यानिवृत्त्या प्रयोजनवत्त्वाद् ब्रह्मकाण्डं प्रमाणं स्वतन्त्रमेवेत्युक्तम्। अस्तु स्वतन्त्रं प्रमाणम्; ज्ञानद्वाराऽविद्यानिवृत्तेः प्रयोजनवशाच्च, परन्तु ज्ञानस्य साध्यत्वात् तत्र विधिरस्तु। एवं च यद्यद् वेदवचनम्, तत् सर्वं विधिस्पर्शि सत्
20 प्रमाणमिति व्याप्तिरप्यनुगृहीता भवतीति हृदि निधाय प्रवर्तितम् अत्रापर इत्यादिभाष्यमवतारयति—नन्विति ॥ अत्रमुखैः अत्रापरे प्रत्यवतिष्ठन्त इत्यादिभिर्वचनैर्भाष्यकारः कर्मविदाम् मीमांसकानामेव केषाञ्चित् सरलाम् न्यायपरिष्कारहितां सरणिम् पन्थानं प्रतिपत्तिमतप्रतिपक्षतया ज्ञानमात्रादेवाविद्यानिवृत्त्या ज्ञानसमकालमुक्तिमतविरुद्धतया प्रतिपत्तिविधिम् ज्ञानेऽपि विधि-
25 रस्तु, ज्ञानानुष्ठानाददृष्टम्, अदृष्टाच्च मुक्तिर्जायताम्, ज्ञानसमकाला मुक्तिः स्वतः सिद्धा मा भूदिति प्रतिपादयितुं समाश्रयते परिगृह्णाति। इत्यर्थः ॥४३॥

[18a]

निगमप्रमितत्वमुपेत्य परं
निगमान्तगिरां हि विशिष्य पुनः ।
विनियोगमिहोह्यते नयत-
स्सदुदाहरणादिविवेचनतः ॥४४॥

5 अथ ब्रह्मकाण्डस्य प्रतिपत्तिविधिपरत्वं पञ्चभिः श्लोकैर्विशदयति—निगमेत्यादिभिः ॥ तत्रादौ यद्यपीत्यादिभाष्यस्य शास्त्रस्येत्यन्तस्य सामान्यतो भावं दर्शयति—निगमेति ॥ ब्रह्मणो निगमवाक्यप्रमितत्वं पूर्वोक्तं स्वीकृत्य निगमान्तगिरां न केवलज्ञानद्वारैव फलवत्त्वम् । किन्तर्हि । ज्ञानविधिद्वारेति विनियोगं सदुदाहरणादिविवेचनतः नयतः न्यायेन ऊह्यते तर्कयति । अत्र भाष्यम्—
10 यद्यपीति ॥ अखण्डार्थः शास्त्रमानको भवति, परन्तु तस्याखण्डस्यालौकिकत्वेऽपि प्रतिपत्तिविधिविषयतयैव शास्त्रस्य समर्पकता भवति । यूपाहवनीयादिपदार्थानामदृष्टाद्यघटितस्वरूपत्वेनालौकिकस्यापि विधिशेषतया समर्पणदर्शनात्, तथैवेहापि ब्रह्मसमर्पणसम्भवात्, विधिमन्तरेण प्रवृत्तिनिवृत्त्योरयोगात्, शास्त्रस्य प्रवृत्तिनिवृत्तिपरत्वनियमात्, प्रवृत्तिनिवृत्त्योश्च
15 विधिनियतत्वात् । इति गोलार्थः ॥४४॥

[18b]

वचसां द्विविधा गतिराकलिता
कृतिसाध्यगता परिनिष्ठितगा ।
सकलं नु वचः फलवद्विदितं
कृतिसाध्यपराद् विधितस्तदपि ॥४५॥

20 अथ ब्रह्मकाण्डे प्रतिपत्तिविधिं व्यवस्थापयितुं सामान्यरूपेण श्रुतिवचसां मर्यादां दर्शयति—वचसामिति ॥ वेदवचसां गतिर्द्विविधा भवति—कृतिसाध्यवस्तुप्रतिपादनपरा परिनिष्ठितगा सिद्धवस्तुप्रतिपादनपरा चेति । तत्र सकलमपि वेदवचनम् कृतिसाध्यपरं सिद्धवस्तुपरं च फलवदेव विदितम् ; निर्दोषत्वात्, परन्तु तदपि फलवत्त्वमपि कृतिसाध्यपराद् विधेरेव भवति । विधि-

परो वेदः स्वयं साक्षादेव कृतिसाध्यपरः प्रवृत्तिनिवृत्त्यन्यतरप्रयोजनवत्प्रमाणमेव। सिद्धार्थपरं वाक्यन्तु विधिवाक्यैकवाक्यतापन्नं सदेव प्रमाणम्। इति विभागः ॥४५॥

प्रतिपत्तिविधिः प्रकृते प्रभवेत्
5 प्रतिपत्त्युदये ननु धर्मजनिः।
अमृतं तत एव भवेद्यजनात्
किल धर्मभवस्त्रिदिवो हि ततः ॥४६॥

अथ ब्रह्मकाण्डस्य प्रतिपत्तिविधिद्वारा फलपर्यवसानं कर्मकाण्डसमं दर्शयति—प्रतिपत्तीति ॥ प्रकृते प्रतिपत्तिविधिः प्रभवेत् समर्थं भवेत्। ततः 10 प्रतिपत्तेरुदये धर्मसम्भवः। ततो धर्मात् अमृतं भवेत्। यागाद् धर्मः, धर्मात् त्रिदिवः स्वर्ग इति किल कर्मकाण्डमर्यादा। तद्वदेव ज्ञानकाण्डमर्यादाऽप्यस्तु। इति भावः ॥४६॥

[19a] अनुबन्धितया विधिना निखिलं
भवतीति च कर्मविदां वचनम्।
15 फलवद्वचनं विमलं सकलं
कथयन्नथ मानयितुं वदति ॥४७॥

अथ तथाहीत्यादिभाष्यमवतारयति—अनुबन्धितयेति ॥ प्रवृत्तिनिवृत्तिपरत्वाच्छास्त्रस्येति वाक्येन विमलम् निर्दोषं सकलं वचनम् शास्त्ररूपं प्रवृत्तिनिवृत्तिकरतया भाष्यकारः कथयन् सन् सर्वमपि वेदान्तवाक्यं विधिना सम्बद्धमेव भवती- 20 त्यर्थकं कर्मविदाम् मीमांसकानां वचनं स्वोक्तार्थे मानयितुम् प्रमाणयितुं वदति। इत्यन्वयः। अत्र भाष्यम्—दृष्टो हि तस्यार्थः वेदस्यार्थः कर्मावबोधनं नाम। चोदनेतीति ॥ क्रियासम्बन्धि प्रवर्तकं वचनं विधिः। तस्येति ॥ तस्य कर्मणो ज्ञानमुपदेशः। तद्भूतानामिति ॥ तत् तस्मात् भूतानाम् सिद्धानां समाम्नायः

क्रियार्थेन **क्रियानिमित्तमेव भवति।** आम्नायस्येति ॥ **वेदस्य** क्रियार्थकत्वाद-क्रियार्थानाम**प्रामाण्यं स्यादित्यर्थः। अत्र सर्वत्र वेदवाक्यानां विध्यन्वये-नार्थवत्त्वमिति ज्ञापितम्। इति विवेकः** ॥४७॥

[19b] अत इत्युपसंश्रितया हि गिरा
5 विषये विनियोजयदेव वचः।
फलवद् भवतीति वदन् विशदं
श्रुतिशीर्षवचोऽपि तथा वदति ॥४८॥

**अथ** अत **इत्यादिवाक्यं व्याकरोति**—अत इति ॥ **निर्दोषं** वचः **प्रवृत्ति-निवृत्तिद्वारा क्वचिद् विषयविशेषे** विनियोजयदेव **पुरुषं** फलवद् भवतीति **कथयन्**
10 **भाष्यकारः** विशदम् **विस्पष्टं श्रुतिशिरोवचो**ऽपि तथा **पुरुषं क्वचिद् विनियो-जयदेव फलवदिति** वदति। **इत्यन्वयः। अत्र भाष्यम्**—अत इति ॥ **पुरुषं क्वचिद् विनियोजयदेवार्थवत्। तद्विधिसङ्गततयव सिद्धार्थपराणामप्यर्थ-वत्त्वम्; तत्सामान्याद् वेदान्तवाक्यानामपि ज्ञानविधिद्वारैवार्थवत्त्वमिति वर्तुलार्थः।** सति चेत्यादि **भाष्यम्।** "प्रतिपत्तिविधिः"[1] **श्लोक एव प्राग्**
15 **विवृतमिति सुगमत्वादिहोपेक्षितम्** ॥४८॥

अथ नन्विति कर्मविलक्षणताम्
परमात्मपदे विशदं कथयन्।
विधिना सदृशेन समाश्रयणम्
नयसान्न भवेदिति चाक्षिपति ॥४९॥

20 **अथ** नन्विहेति **तात्पर्योल्लेखपूर्वकमवतारयति**—अथेति ॥ परमात्मपदे **कर्म-वैलक्षण्यं** विशदं कथयन् **कर्मविधिसदृशेन ज्ञानविधिना ब्रह्मणः** समाश्रयणं नयसात् **नयाधीनं** न भवेदेवेति **नन्वित्यादिग्रन्थेना**क्षिपति। **इत्यर्थः। अत्र भाष्यम्**—नन्विहेति ॥ "धर्मजिज्ञासे"[2]**त्यत्र जिज्ञास्यकर्मणः साध्यादनुष्ठान-**

द्वारा फलम्, "ब्रह्मजिज्ञासे"[1]त्यत्र. जिज्ञास्यं ब्रह्म सिद्धमनुष्ठातुमशक्यमिति ज्ञानादेवाविद्यानिवृत्त्या फलमिति वैलक्षण्यात् कर्मसाम्यं ब्रह्मणो न। इति गोलार्थः ॥४९॥

[20a] इह कर्मसमानमुपासनकं
5 तदुपासनशेषतयात्मपदम् ।
श्रुतिभिर्गदितं शततो वचनै-
रिति नेति तदुत्तरमाश्रयति ॥५०॥

नार्हत्येवमिति सिद्धान्तभाष्यं विवृण्वन्नेवावतारयति- इहेति ॥ अत्र कर्मसमानमुपासनम्। यथा कर्मानुष्ठेयम्, तथोपासनमप्यनुष्ठेयमेव। यथा
10 कर्मशेषतयाऽऽहवनीयदेवतादिसमर्पणम्, तथोपासनाशेषतया ब्रह्मसमर्पणं कृतं श्रुत्या। एवञ्चोपासनाशेषतया श्रुतिभिर्गदितं शतशो वचनैरिति नार्हतीत्यादि-ग्रन्थेनोत्तरयतीत्यर्थः। अत्र भाष्यम्—नार्हतीति ॥ ज्ञानविधिप्रयुक्तत्वेनैव ब्रह्मणः प्रतिपादनात् कर्मविधिवैलक्षण्यं नेत्यर्थः। तत्र "धर्मजिज्ञासे"[2]त्यत्र जिज्ञास्ये कर्मणि साध्ये विधिपर्यवसानम्, "ब्रह्मजिज्ञासे"[3]त्यत्र तु न जिज्ञास्ये
15 ब्रह्मणि विधिः। किन्तर्हि। जिज्ञास्यब्रह्मविषयकज्ञानेच्छाविषये विधिपर्य-वसानम्; ज्ञानस्य साध्यत्वासम्भवात्, प्रधानेऽप्रधाने वा साध्य एव विधि-पर्यवसानौचित्यादिति भेदः। "द्रष्टव्यः"[4] "अन्वेष्टव्यः"[5] "जिज्ञासितव्यः"[6] "उपासीत"[7] "ब्रह्म वेद ब्रह्मैव भवती"[8]त्यादिषु विधिषु विषयीभूतमखण्डस्वरूपं "नित्यः सर्वगत"[9] इत्यादिश्रुतिभिः प्रतिपाद्यते। इति भावः ॥५०॥

20 [20b] तदुपासनतः श्रुतिशासनत-
स्तदुपार्जितमूर्जितमाप्य बलम् ।
शमलं परिधूय ततो विमलं
विपदामपदं प्रतियाति पदम् ॥५१॥

अथ तदुपासनाच्चेति भाष्यभावं विशदयति—तदिति ॥ श्रुतिशासनेन
25 तदुपासनतः ब्रह्मोपासनतः तत् प्रसिद्धम् उपार्जितम् उपासनोपार्जितम् ऊर्जितम्

दृढतरं बलं प्राप्य शमलम् अविद्यादिनिखिलदोषजालं परिधूय निराकृत्य ततः अविद्याविधूननात् विमलम् निर्मलं विपदाम् संसृतीनाम् अपदम् अस्थानं पदम् ब्रह्मस्वरूपं वेत्ता प्रतियाति प्राप्नोतीत्यर्थः। तदुपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षः फलं भविष्यतीति भाष्यं विवृतप्रायम्। वेदान्तानां विधिसंस्पर्शाभावेऽनिष्टं
5 दर्शयति भाष्ये—कर्तव्येति ॥ वेदान्तानां विध्यननुप्रवेशे सिद्धार्थानामिवाप्रामाण्यं स्यात्। इतरत् सुगमम् ॥५१॥

[21a] ननु रज्जुभुजङ्गमबुद्धिसमं
भविबुद्धिरपि स्फुटतः स्फुटिता।
भवतु स्फुरिताश्रयशुद्धधिया
10 ह्यविवेकभवे भविसपमती ॥५२॥

अथ सर्पमतिर्यथा रज्जुज्ञानाद् निवर्तते, तथाऽसंसारिज्ञानात् संसार्यात्मबुद्धिर्निवर्तत इत्यर्थकं नन्वित्यादि भाष्यं विवृणोति—नन्विति ॥ स्फुरिताश्रयशुद्धधिया स्फुरितम् स्पष्टतरं प्रकाशमानो य आश्रयः संसार्यधिष्ठानभूतः शुद्धोऽखण्डार्थरूपः, तस्य धिया बुद्ध्या साक्षात्कारेण भविबुद्धिरपि संसारि-
15 बुद्धिरपि स्फुटतः स्पष्टं स्फुटिता भग्ना। रज्जुभुजङ्गमबुद्धिसमं भवतु यथा रज्जुज्ञानात् सर्पमतिर्नश्यति, तथा भवत्विति यावत्। अधिष्ठानज्ञानादारोप्यनिवृत्तौ हेतुमाह—अविवेकभवे इति ॥ भविमतिः सर्पमतिश्चाधिष्ठानाज्ञानभवे भवतः। तेनाधिष्ठानसाक्षात्काराभ्यां ते भ्रान्ती निवर्तेते। इति भावः ॥५२॥

[21b] इह रज्जुरिति श्रवणेन फणि-
20 भ्रमजातभयादिनिवृत्तिरिति।
कथनादपदीपतले विलयो
नहि सर्पमतेरिति देशिकधीः ॥५३॥

अथ नन्वित्यादिसिद्धान्तिवक्तृकभाष्यभावमक्षरस्वारस्येन विशदयति—इहेति ॥ ननु वस्तुमात्रकथनेऽपि रज्जुरियम् नायं सर्प इत्यादौ भ्रान्तिजनित-

भीतिनिवर्तनेनार्थवत्त्वं दृष्टमिति भाष्यम्। अत्र भ्रान्तिनिवृत्तिकथनमन्तरा भ्रान्तिजनितभीतिनिवृत्तिकथनाद् वस्तुमात्रकथनेऽपीति शब्दजन्यज्ञानस्यैवोपादानाद् दृढतराधिष्ठानसाक्षात्कारे जात इत्यकथनात् परोक्षशाब्दनिर्धारणात्मकज्ञानाद् भयकम्पादिनिवृत्तिमात्रं भवति। ननु महान्धकारस्थसर्पभ्रम-
5 निवृत्तिरपि विना दीपादिप्रकाशजनितसाक्षात्कारं भवति ; तथैव लोकानुभवदर्शनात्। एवं चेह पुरतो रज्जुरिति श्रवणेन शब्दजनितनिश्चयात्मकपरोक्षज्ञानेन फणिभ्रमजातभयादिनिवृत्तिर्भवतीति भाष्ये स्पष्टं कथनाद् अपदीपतले दीपरहितस्थले महान्धकारवति सर्पमतेर्विलयो नहि भवतीति देशिकधीर्भवति। इत्यर्थः ॥५३॥

10 [22a] अभवीति च शब्दजवृत्तिवशा-
दभिमानतदीयभवोपलयः।
परिपक्वतमात्ममतेः प्रथमा-
वरणप्रलयोऽपि भवेदिति च ॥५४॥

अथ तथेहेति दार्ष्टान्तिकभाष्यं व्याचष्टे—अभवीति चेति ॥ तथेहाप्यसंसार्या-
15 त्मवस्तुकथनेन संसारित्वभ्रान्तिनिवर्तनेनार्थवत्त्वं स्यादिति भाष्यम्। असंसार्यात्मेति ॥ शब्दजन्यदृढतरनिश्चयेन संसारित्वभ्रान्तिनिवर्तनेन अभिमानात्मकसंसारित्वभ्रान्तिनिवर्तनेन प्रयोजनवत्त्वं स्यादित्यर्थः। अत्र दृष्टान्ते भ्रमनिवृत्तिमन्तरा भयकम्पादिनिवृत्तिनिर्देशाद् दार्ष्टान्तिके मूलावरणायत्तशरीरित्वनिवर्तनं मूलाविद्यानिवृत्तिमपरोक्षसाक्षात्कारजनितामन्तरा न भवति। परोक्षशाब्द-
20 दृढतरनिश्चयात्त्वाभिमानिकः संसारो निवर्तत इति सिद्ध्यति। एवं च त्वमभवो असंसारीति शब्दजन्यपरोक्षनिश्चयवशादभिमानस्य तज्जनितसंसारस्य च विलयो भवति, नतु मूलाविद्यायाः, परिपक्वतमात्मसाक्षात्कारात्तु दीपादिस्थल इवाधिष्ठानसाक्षात्कारादारोपितार्थस्य प्रथमावरणस्याविद्याख्यस्य प्रकर्षेण निरुत्थानलक्षणेन लयो भवेदिति च देशिकधीर्भवति।
25 इत्यन्वयः ॥५४॥

[23a] इति वित्तिमतावगमेन जनो
रहितो निजमेव मतं वदति।

अत एव परत्र गुरुप्रवरो
मुहुरर्थमिमं कलयत्यमलम् ॥५५॥

[22b]अथ नन्वित्यादिभाष्ये संसारित्वं द्विविधम्—मूलाविद्याकृतम्, अभिमानकृतं चेति। दृष्टान्तेऽपि रज्जुसर्पस्थले सर्पभ्रम एकः, तज्जनित-
5 भयादिश्चापरः। एवं ज्ञानं द्विविधम्—शाब्दम्, साक्षात्कारश्चेति। तत्र शाब्दज्ञानादुभयत्रापि यथायोगमनुभवानुरोधेन भयादेरभिमानादेश्च निवृत्तिः, अधिष्ठानसाक्षात्कारात्तु सर्पशरीरित्वयोर्निवृत्तिरिति निष्कर्षादुत्तरत्र च भाष्ये नावगतब्रह्मात्मभावस्येत्यस्मिन् स्पष्टमेवैतदर्थप्रतिपादनात् स्यादेतदेवमित्यादि भाष्यं पूर्वपक्षिवक्तृकमसङ्गतमेव भवेत्। तथाहि—स्यादेतदेवम्, यदि रज्जुस्वरूप-
10 श्रवण इव सर्पभ्रान्तिः संसारित्वभ्रान्तिर्ब्रह्मस्वरूपश्रवणमात्रेण निवर्तेत, नतु तथा निवर्तते; श्रुतब्रह्मणोऽपि यथापूर्वं सुखदुःखादिसंसारधर्मदर्शनादिति भाष्यम्। तत्र नन्विति ग्रन्थे नायं सर्प इति शाब्दनिश्चयेन भ्रमजन्यभयकम्पादेरेव निवृत्ति-रिति कथनद्वारा मन्दान्धकारस्थलभवस्य भ्रमस्य दीपादिप्रकाशजन्यरज्जु-साक्षात्काराभावेन निवृत्तिरिति स्पष्टमेव सूचनात् यदि रज्जुस्वरूपश्रवण इव
15 सर्पभ्रान्तिरिति शाब्दज्ञानेनाधिष्ठानसाक्षात्कारमन्तरा सर्पभ्रमनिवृत्तेरप्रस्तुतत्वे-नानुभवविरुद्धत्वेन चेह तदुल्लेखस्तावदनुक्तोपालम्भ एव पर्यवस्येत्। किञ्च संसारित्वभ्रान्तिरित्यादिकमपि विसंष्ठुलमेव; संसारित्वस्य मूलाविद्याभि-मानकृततया द्विविधत्वेन शाब्दब्रह्मनिश्चयेनाभिमानभवसंसारनिवृत्तिः, साक्षा-त्कारादेव मूलाविद्याविलयेन शरीरित्वलक्षणसंसारनिवृत्तिरिति सिद्धेः नतु
20 तथा निवर्तत इति कथनासाङ्गत्यापत्तेः, शाब्दज्ञानेन शाखासंसारनिवृत्तेः, साक्षात्कारेण मूलसंसारनिवृत्तेश्च विभजनात्। तस्मादसङ्गतं स्यादेतदित्यादि भाष्यमित्याशङ्क्य तद् भाष्यं तात्पर्योद्घाटनेन सङ्गमयति—इतीति ॥ विचि-मतस्य ज्ञानमतस्य योऽयमुक्तरीत्याऽवगमः, तेन रहितः तन्मतज्ञानरहितः संसारविभागभ्रमतत्कार्यविभागज्ञानरहितो निजमेव मतं स्थूलबुद्धया वदति।
25 पराभिप्रायमजानन्नेव वदतीति यावत्। अत एव गुरुप्रवरः आचार्योऽत एव हेतोः, यतः स्वाभिप्रायं पूर्वपक्षी न जानाति, अत एव हेतोस्तस्य स्वाभिप्रायं ज्ञापयितुं मुहुः पुनःपुनरमलमिममेवार्थं निरुक्तं कलयति निर्दिशति परत्र उत्तरत्र नावगतेत्यादिना ग्रन्थेन। तथाच पराभिप्रायमजानन्नेवाक्षिपति। इत्यर्थः ॥५५॥

[23b]　विदितेऽपि परात्मनि साधुतया
नहि संसृतिदुःखशमः क्वचन ।
उरगः खलु शाम्यति रज्जुधिये-
त्युचितं ननु तत्र तथाविधता ॥५६॥

5　स्यादेतदेवमित्यत्र श्रुतब्रह्मणोऽपीत्यादिभाष्यं व्याचष्टे—विदितेऽपीति ॥ उपनिषद्वाक्यैः साधुतया षड्विधलिङ्गादियुक्तत्वेन परात्मनि अखण्डलक्षणे विदितेऽपि संसारदुःखशमनं क्वापि न दृश्यत एव । उरगस्तु रज्जुज्ञानात् शब्दजनिताद् नश्यतीति तत्र तथाविधता अधिष्ठानज्ञानादारोप्यविनाश इत्येतदुचितमेव । ननु निश्चयेन । इत्यर्थः ॥५६॥

10　मननं च निरन्तरचिन्तनम-
प्युचिते विधिसङ्गमतो भवतः ।
यदि चात्र विधेरविवक्षितता
श्रवणेन मतेरितरे तु वृथा ॥५७॥

अथ "श्रोतव्य"[1] इत्यादिभाष्यं युक्त्यन्तरपरं व्याचष्टे—मननं चेति ॥ अत्र 15 यदि ज्ञानं विधेयम्, तर्हि अदृष्टार्थत्वाद् ज्ञानस्य दर्शात्रिकवत् श्रवणं मननं निदिध्यासनं चादृष्टत्रयावहं वचनादनुष्ठेयं त्रयमपि भवति । एवं च यद्यत्र विधेरविवक्षा, ज्ञानमेव केवलं विवक्षितम्, तर्हि श्रवणेनैव ज्ञानसिद्धेर्मनननिदिध्यासने वृथैव भवतः । यदि विधिः, तर्हि विधिसङ्गमतो मनननिदिध्यासने श्रवणवदनुष्ठेये अदृष्टार्थे भवतः । इति भावः । भाष्यं सुगमम् ॥५७॥

20 [24a]　ननु चात्रवचःप्रमुखैर्वचनैः
प्रतिपक्षममुं परिहर्तुमिमे ।
गुरवो विदुषामुरुनीतिचयै-
स्सदनुत्तरमुत्तरमुद्ददति ॥५८॥

अथ अत्राभिधीयत इत्यादिसिद्धान्तग्रन्थमवतारयति—नन्विति ॥ अत्राभिधीयत इत्यादिवचनैरमुं पूर्वोक्तं पूर्वपक्षं परिहर्तुं विदुषाम् पण्डितानां गुरव इमे शङ्कराचार्याः उरुभिः अधिकैर्नयसमुदायैः सत् उत्तमम् अनुत्तरम् अग्र उत्तररहितमीदृशमुत्तरमुद्ददति उच्चैः प्रयच्छन्ति । तथाच अत्राभिधीयत इत्यादि-
5 रुत्तरग्रन्थ इति यावत् ॥५८॥

कृतकाकृतके हि फले भवत-
स्सहितातिशयासहितातिशये ।
अतिनाश्यविनाशितमे विमते
कथमेकविधं भजतस्तु विधिम् ॥५९॥

10 अथ न कर्मेत्यादिना ब्रह्मोपदेशो युक्त इत्यन्तेन सङ्ग्रहविस्ताराभ्यां कर्मब्रह्मविद्यावैलक्षण्यं विवेचितं बुद्धिवैशद्यायाल्पाक्षरैर्दर्शयति—कृतकेति ॥ फले कर्मब्रह्मविद्याफले कृतकाकृतके भवतः कर्मफलं कृतकम्, ब्रह्मविद्याफलमकृतम् नित्यसिद्धम् । पुनश्च ते सहितातिशयासहितातिशये कमफलं सातिशयम्, ब्रह्मविद्याफलं निरतिशयम् । पुनश्च ते अतिनाश्यविनाशितमे भवतः कर्मफल-
15 मतिक्षयिष्णु क्षणविनश्वरम्, ब्रह्मविद्याफलमविनाशितमम्, सर्वथाऽपि विनाशरहितम् । पुनश्च ते विमते विरुद्धे नानाप्रकारे । ईदृशे कर्मब्रह्मविद्याफले परस्परविरुद्धे एकजातीयं विधिं कथं भजतः । अत्र शरीरमित्यारभ्य श्रुतिस्मृतिन्यायसिद्धमनुवदतीत्यन्तं कर्मफले जन्यत्वसातिशयत्वविनश्वरत्वाद्युपपादनपरम् । "अशरीरं वावे"[1]त्यारभ्य ब्रह्मोपदेशो युक्त इत्यन्तेन ब्रह्मविद्याफले तावद-
20 कृतकत्वनिरतिशयत्वाविनाशित्वादि प्रतिपाद्यते । इति विभागः ॥५९॥

[24b] विहितप्रतिषिद्धतया द्विविधं
वपुरादिभवं किल कर्म मतम् ।
विविधं सुखदुःखकरं जगता-
मधरोत्तरलोकभुवामुचितम् ॥६०॥

**अथ** शरीरमित्यादेः प्रसिद्धेरित्यन्तस्य **धर्माधर्मतत्फलविभागादिपरस्य भाष्यस्य भावं विशदयति**—विहितेति ॥ विहितप्रतिषिद्धतया "अहरहः सन्ध्यामुपासीत"[1] "वसन्ते वसन्ते ज्योतिषा यजेत"[2] "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत"[3] "ज्योतिष्टोमेन स्वर्गकामो यजेत"[4] "न सुरां पिबेत्"[5] "न कलञ्जं भक्षयेदि"[6]**त्येवं**
5 **विहितप्रतिषिद्धत्वेन** वपुरादिभवम् **शरीरवाङ्मनोभिर्जातं** कर्म द्विविधं मतम् **धर्मोऽधर्म इति** विविधम् **नानाविधम्; पापपुण्ययोरवान्तरभेदेनानेकत्वात** अधरोत्तरलोकभुवाम् **अधरलोकोर्ध्वलोकभुवाम्** जगतां **तत्तदधिकारोचितं** सुखदुःखकरं **भवति** किलेत्यन्वयः। **अत्र भाष्यम्**—शरीरमिति ॥ **कायिकवाचिकमानसिकतया त्रिविधधर्मस्वरूपं श्रुतिस्मृतिसिद्धं** "धर्मजिज्ञासे"[7]**ति सूत्रितम्।**
10 **अधर्मोऽपि धर्मप्रतियोगितया हेयत्वाय सूत्रितकल्प एव। तथाच विहितप्रतिषिद्धावर्थानर्थरूपौ धर्माधर्मौ तत्फले सुखदुःखे शरीरादिभिरुपभुज्यमाने ससाधने सर्वलोकप्रसिद्धे। इति वर्तुलार्थः ॥६०॥**

[25a]      सुकृतासुकृतप्रतिबद्धतनुं
      प्रतिपादयति श्रुतिसंवलितम्।
15      भवमार्यवरो विशदैर्वचनै-
      स्त्रिविधां विभजन्ननु कर्मततिम् ॥६१॥

**अथ यौ धर्माधर्मौ प्रस्तुतौ, तयोर्मध्ये धर्मतत्साधनतत्साध्यतारतम्यपरसङ्क्षेपोक्तिलक्षणं सश्रुतिप्रमाणोपन्यासं** एवमित्यादिभाष्यं **च तात्पर्यतो विवृणोति**—सुकृतेति ॥ आर्यवरः **भाष्यकृत्** त्रिविधाम् **शारीरवाचिकमानसभेदेन**
20 **त्रिविधां** कर्मततिं विशदैर्वचनैर्विभजन् **सन्** सुकृतासुकृतप्रतिबद्धतनुम् **धर्माधर्मकृतवपुषं** भवं श्रुतिसंवलितं प्रतिपादयति। **इत्यन्वयः। अत्र भाष्यम्**—मनुष्यत्वादिति ॥ **मनुष्यमारभ्य ब्रह्मपर्यन्तं सुखतारतम्याद् धर्मतारतम्यम्, तच्चार्थित्वविद्वत्तादितारतम्याद् भवति। एवं चोपासनासंवलितकर्मणा शुभेन देवयानेन गमनम्, केवलेनेष्टापूर्तादिना पितृयाणेन गमनम्, तत्रापि सुखतारतम्यं**
25 "यावत्सम्पातमुषित्वे"[1]**ति शास्त्रवेद्यं भवतीति गोलार्थः।** तथा मनुष्यादिष्विति ॥ **मनुष्यनारकादिषु स्थावरपर्यन्तेषु सुखतारतम्यं धर्मतारतम्यादेव भवति।**

तथेति ॥ ऊर्ध्वगतेषु देवादिष्वधोगतेषु नारकादिषु च दुःखतारतम्यं प्रतिषेधगमिताधर्मतारतम्यात्, तच्च तत्कर्तृतारतम्यादित्यर्थः। एवमिति ॥ मूलाविद्यामिथ्याज्ञानाभिमानरागादिदोषतारतम्याद् धर्माधर्मतारतम्यनिमित्त-शरीरादितारतम्यात् सुखदुःखतारतम्यं भवतीति वर्तुलार्थः। अयं सर्वोऽप्यर्थः 5 श्रुतिस्मृतिन्यायप्रसिद्धो भवति। तथाचेति ॥ श्रुतिः संसारमुक्तमनु-वदतीत्यन्वयः ॥ न ह वै सशरीरस्ये[1]ति ॥ सशरीरस्य अविद्यावशात् कर्मा-यत्तशरीरद्वयवतोऽभिमानाधीनशरीरवतश्च सुखदुःखापहतिर्नास्तीत्यर्थः; शरीरित्वस्य धर्माधर्माधीनत्वात्। इति भावः ॥६१॥

[25b] अशरीरमिति श्रुतिशासनतः
10 परमात्मपदं सदखण्डसुखम्।
इतरश्रुतिभिश्च विशुद्धतमम्
यतिपञ्चमुखः परिशोधयति ॥६२॥

अथ मोक्षस्वरूपविवेचनपरम् अशरीरं वावेत्यारब्धं भाष्यं तात्पर्यतः सङ्ग्रहेण विशदयन्नवतारयति—अशरीरमिति ॥ सदखण्डसुखं परमात्मपदं विशुद्ध-15 तमं यतिसिंहः "अशरीरं वाव सन्तमि"[2]ति श्रुतिकृतशिक्षणेनान्याभिश्च परि-शोधयति आविद्यकमलपरिहारेण विवेचयति। इत्यर्थः ॥६२॥

[26a] सशरीरकता द्विविधावरण-
प्रभवाप्यभिमानभवा च दृढा।
अशरीरकताऽपि तयोरुभयो-
20 र्द्विविधा हि विपर्ययतो भवति ॥६३॥

अथ "न ह वै सशरीरस्ये"[3]ति श्रुतौ शरीरित्वं प्रतियोगिभूतं विभजन् "अशरीरं वाव सन्तमि"[3]ति श्रुतिपरिगृहीताशरीरित्वं विभजते—सशरीरकतेति ॥ सशरीरत्वं द्विविधम्—आवरणलक्षणाविद्याप्रभवम्, अभिमानप्रभवं चेति। अविद्याया अनादिसम्बन्धात् सूक्ष्मदेहसम्बन्धः, सूक्ष्मदेहगतकर्मवशात् स्थूल-

देहसम्बन्धः, तत्राविद्याकृतदेहसम्बन्धोऽयुतसिद्धो न भ्रमाधीनः, अभिमानाधीनस्तु भ्रमो निश्चयरूपपरोक्षज्ञाननिवर्त्योऽपि। अशरीरकत्वमपि तयोरुभयोः शरीरित्वयोर्विपर्ययादभावाद् द्विविधं भवति। तत्रापरोक्षसाक्षात्कारविशेषादविद्यानिवृत्त्या मुख्यमशरीरित्वं विदेहकैवल्यलक्षणम्, निश्चयपरोक्षज्ञानादभिमाननिवृत्त्या गौणमशरीरित्वं जीवन्मुक्तिलक्षणम्। इति विभागः ॥६३॥

[26b] प्रिययुक्त्वमिहास्ति तु साध्यतया
सुकृतोद्भवता ननु साधनकम्।
इह साध्यविपर्ययसाधनतः
सुकृतोद्भवता नहि मुक्तिपदे ॥६४॥

अथाशरीरश्रुतिपूर्वकं प्रियाप्रियस्पर्शनप्रतिषेधाच्चेति भाष्यं द्वेधा द्विविधानुमानविधया योजयति श्लोकैश्चतुर्भिः—प्रियेति॥ संसारोत्कर्षो धर्मकार्यत्वाद् प्रियस्पर्शीत्यनुमानम्। तत्र प्रिययुक्त्वं साध्यम्। धर्मकार्यत्वं साधनम्। यद्यद् धर्मकार्यम्, तत्तत् प्रिययुगित्यन्वयव्याप्तिः, यत्र प्रिययुक्त्वाभावः, तत्र धर्मकार्यत्वाभावो मोक्ष इति व्यतिरेकव्याप्तिः। तत्र "अशरीरं वाव सन्तमि"[1]ति श्रुत्या प्रियस्पर्शनस्य साध्यस्य विपर्ययकथनाद् मुक्तौ साधनस्य धर्मकार्यत्वस्यापि व्यतिरेको बोधितो भवति; साध्याभावे हेत्वभावावश्यम्भावात्। अत्र प्रिययुक्त्वं साध्यत्वेनास्ति। सुकृतोद्भवत्वं साधनं भवति। "अशरीरमि"[2]ति श्रुत्या साध्यविपर्ययशासनाद् मुक्तिपदे धर्मकार्यत्वं न हि। इति गोलार्थः ॥६४॥

[27a] सुकृताकृतता किल साध्यमथो
ननु हेतुरिह प्रियशून्यकता।
अथ हेतुरिहास्तु न साध्यमिति
श्रुतिशासनतः शिथिलीभवति ॥६५॥

सुकृतेति ॥ यद्वा— अशरीरत्वलक्षणो मोक्षो न धर्मजन्यः, प्रियस्पर्शन-शून्यत्वादित्यनुमानं विवेचनीयम्। अशरीरमिति श्रुत्या हेतुरुपपादितः। अत्र सुकृताजनितत्वं साध्यम्। प्रियशून्यत्वं हेतुरित्यन्वयः। प्रियाप्रियस्पर्शन-प्रतिषेधादिति भाष्येण प्रियस्पर्शनाभावेन हेतुना मोक्षस्य धर्मकार्यत्वाभावः
5 साध्यते। धर्मकार्यत्वे हीत्यादिभाष्येण तु हेतुः प्रियास्पर्शनमस्तु धर्मकार्य-त्वभावो माऽस्त्वित्यप्रयोजकत्वशङ्का वार्यते तर्केण। यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यादितिवत् प्रकृते यदि धर्मजन्यत्वं न स्यात्, प्रियस्पर्शनं श्रुत्युक्तं न स्यादिति तर्कोऽवतारणीयः; तर्कस्यापि व्याप्तिग्रहमूलकत्वात्, धर्मजन्यत्वमस्तु, प्रियस्पर्शनं माऽस्तु, इत्यप्रयोजकत्वशङ्कावारणाय अशरीरत्वमेवे-
10 त्यादिभाष्यम्। अशरीरत्वमेव मोक्षस्वरूपं धर्मकार्यं भव[27b]तु, प्रिय-स्पर्शनं मा भवतु, इत्यप्रयोजकत्वशङ्का इति चेदित्यन्तेन प्रतिपादिता। नेत्यादिना तु तत्परिहारः। अत्र मोक्षस्य धर्मकार्यत्वे प्रियस्पर्शित्वमापाद्यते, मोक्षोऽपि प्रियस्पर्शी स्यात्; धर्मकार्यत्वात्। धर्मकार्यत्वेन प्रियस्पर्शित्व इष्टापत्तौ "अशरीरं वाव सन्तमि"[1]ति श्रुतिविरोधः। धर्मकार्यत्वलक्षणहेतुरपि
15 मोक्षेऽसिद्ध एवेति तस्य अशरीरत्वस्य स्वाभाविकत्वादित्यादिना अशरीरं शरीरेष्वि"[2]त्यादिना साध्यते। अथेति ॥ मोक्षो धर्माजन्यः प्रियास्पर्शित्वा-दित्यनुमाने हेतुरस्तु, साध्यं माऽस्तु, इत्यप्रयोजकत्व आशङ्किते "अशरीरं शरीरेष्वि"[3]त्यादिश्रुतावशरीरत्वलक्षणमोक्षस्य स्वाभाविकत्वेन निर्देशेन धर्म-जन्यताया वक्तुमशक्यत्वादिति श्रुत्यनुशासनमेव तामप्रयोजकत्वशङ्कां शिथि-
20 लयतीति "अशरीरं शरीरेष्वि"[4]त्याद्याः श्रुतयः शरीरादौ सत्यपि तत्कृतसङ्गा-भावादशरीरत्वादिकं शुद्धे स्वाभाविकं बोधयन्ति। इति विवेचनीयम् ॥६५॥

सशरीरकता किल साध्यतनुः
सुखदुःखयुतिर्ननु साधनकम्।
अथ साध्यविपर्ययशंसनतः
25 प्रियतद्विपरीतयुतिर्न भवेत् ॥६६॥

अशरीरवन्धेति सिद्धमनुमानं दर्शयति—सशरीरकतेति ॥ अयं शरीरी,

प्रियाप्रियस्पर्शात् । यः प्रियादिस्पर्शी स शरीरी, योऽशरीरो स प्रियादिरहित इत्यन्वयव्यतिरेकव्याप्ती । सशरीरकत्वं साध्यशरीरम् । सुखादियुतिः साधनम् । तत्राशरीरमिति साध्यविपर्ययकथनात् प्रियाप्रिययोगो न भवेत् । इत्यन्वयः ॥६६॥

5 [28a] अशरीरकता किल साधनकं
प्रियतद्विपरीतविहीनकता ।
इह साध्यतनुः श्रुतिहार्दवशा-
दिति साधु स्मृतिर्द्विविधाऽनुमितौ ॥६७॥

अथ "अशरीरं वाव सन्तमि"[1]ति श्रुत्युपात्तमनुमानं यथाश्रुति दर्शयति—
10 अशरीरकतेति ॥ अयं प्रियाप्रियास्पर्शी, अशरीरत्वात्, योऽशरीरो स प्रियादिरहितः, यः प्रियादिमान् स शरीरीत्यन्वयव्यतिरेकौ । अशरीरत्वं हेतुः, प्रियादिराहित्यं साध्यम्, इति श्रुतिभावादन्वयविधया व्यतिरेकविधया वा द्विधाऽनुमितिः । इति भावः ॥६७॥

परिणामितयाऽन्यमताश्रयणा-
20 न्नहि नित्यमतोऽतिविलक्षणकम् ।
विमलं क्रियया रहितं सततम्
रहितं निखिलैरपि मुक्तिपदम् ॥६८॥

अथ अत एवानुष्ठेयफलविलक्षणमित्यादि भाष्यं परिणामिनित्यताखण्डनपूर्वकं कूटस्थनित्यतासाधकं भावेन विवृणोति—परिणामितयेति ॥ साङ्ख्यादिमते
25 यथा गुणानां परिणामिनित्यत्वम्, तथा परिणामि नित्यं न भवति । अतः परिणामिनित्यादतिविलक्षणकं विमलम् सकलाविद्याभिमानादिमलरहितम्, अत एव क्रियया विकारेण रहितम्, निखिलैरपि प्रपञ्चपदार्थैः सततमपि रहितम्, असङ्गत्वात् । ईदृशं मुक्तिपदम् । इति योजना । अत्र भाष्यम्—अत एवेति ॥

कर्मफलविलक्षणमशरीरत्वं मुक्तरूपं परिणामिनित्येभ्यः परमतसिद्धेभ्यः पृथिव्यादिसत्त्वादिगुणेभ्यो विजातीयं कूटस्थनित्यादिरूपं सकलवस्तुरहितं धर्मादिभ्यो विलक्षणम्। इति वर्तुलार्थः ॥६८॥

[28b] अत इत्युपनद्धगिरा यतिराट्

5 प्रथमेन समन्वयसूत्रमिदम्।

नियमं परसम्मतमाकलयन्

वदति स्फुटमेकवचस्कतया ॥६९॥

अथ अतस्तद्ब्रह्म, यस्येयं जिज्ञासा प्रस्तुतेति भाष्येण यतो मोक्षः कूटस्थनित्यः, अतो हेतोस्तत्कूटस्थनित्यं मोक्षाख्यमशरीरत्वं ब्रह्म, यस्या"थातो

10 ब्रह्मजिज्ञासे"[1]ति जिज्ञासा प्रसक्ता उपक्रान्तेत्यर्थकेन सूचितं प्रथमसूत्रस्य समन्वयसूत्रेण जन्मादिशास्त्रसूत्राभ्यां सहैकवाक्यत्वं दर्शयति—अत इतीति ॥ यतिराट् देशिकः प्रथमेन जिज्ञासासूत्रेण सह समन्वयसूत्रमिदं प्रथमसूत्रार्थतया परवादिसम्मतं नियमम् प्रतिज्ञाम् आकलयन् अवलम्बमानः स्फुटम् स्पष्टम् एकवचस्कतया एकवाक्यत्वेन वदति। इत्यन्वयः ॥६९॥

15 विधिनाऽऽकलितं यदि मुक्तिपदं

ननु नश्वरमेव भवेत्सुखवत्।

श्रुतिभिर्नयकोविदवादिजनै-

रपि नित्यतयैव निरुक्तमिदम् ॥७०॥

अथ तद्यदीत्यादि भाष्यं ज्ञाने यदि विधिः, तज्ज्ञानजधर्मेण यदि च मोक्षो

20 जन्यः, तर्ह्यनित्यः स्यात्, मोक्षो नित्यश्च सर्वसम्मत इत्याद्यर्थकं तात्पर्यतो विवृणोति—विधिनेति ॥ मुक्तिपदं विधिना ज्ञानविषयेण यदि आकलितम् आक्रान्तम्, तर्हि धर्मजन्यत्वेनानित्यत्वमेव वैषयिकसुखवत् स्यात्। न चेष्टापत्तिरिति वक्तुं शक्यम्; श्रुतिभिर्नित्यत्वप्रतिपादिकाभिर्न्यायसमर्थनैरपीदं

मुक्तिपदं नित्यत्वेनैव कथितं भवति। तथाच विधिस्पर्शो मोक्षस्यानुचित इति भावः। तद्यदीत्यादि भाष्यन्तु सुगमयोजनम् ॥७०॥

[29a] अपिचेतिवचोभिरिमे गुरवः
कथयन्ति पराङ्मुखमेव विधेः।
5 सनयश्रुतिभिः परमात्मपदं
प्रहतावरणं प्रतिपत्तिबलात् ॥७१॥

अथ युक्त्यन्तरमपिचेत्यादिभाष्यं प्रतीकग्रहणपूर्वकं व्याचष्टे त्रिभिः श्लोकैः—अपि चेत्यादिभिः ॥ इमे गुरवः आचार्या अपिचेत्यादिवचोभिः प्रतिपत्ति-बलाद् ज्ञानबलात् प्रहतावरणम् विनष्टाविद्यावरणं परमात्मपदमखण्डार्थलक्षणं
10 विधेः पराङ्मुखमेव विध्यस्पृष्टमेव सनयश्रुतिभिः न्यायसंवलितश्रुतिनिर्देशद्वारा कथयन्ति। इत्यन्वयः ॥७१॥

प्रतिपत्समकालतयैव फलं
कथयन्ति गिरो निगमान्तगताः।
फलकर्मवपुर्विवरे स्फुटतः
15 सदद्दष्टमितीह विलक्षणता ॥७२॥

प्रतिपदिति ॥ निगमान्तगताः वेदान्तगताः गिरः प्रतिपत्समकालतया ज्ञान-समकालत्वेन फलम् कथयन्ति—"ब्रह्म वेद ब्रह्मैव भवती"[1]त्येवमाद्याः। फलकर्म-वपुर्विवरे फलस्य स्वर्गादिलक्षणस्य कर्मणश्च भूलोके क्रियमाणस्यान्तरे मध्ये अदृष्टम् धर्मादिलक्षणं सद् विद्यमानम् इति हेतोः इह मुक्तिस्थले ज्ञानसमकाल-
20 फलवत्त्वाद् विलक्षणता भवति। एवञ्च विधिस्पर्शमन्तरैव वेदान्तभाग-प्रामाण्यं भवेदेवेति भावः। अत्र भाष्यम्—"ब्रह्म वेद ब्रह्मैव भवति"[2] "विद्वान् न बिभेती"[3]ति ज्ञानफलयोरेकालावरोधात् समकालता। दृष्टे कर्माणि क्षीयन्त इति दर्शनस्य कार्यनाशकस्याद्दष्टद्वारा मोक्षाधायकत्वमनुचितम्। अभयं

प्राप्तोऽसीति फलस्य सिद्धत्वनिर्देशाद् मध्येऽदृष्टद्वारा कालान्तरे फलमित्येतद् न भवति। "अहं ब्रह्मास्मी"[1]ति "आत्मानमेवावेदि"[2]ति "एकत्वमनुपश्यत"[3] इति फलस्य सिद्धत्वप्रदर्शनेनादृष्टसाधनता निराकृतैवेत्यर्थः। "ब्रह्म वेदे"[4]-त्याद्याः श्रुतयो ब्रह्मज्ञानोत्तरमेव फलं दर्शयन्त्यो मध्ये कर्तव्यमदृष्टं नेति
5 बोधयन्तीति गोलार्थः। तथेति॥ "पश्यन् प्रतिपेदे"[5] इत्यत्र तिष्ठन् गायतीत्यत्रेव "लक्षणहेत्वोः क्रियाया"[6] इति सूत्रेण क्रियां प्रति लक्षणहेत्वो-र्वर्तमानाद् धातोः परस्य लटः शतृशानचौ भवत इति शतृप्रत्ययसा-मर्थ्याद् मध्ये कर्तव्यान्तरं नेति ज्ञापितमिति वर्तुलार्थः। तिष्ठन् गायतीत्यत्र गायतेः स्थितिर्लक्षणभूता, पश्यन् प्रपेद इत्यत्र प्रपत्तौ दर्शनं हेतुरिति
10 भेदः ॥७२॥

[29b] शतशः श्रुतयः प्रवदन्ति परं
प्रतिबन्धनिवृत्तिवशादमृतम्।
इह गौ त म सूत्रमुदाहरता
गुरुणा कृतमेतदहोऽतिदृढम् ॥७३॥

15 अथ "त्वं हि नः पिता य"[7]इत्यादिग्रन्थम् गौ त म सूत्रावलम्बिभाष्यं च तात्पर्यतो विशदयति—शतश इति॥ शतशः श्रुतयः "त्वं हि न"[8]इत्युदाहृता-नुदाहृतभेदभिन्नाः प्रतिबन्धनिवृत्तिवशादेवामृतं परं वदन्ति। तथाच कर्तव्यमध्येऽ-दृष्टं नास्तीति स्पष्टीकृतमिति भावः। तथाचेत्यादिना गौ त म सूत्रमुदाहरता गुरुणा भाष्यकृता एतत् प्रतिबन्धनिवृत्तिवशादेवामृतमित्येतत् अहोऽतिदृढं
20 कृतमित्यन्वयः। भाष्यम् "त्वं हि न"[9] इति "अविद्यायाः परं पारमि"[10]त्यनेना-ज्ञानप्रतिबन्धनिवृत्तिः सूचिता। श्रुतमिति॥ "तमसः पारमि"[11]त्यत्राप्यज्ञान-निवृत्तिरेव विवक्षितेति भावः। इतरदतिरोहितार्थम् ॥७३॥

[30a] वपुरात्मयुगैक्यसमुन्मिषितं
भ्रममात्रमथो भवहेतुतया।

मुनिना गदितं गुरुणा कलितं
नतु तत्त्वधियः समताऽनुमता ॥७४॥

अथ "दुःखजन्मे"[1]ति गौतमसूत्रमुदाहृत्य मिथ्याज्ञानापायश्च ब्रह्मात्मैकत्व-
विज्ञानाद् भवतीति कथितम्, तत्त कथमुपपद्यते; गौतमेन जीवेशाभेदान-
5 भ्युपगमेन तन्मते ब्रह्मात्मैकत्वविज्ञानस्यैवालीकत्वेन प्रमाणादीनां तत्त्वज्ञानाद्
निःश्रेयसाधिगम इति तदीयतत्त्वज्ञानादेव तदीयमिथ्याज्ञाननिवृत्तेर्वक्तुमुचित-
त्वेन वेदान्त्यभिमततत्त्वज्ञानाद् मिथ्याज्ञानापायकथनमसङ्गतमिति शङ्कां
परिहरति—वपुरिति ॥ वपुरात्मयुगैक्यसमुन्मिषितम् शरीरात्मद्वयैक्येन सम्पादितं
तद्विषयकं भ्रममात्रं भवहेतुतया संसारकारणत्वेन "दुःखजन्मे"[2]ति सूत्रे मुनिना
10 गदितं गुरुणा भाष्यकृता कलितम् परिगृहीतम्, नतु भवमूलहेतुभूतश्रुतिसम्मता-
विद्यालक्षणमज्ञानं मुनिना गदितं भाष्यकृता परिगृहीतम्। तथाच संसार-
हेतुभूतयोर्द्विविधकारणयोः गौतमेन भ्रमरूपकारणं गृहीतमिति स्वपक्षोप-
ष्टम्भाय भाष्यकृतोक्तम्, नतु सर्वांशसाम्येन। तेन तत्त्वज्ञानस्याभेदाव-
गाहिनो गौतमतत्त्वज्ञानसमता नैवानुमता। इति भावः ॥७४॥

15 [30b] मुनिना तु मता परजीवभिदा
स्वमते तु तदैक्यमहो निमतम्।
न परावरभेदकथाऽपि मना-
ग्भ्रमवारणमस्ति तु तत्त्वधिया ॥७५॥

तत्त्वधियः साम्याभावमेवोपपादयति—मुनिना त्विति ॥ मुनिना गौतमेन
20 तु परजीवभिदा जीवेशभिदा मता परिगृहीता। स्वमते भाष्यकृन्मते तु
तदैक्यम् जीवेशैक्यं नियतं यथा भवति तथा मतं परिगृहीतम्। परावरभेद-
कथाऽपि मनाक् ईषदपि जीवेशभेदकथा स्वमते नैवास्ति। अतस्तत्त्वबुद्ध्योर्मत-
द्वयसिद्धयोः साम्यमेव न भवति। तत्तन्मतानुसारेण तत्त्वज्ञानेन भ्रम-
निवारणं त्वस्ति तदंशेऽपि साम्यं भवेदपि, नतु तत्त्वधियोः स्वरूपांशेऽपि
25 विवक्षितम्। इति भावः ॥७५॥

[31a] नच सम्पदियं परमात्ममति-
र्नच यत्नसमर्जितविभ्रमिका ।
न विशिष्टतमक्रिययाऽभियता
नच कर्मपदार्थगसंस्कृतिका ॥७६॥

5 **अथात्मज्ञाने सम्पदादिचतुर्विधपक्षान्यतमत्वप्रत्याख्यानपरं** नचेदमित्यादि-**भाष्यं सङ्ग्रहेण विवृणोति**—नचेति ॥ परमात्ममतिः **अखण्डार्थमतिरियं** नच सम्पत् **न सम्पदुपासनरूपा** "अनन्तं वै मन"[1]**इत्यादिवत्** । **अनेन** नचेदमित्यादिः **प्रथमः कल्पः सङ्गृहीतः** । नापि यत्नसमर्जितविभ्रमिका **यत्नेन बुद्धिपूर्वकयत्नेन सम्पादिता विभ्रमरूपाऽध्याससंज्ञोपासनाऽपि** "मनो ब्रह्म"[2]**त्यादिवत्** ।
10 **अनेन** नचाध्यासरूपमित्य**ादिभाष्यार्थः सङ्गृहीतः** । परमात्मतिः "वायुर्वाव संवर्गः"[3] "प्राणो वाव संवर्ग"[4]**इत्यादिवद् विशिष्टतमक्रियया** अभियता **व्याप्ता न भवति** । **अनेन** नापि विशिष्टक्रियानिमित्तमि**त्यादिभाष्यं विवृतं भवति** । **सैव** परमात्ममतिः कर्मपदार्थगसंस्कृतिका **कर्मसम्बन्धिपदार्थगतसंस्काररूपा-ऽप्याज्यावेक्षणवद्** न **भवति** । **अनेन** नाप्याज्यावेक्षणवदित्यादि **भाष्यं विवृतं**
15 **भवति** ॥७६॥

[31b] परमार्थसदात्मपरा निगमा-
स्तदभेदविलब्धिपरा विशदम् ।
मलभञ्जकबोधपराश्च तदा
सकला अपि नैव सदर्थयुजः ॥७७॥

20 **अथ सम्पदादिपक्षचतुष्टयस्याप्येकरूपेण निराकरणपरं** सम्पदादिरूपे हीत्यादि **भाष्यं सङ्ग्रहेण विशदयति**—परमेति ॥ परमार्थसदात्मपरा निगमाः **परमार्थः अबाधितो यः सदात्मा अखण्डार्थः, तत्परा निगमाः** "तत्त्वमसि"[5] "अहं ब्रह्मास्मि"[6] "अयमात्मा ब्रह्म"[7]**त्याद्या निगमाः** तदभेदविलब्धिपरा विशदम् **स चासावभेदश्च तदभेदोऽखण्डार्थलक्षणाभेदः, तस्य विलब्धिरवाप्तिः, तत्पराः**

विशदम् तत्प्रतिपादकाः । निगमाश्च—"ब्रह्म वेद ब्रह्मैव भवती"[1]त्याद्याः मलभञ्जकबोधपरा निगमाश्च मलम् अविद्या तन्नाशकबोधप्रतिपादका निगमाश्च "भिद्यते हृदयग्रन्थिरि"[2]त्याद्याः । एते सकला अपि निगमाः तदा तर्हि सम्पदादिकल्पचतुष्टयं चेत्, तर्हि नैव सदर्थयुजो भवेयुः । क्लिष्टार्था एव
5 भवेयुरिति यावत् ॥७७॥

[31a] तदुपासनया ननु मुख्यतमा-
मृतमित्युदिते विमतेऽनुमते ।
मलमात्रविभञ्जकबोधपराः
श्रुतयो निखिला अपि निष्प्रतिभाः ॥७८॥

10 अथ निरुक्तश्रुतिवैमत्यमेव सम्पदध्यारोपक्रियानिमित्तोपासनात्रयपक्षे विशदयति—तदिति ॥ सा चोपासना, सा सम्पदादिलक्षणा त्रिविधोपासना तथा मुख्यतमामृतमिति विमते विपक्षे अनुमते अङ्गीकृते सति मलमात्र-विभञ्जकबोधपराः "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि"[3] "तस्मै मृदितकषायाय तमसः पारं दर्शयति सनत्कुमार"[4]इत्याद्याः अपरा अपि "तत्त्वमसि"[5]
15 "ब्रह्म वेद् ब्रह्मैव भवती"[6]त्येवमाद्या अपि श्रुतयः निष्प्रतिभाः विगतशोभाः सम्पदादिपक्षत्रये भवेयुः । इत्यर्थः ॥॥७८॥

[31b] यदि संस्कृतिरङ्गगताऽऽत्ममतिः
पुरुषार्थपराः श्रुतयो मतितः ।
परिपीडितहार्दयुजो नितरां
20 स्युरुपाश्रितदोषहतिश्च तथा ॥७९॥

अथात्मैक्यज्ञानं क्रत्वङ्गभूतकर्तृसंस्काररूपमिति पक्षे दोषविशेषमुद्भावयन् पूर्वोक्तदोषानतिदिशति—यदीति ॥ आत्ममतिः आत्मैक्यज्ञानं यदि अङ्गगता संस्कृतिः क्रत्वङ्गभूतकर्तृगतः संस्कारः, तर्ह्यङ्गगतसंस्कारस्य क्रतुसाद्गुण्यसम्पादकत्वेऽपि पुरुषार्थासाधकत्वादात्ममतेः सकाशात् पुरुषार्थपराः श्रुतयो नितरां पीडितहृदया

भवेयुः। उपासनात्रयपक्षोक्तैर्दोषैश्च इतिर्भवेत्। "तत्त्वमसी"[1]ति वस्तुपरा श्रुतयः 'ब्रह्म वेद ब्रह्मैव भवती'[2]त्यभेदपराः श्रुतयः "अविद्यायाः परं पारं तारयसी"[3]त्याद्याश्च पीडिताः स्युरिति दोष इति भवेत्। इत्यर्थः ॥७९॥

[32a] अत इत्यनधीनतनुः प्रमितिः
5 पुरुषस्य तु वस्तुवशा नियतम्।
परमात्मपरा परमार्थदृशा
नच सा विधिना क्रमितुं सुलभा ॥८०॥

अथ अत इत्याद्युपसंहारपरं भाष्यं विवृणोति—अत इतीति ॥ परमात्मपरा प्रमितिः परमार्थदृशा वस्तुतत्त्वविचारदृशा पुरुषस्यानधीनतनुः सती पुरुषानधीना 10 सती नियतं यथा भवति तथा वस्तुवशा वस्त्वधीना भवति। सा ब्रह्मात्मैक्यमतिर्विधिना क्रमितुं सुलभा न भवति। विध्यविषय इति यावत्। भाष्यं सुगमम् ॥८०॥

[32b] विदिकर्मतयाऽऽज्यवदङ्गतयो-
द्यदुपासनकर्मतया च तथा।
15 पुरुषोऽस्त्विति कल्पमनल्पतमं
नच पूर्वगिराऽपि हि दूषयति ॥८१॥

अथात्मैक्यमतिः क्रतुकर्तृसंस्कारविधयोपयुक्ताऽस्त्विति पक्षो निराकृत एव पूर्वरीत्या, सम्प्रति प्रकारान्तरेणापि तं कल्पं दूषयति—विदीति ॥ वेदनं तावद् द्विविधम्—उपासनालक्षणं पुरुषाधीनम्, केवलज्ञानलक्षणं 20 पुरुषानधीनं वस्तुतन्त्रं भवति। तत्र पुरुषोऽयमाज्यं यथा "पत्न्यवेक्षत"[4] इति वेदनकर्मत्वेन क्रत्वङ्गम्, तथा वेदनकर्मत्वेनोपासनाकर्मत्वेन वा क्रत्वङ्गं न भवेदिति नचेत्यादिग्रन्थेनापि दूषयति। इत्यर्थः ॥८१॥

[33a]

फलवन्न भवेदफलादधिकं
न कदाऽपि फलाश्रयता भवति ।
स्वयमेव हि काशत एव सदा
परमात्मपदं परमार्थवपुः ॥८२॥

5 अथ वेदनकर्मत्वेन पुरुषस्य कर्त्वङ्गत्वनिराकरणभाष्ये परिगृहीतायाः श्रुतेः "अन्यदेव तद् विदितादथो अविदितादधी"[1]त्येवंलक्षणायाः शुद्धस्य वेदनकर्मतानिराकरणपरायास्तात्पर्यं दर्शयति—फलवदिति ॥ विदिताद् ज्ञातादन्यत् अविदितात् अज्ञाताद् घटादेरधिकमखण्डं रूपं भवति । इत्यर्थः ॥

अयमाशयः—विदितत्वं घटादौ द्विविधम्—अन्तःकरणवृत्तिव्याप्यत्वम्, 10 तद्वृत्त्यवच्छिन्नचैतन्यव्याप्यत्वं चेति । तत्र घटादेर्जडत्वाद् वृत्तिव्याप्यचैतन्यव्याप्यत्वे द्वे अपि भवतः । अखण्डार्थे तु तस्य स्वप्रकाशचैतन्यरूपत्वात् तत्र फलव्याप्तिकृतस्फुरणानपेक्षणाद् फलव्याप्यत्वाभावात् फलव्याप्यलक्षणविदितादन्यदिति प्रथमपादार्थः । अविदितात् फलाव्याप्याद् वृत्तिविरहदशायां फलव्याप्तिरहिताद् घटादेरप्यधिकमखण्डस्वरूपम् ॥

15 अयमभिप्रायः—प्रथमपादेन विदितभिन्नत्वकथनादविदितत्वं घटादिवत् कादाचित्कं प्राप्तम्, तद् निराकरोति—अविदिताद् घटादेरधिकमिति । घटादेरचेतनस्य कदाचिदविदितत्वेऽपि कदाचिद् वृत्तिद्वारा विदितत्वं भवति । अखण्डस्य स्वप्रकाशत्वेन कदाऽपि फलव्याप्तिशङ्काया अप्यभावादविदितश्रेष्ठमित्यर्थः सिद्ध्यति, तदेतदाह—फलेति ॥ अखण्डं फलवत् फल-20 व्याप्तिमद् घटादिवद् न भवेत्; स्वयम्प्रकाशत्वेन फलव्याप्त्यनपेक्षणात् । अफलात् फलव्याप्तिघटकीभूतवृत्तिविरहेणाफलात् कदाचित् फलव्याप्तिरहिताद् घटादेरधिकम्, स्वयम्प्रकाशत्वेनाखण्डस्य कदाऽपि फलव्याप्त्यपेक्षणाभावात् । तदेतदाह—कदापीति ॥ अखण्डेऽर्थे कदाऽपि फलाश्रयता न भवति । कदाऽपि फलव्याप्तिर्न भवतीत्यत्र हेतुमाह—स्वयमिति ॥ परमार्थवपुः अबाधितवपुः 25 परमात्मलक्षणं पदं स्वयमेव प्रकाशत एव हि । तथाच नित्यप्रकाशे स्वरूपे फलव्याप्यत्वं नापेक्षितम् । इति भावः ॥८२॥

[33b] मनसः परिणामयुतिः परितः
परमात्मनि नैव भवेन्नयतः ।
त्रिभिदापरिहीनतया नियतं
ननु वृत्तिषु चित्स्फुरणं भवति ॥८३॥

5 अथ यद्यखण्डस्य फलव्याप्यत्वमुक्तदिशा प्रत्याख्यातम्, तर्हि "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"[1] "हृदा मनीषी मनसाऽभिक्लृप्तः"[2] "एतद् विदुरमृतास्ते भवन्ती"[3]त्यादिश्रुतिप्रतिपादितं ज्ञेयत्वं कथमुपपादनीयमित्याशङ्क्य वृत्तिव्याप्यत्वमादाय तदुपपादनीयं चेत्, घटादेरिव त्रिविधपरिच्छेदरहितस्य वृत्तिव्याप्यत्वमपि नोपपद्यत इत्याशङ्क्य घटादेर्वृत्तिव्याप्यत्व-
10 मन्यादृशम्, अखण्डे तु ततो विलक्षणमेवेति समाधत्ते— मनस इति ॥ नयतः **नयेन न्यायेन** परमात्मनि **अखण्डे सर्वव्यापके** मनसः परिणामयुतिः परितः **सर्वतः ब्रह्म व्याप्यं** न भवेत्; **मनसस्तत्परिणामस्य चातिपरिच्छिन्नत्वेन ब्रह्मणस्त्रिविधपरिच्छदशून्यतया तद्व्यापनायोगात्।** वृत्तिषु **ब्रह्माकारवृत्तिषु घटादिवृत्ताविव चितः स्फुरणं निश्चयेन** नियतं भवति ॥८३॥

15 [34a] घटवृत्तिवदात्ममतौ स्फुरणं
विषयत्वनिबन्धनतां न भजेत् ।
विषयानुकृतिर्धिषणानुगता
विषयत्वपराऽखिलवित्तिभुवि ॥८४॥

घटेति ॥ **अखण्डाकारत्वं च वृत्तेः श्रवणमननाभ्यां भावगुणोपसंहारेण**
20 "निर्गुणमि"[4]**त्यादिश्रुत्यनुरोधेन स्वरूपातिरिक्तसर्वगुणपरिहारपूर्वकं शब्दतो न्यायतो वा ब्रह्मात्मैक्यलक्षणाखण्डाकारवासनायां दृढायां सत्यां तस्या वासनायाः प्रफुल्लावस्थायां परिपक्वायां चैतन्यदीप्तायामविद्यानिवर्तकतावच्छेदकजातिमतोऽन्तिमबोधस्य जननाद् निर्णेयम्। तथाच विषयाकारानुकारित्वमेव विषयग्राहिता सर्वविषयसाधारण्येनाभ्युपेया भवति। अत एव**

भूतभाविविषयस्थलेऽपि ज्ञानस्य तद्विषयित्वतदाकारानुकारित्वं शब्दानुमानादिसाधारण्येनाभ्युपेयम्। एवं च घटवृत्ताविवात्ममतौ चितः स्फुरणं विषयत्वनिबन्धनताम् तत्सम्पादकतां न भजेत्, किन्तु बुद्धिगता विषयानुकृतिर्घटादिसाधारण्येन विषयसम्बन्धिनः सामान्यरूपस्य विशेषरूपस्य चानुकृतिः
5 अनुकरणं निखिलज्ञानस्थलेऽपि विषयत्वनिर्वाहिका भवति। एवञ्चाखण्डवृत्तिरूपपरिणामानुकृतस्वरूपत्वमेव वृत्तिविषयत्वमखण्डार्थस्य, न त्वन्यदुपपद्यते। इति दिक् ॥८४॥

[34b] चिदभिज्वलिता ननु वृत्तिरियं
क्रमहानिवशेन रजस्तमसोः।
10 समया चितमुद्बलितत्वमिदं
प्रभवेदनयोर्ननु योगतया ॥८५॥

अथ चित्संयुक्तत्वमेव वृत्तेश्चैतन्ये वृत्तिव्याप्यतानिर्वाहकमस्तु, किमिति प्रकारान्तरमाद्रियत इत्याशङ्क्य चितोऽसङ्गत्वात् चिद्वृत्त्योः परस्परसंयुक्तत्वमसम्भवि, वृत्तेरप्यखण्डाकाराया रजस्तमसोरुत्तरोत्तर-
15 मल्पाल्पह्रासक्रमेण क्रमतश्चिदभिज्वालतत्वमेव चिद्वृत्तिसंयोगः। स च घटपटादिवृत्तसाधारणोऽखण्डार्थस्य वृत्तिविषयतां निर्वोढुमसमर्थ इति मनसि निधायाह—चिदिति ॥ रजस्तमसोः क्रमहानिवशेनेयमखण्डाकारा वृत्तिश्चिदभिज्वलिता भवति ननु। चितं समया वृत्तेरभिज्वलनेन यद् उद्बलितत्वम बलशालित्वम्, तदेव चिद्वृत्त्योर्योगतया भवेत्, योगनामा भवेत्।
20 इत्यर्थः ॥८५॥

[35a] नहि चिन्नियता मनसोऽपि युति-
श्चिदभिज्वलितत्वमपास्य परा।
इयमेव हि वृत्तियुतिर्हि चिता
प्रथिताऽथ विकारकरी ह्यपरा ॥८६॥

इदमेवोपपादयति कैमुतिकनयेन—नहीति ॥ मनसोऽपि जीवोपाधिभूतस्य चिदभिज्वलितत्वमपास्य परा अन्या चिन्नियता चिदेकप्रवणा युतिर्न हि । किमुत मनोवृत्तेरपरा युतिर्नहीत्यत्र वक्तव्यमस्ति । इयमेव चिदभिज्वलितत्वलक्षणा चिता चैतन्येन वृत्तियुतिः प्रथिता प्रसिद्धा । अपरा संयोगलक्षणा विकारकरी ; संयोगस्य परिच्छेदहेतुतया परिच्छिन्नरूपविकारशालित्वेनास्मदभिमतत्वात् । तस्मादसङ्गश्रुत्यनुरोधेन युतिश्चित्संनिधानादभिज्वलितत्वमेवेत्यभ्युपेयम् । इति भावः ॥८६॥

अविकारकरी पुरुषेण युति-
र्व्यवहारकरी च तथाऽप्युदिता ।
कलशादिसमानतया विषयी-
भवनं परमात्मनि सम्भवति ॥८७॥

उक्तमेवार्थं सङ्ग्रहेण दर्शयति—अविकारकरीति ॥ उदिता चिदभिज्वलितत्वलक्षणा पुरुषेण युतिरविकारकरी ; संनिधानादेव वृत्तेरभिज्वलनात् । तथाऽपि अविकारकरत्वेऽपि व्यवहारकरी च भवति । असङ्गत्वेनाविकारस्याभिज्वलनलक्षणवृत्तिगतज्ञानांशेन व्यवहारस्य च युगपदुपपत्तेरित्यर्थः । परमात्मनि वृत्तिविषयत्वं तु कलशादिसमानतया भवति ; वृत्तौ विषयगतसामान्यविशेषाकारान्यतरानुकारित्वस्यैव विषयगतविषयतानिर्वाहकत्वेन निरूपणात् । इति भावः ॥८७॥

[35b] यदि चाविषयत्वमथोक्तदिशा
निगमान्तमितत्वकथैव मुधा ।
न मुधा ननु गौणमितत्वमिदं
प्रतिपादितमुक्तदिशाऽस्ति खलु ॥८८॥

अथ "अन्यदेव तद्विदितादि"[1]ति शास्त्रादखण्डार्थस्याविषयत्वे "शास्त्रयोनित्वादि"[2]ति शास्त्रजन्यप्रमितिविषयत्वप्रतिपादनमसङ्गतमित्यर्थपरम् अवि-

षयत्व इत्यादिभाष्यं व्याचष्टे—यदि चेति ॥ अथोक्तदिशा फलव्याप्यत्वोपपादनदिशा यद्यखण्डस्याविषयत्वम्, तर्हि वेदान्तप्रमितत्वमखण्डस्येति कथा प्रवर्तिता मुधैव भवेदिति पूर्वपक्षार्थः। अथ नाविद्येति सिद्धान्तभाष्यं व्याचष्टे—न मुधेति ॥ "अन्यदेव तद्विदितादि"[1]त्यत्र फलव्याप्यत्वाभावः
5 प्रतिपाद्यते, "शास्त्रयोनित्वात्"[2] "दृश्यते त्वग्र्यया बुद्ध्या"[3]त्यादौ वृत्तिव्याप्यत्वमुच्यत इति विरोधाभावात् शास्त्रप्रमितत्वकथा न मुधा भवति। प्रतिपादितं गौणमितत्वमिदं वृत्तिविषयत्वमात्रलक्षणमुक्तदिशा "विषयानुकृतिर्धिषणानुगते"[4] त्युक्तरीत्याऽखण्डार्थेऽस्ति खलु। तथाचाखण्डस्य ज्ञातत्वाज्ञातत्वे उपपन्ने एव। इति भावः ॥८८॥

10 [36a]

विषयत्वविमुक्ततयाऽऽत्मसुखा-
नुकृतिर्मनसः परिणाममयी।
परिपक्वतमा चिदभिज्वलिताऽऽ-
वृतिकल्पितभेदनिवृत्तिपरा ॥८९॥

अथ घटादिविषयेषु वृत्तिव्याप्यत्वफलव्याप्यत्वयोः सतोरेवावरणभङ्ग-
15 चिदुपरागायत्तविषयप्रकाशनदर्शनादखण्डस्थले फलाव्याप्यत्वाद् घटादिप्रदेश इव कथं व्यवस्था ज्ञातव्येत्याशङ्क्याखण्डार्थस्य स्वप्रकाशत्वेन परप्रकाशानपेक्षणेन फलव्याप्यत्वाभावेऽपि प्रकाशसम्भवाद् वृत्तिव्याप्यतया चिदभिज्वलितया वृत्त्याऽविद्यानिवृत्तिवशेन महापुरुषार्थसिद्ध्या घटादिस्थलवद् व्यवस्थाऽभावेऽपि प्रकारान्तरेण व्यवस्था घटत इत्यर्थकम्—न हि शास्त्रमित्यादिभाष्य-
20 भावं चतुर्भिः पद्यैर्विशदयति—विषयत्वेत्यादिभिः ॥ अथादौ नाविद्या नहीत्यादिभाष्यद्वयार्थं विशदयति—विषयत्वेति ॥ विषयत्वविमुक्ततया फलव्याप्यत्वरहितत्वेन मनसः परिणाममयी मनःसम्बन्धिपरिणामस्वरूपा आत्मसुखानुकृतिः आत्मस्वरूपं यत् सुखम्, तदनुकृतिः परिपक्वतमा बहुकालाभ्यासनिर्वृत्ताऽतिदृढा चिदभिज्वलिता आवृतिकल्पितभेदनिवृत्तिपरा आवृतिः अविद्या, तत्कल्पितो
25 यो भेदः जीवेशादिभेदः, तन्निवृत्तिपरा अविद्यानिवृत्तिद्वारा तदविद्याकल्पितभेदनिवृत्तिपरा भवति। इत्यर्थः। अत्र भाष्यम्—नाविद्येति ॥ निरुक्ताक्षेपो

न सम्भवति। कुतः। अविद्यानिवृत्तिद्वारा तत्कृतभेदसामान्यनिवृत्तिपरत्वाच्छास्त्रस्य। एतदेवोपपादयति—नहीति ॥ शास्त्रं तावदिदन्तया फलव्याप्यत्वलक्षणया विषयभूतं ब्रह्म प्रतिपादयितुं नेच्छति, किन्तु फलाव्याप्यत्वेन वृत्तिविषयतयाऽखण्डं बोधयदविद्यां निवर्तयत् तत्कृतं भेदं निवर्तयति। 5 तथाच फलाव्याप्यत्वमविषयत्वम्, वृत्तिव्याप्यत्वं विषयत्वमिति विवेचितम्। इति भावः ॥८९॥

[36b] श्रुतिभिर्बहुधाऽविषयात्मतया
परमात्मपदं प्रकटं गदितम्।
अथ तन्मयमानसवृत्तिकृता-
10 वृतिभञ्जनतो ननु मुक्तिपदम् ॥९०॥

अथ तथाच शास्त्रमित्यवतारितश्रुतिभावं दर्शयति—श्रुतीति ॥ परमात्मपदम् अखण्डार्थलक्षणं श्रुतिभिर्बहुधाऽविषयात्मतया फलाव्याप्यतया प्रकटमेव कथितम्। अथ तन्मयमानसवृत्तिकृतावृतिभञ्जनतः अखण्डाकारचित्तवृत्त्या कृतं यदविद्याभञ्जनम् नाशः, तस्माद् मुक्तिपदं ननु भवति। अत्र भाष्यम्—तथाचेति ॥ 15 "उत तमादेशमप्राक्षः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमि"[1]त्यत्र मतविज्ञातयोरर्थभेददर्शनात् तद्वीत्यैव केनोपनिषन्मन्त्रोऽपि "यस्यामतम्"[2] "अविज्ञातमि"[3]त्यादिलक्षणः प्रवर्तितः, तेन न पुनरुक्तता। अर्थयोरुपपादनन्तु द्वयोरपि छान्दोग्यतलवकारिवाक्ययोः समानमेव। शब्दापरोक्षवद् [37a]युक्तिसाम्येनानुमानापरोक्षस्यापि प्रामाणिकत्वेन प्रत्यक्षस्थल 20 इवानुमानापरोक्षशब्दापरोक्षयोरपि तद्द्वयप्रसक्तौ निराकरोति। यस्य विवेकिनः अमतम् अनुमानापरोक्षवृत्तिस्फुरितचैतन्याविषयीभूतम् तस्य जनस्य वृत्तिमात्रव्याप्यत्वेन वृत्तेरखण्डाकारानुकारित्वेन वा मतं भवति। एवमविज्ञातं विजानताम्। अत्र विज्ञानं निदिध्यासनदर्शने ज्ञेये। पूर्वोक्तरीत्या वृत्तिमात्रविषयत्वेन विजानतामविज्ञातम् फलाव्याप्यम्, अविजानताम् वृत्तिमात्र- 25 विषयत्वेनाविजानतां जनानां विज्ञातम् फलव्याप्यत्वेन ज्ञातं भवतीत्यर्थः। न दृष्टेरिति ॥ दृष्टेः चक्षुर्वृत्तिद्वारकमनोवृत्तेश्चाक्षुषप्रकाशेनैव प्रकाशकं न

पश्येः चाक्षुषप्रकाशसमप्रकाशेनान्येन न पश्येः ; तादृशप्रकाशस्यापरस्याभावात्। श्रुतिः श्रोत्रद्वारकवृत्तिः। विज्ञातिः आन्तरमनोजन्यवृत्तिरित्यर्थः। इतरदग्रवाक्यवद् योजनीयम्। अत इति शास्त्रेणाविद्यानिवृत्त्यादिद्वारा नित्यसिद्धमोक्षसमर्पणाद् न मोक्षे विकारित्वप्रसङ्गः। इति भावः ॥९०॥

5 [37b] विषयस्तु धियो न फलस्य पुन-
स्तदखण्डमतोऽन्यदहो विषयः।
फलिता जडतानियता क्रिययाऽऽ-
कलनं कलयेद् नहि वृत्तियुतिः ॥९१॥

अथ "अन्यदेव तद् विदितात्"[1] "यस्यामतमि"[2]त्यादेः प्रकरणसाधितमर्थं
10 सङ्ग्रहेण दर्शयति—विषय इति ॥ तदखण्डं धियो वृत्तेरुक्तरीत्या विषयः, फलस्य वृत्तिप्रतिफलितचैतन्यस्य न विषयः। अतोऽखण्डात् अन्यद् घटादिवृत्तेरिव फलस्यापि विषयः। अहो आश्चर्यम्। इदं वैरूप्यम् इदमेकस्योभयविषयत्वम् अपरस्य वृत्तिमात्रविषयत्वमिति। तत्राखण्डस्य चैतन्यरूपता घटादेर्जडरूपता च नियामिकेति दिक्। तदेतदाह—फलितेति ॥
15 फलिता फलव्याप्यता जडताव्याप्ता। यत्र जडत्वाभावः, तत्राखण्डे फलव्याप्यत्वस्य चाभावः। ननु चाखण्डस्य वृत्तिविषयत्वे विकारित्वापत्तिरित्याशङ्क्य परिहरति—क्रिययेति ॥ वृत्तियुतिः वृत्तियोगो निरुक्तरीत्या वृत्तिविषयत्वमखण्डाकारानुकारित्वलक्षणं वृत्तिगतं क्रिययाऽऽकलनम् सम्बन्धं विकारित्वलक्षणं नहि कलयेत् सम्पादयेत् ; विषयतायाः सकलवस्तुसाधार-
20 ण्येन वृत्तिगतविषयाकारानुकारित्वनियमितत्वात्। इति भावः ॥९१॥

[38a] नियतप्रभया फलिताविरहा-
द्विषयत्वनिषेधवचः सफलम्।
अथ वृत्तियुतेर्विषयत्वपरं
वचनं सफलं चिति गौणतया ॥९२॥

अथ "अन्यदेव तद्विदितादि"[1]त्यस्य वचसः "दृश्यते त्वग्र्यया बुद्धये"[2]ति वचसश्च निरुक्तरीत्या साफल्यं सिद्धमुपसंहरति—नियतेति ॥ चिति अखण्डार्थलक्षणायां विषयत्वनिषेधवचः "अन्यदेव तद्विदितादि"[3]ति वचः नियतप्रभया स्वयम्प्रकाशतया फलिताविरहात् फलव्याप्यत्वाभावात् सफलम् अर्थवत्त्वेन सफलमित्यर्थः । "दृश्यते त्वग्र्यया बुद्धये"[4]ति चिति विषयत्वपरं वचनं वृत्तियुतेः वृत्तियोगेन गौणतया विषयत्वपरं सत् सफलं भवति । अत्र वृत्तिविषयत्वफलव्याप्यत्वसत्त्वे मुख्यं विषयत्वं विलक्षणमनुमितिविषयत्वात्, केवलवृत्तिविषयत्वन्त्वमुख्यरूपमिति भेदः ॥९२॥

अथ यस्यवचोभिरिहार्यवरो
धुरि मुक्तिपदस्य चतुर्विधताम् ।
जननादिभिरेव नयैः कुरुते
क्रमशः प्रतिपाद्य निराकरणम् ॥९४॥

अथ यस्य तूत्पाद्यो मोक्ष इत्यादिभाष्यं मोक्ष उत्पाद्यत्वाद्यनूद्य निराकरणपरं सङ्ग्रहेण सप्रतीकं व्याचष्टे—अथ यस्येति ॥ इह अस्मिन् स्थले धुरि पुरतः आर्यवरः श्री श ङ्क रा चा र्यः यस्यवचोभिः यस्य तूत्पाद्य इत्यादिवचोभिः मुक्तिपदस्य मुक्तिरूपपदस्य जननादिभिः उत्पत्तिविकारप्राप्तिसंस्कारैः चतुर्विधतां क्रमेण प्रतिपाद्य क्रमेणैव नयैः युक्तिभिस्तच्चातुर्विध्यस्य निराकरणं कुरुते । इति योजना ॥९३॥

[38b]

यदि मुक्तिरुपैति जनिप्रभृतिं
ननु तर्हि भजेत तथैव लयम् ।
श्रुतयः स्मृतयोऽखिलतीर्थकृतः
प्रवदन्ति च तां किल नित्यतया ॥९४॥

अथोत्पाद्यत्वविकार्यत्वपक्षयोर्भाष्योक्तं दोषं सङ्ग्रहेण दर्शयति—यदीति ॥

मुक्तिर्यदि जनिप्रभृतिम् **जन्म विकारित्वं चैवमन्यदपि** उपैति, तर्हि तथैव लयमपि भजेत **जन्मादिवद् नाशमपि प्राप्नुयात्; जन्यादिमतां नाशवत्त्वस्यापि नियतत्वात्। अथास्तु मोक्षोऽनित्य इत्याशङ्क्य नैवं वक्तुं शक्यम्; मान-विरोधादित्याह—**श्रुतय इति ॥ श्रुतयः स्मृतयोऽखिलतीर्थकृतः **शास्त्रकर्तारश्च**
5 **तां मुक्तिं** नित्यतयैव **वदन्ति**। "अजो नित्यः "शाश्वतोऽयं पुराणः"[1] "नित्यो नित्यानामि"[2]त्यादिश्रुतेः, "अविकार्योऽयमि"[3]त्यादिस्मृतेः, **साङ्ख्यादिभिरपि स्वस्वशास्त्रेषु मोक्षस्य नित्यत्वेन परमपुरुषार्थतानिर्देशात्। अत्र भाष्यम्—** यस्येति ॥ **कायवाङ्मनोऽन्यतमक्रियाफलरूपमुत्पत्तिविकाराप्तिसंस्कारस्वरूपं चतुर्विधमपि भवति। तत्र मोक्षो यदि चोत्पाद्यो विकार्यो वा, तर्हि**
10 **कार्याद्यन्यतमक्रियाऽपेक्ष एव भवेत्। तथा सत्यनित्य एव श्रुतिस्मृति-तीर्थकृत्प्रवादविरुद्धतया स्यात्। अतो मोक्षो नोत्पाद्यो न विकार्यः। इति भावः** ॥९४॥

[39a] न किलाप्यतयाऽपि विधेर्विषय-
स्सकलात्मतया विभुरूपतया।
15 घटते समवाप्यतया स्फुटतो
न घटादिविभिन्नपदार्थ इव ॥९५॥

**अथ** नचाप्यत्वेनेति **भाष्यमाप्यत्वपक्षदूषणपरं विशदयति**—न किलेति ॥ **मुक्तिराप्यत्वेन** विधेः **उपासनादिक्रियाविधेर्विषयो** न **भवति; मुक्तिरूपस्य ब्रह्मणो निखिलात्मभिन्नत्वेऽपि विभुतया गगनवद् नित्याप्तत्वात्, घटादि-**
20 **लक्षणपरिच्छिन्नविभिन्नपदार्थ इव ब्रह्मस्वरूपो मोक्षः समवाप्यत्वेन** स्फुटतः **स्पष्टं** न घटत **एवेत्यन्वयः। अत्र भाष्यम्**—नचाप्यत्वेनापीति ॥ **आप्यत्वेनो-पासनादिक्रियापेक्षा वक्तुं न शक्यते; ब्रह्मात्मकमोक्षस्य प्रत्यगभिन्नत्वपक्षे नित्याप्तत्वात्, प्रत्यग्भिन्नत्वपक्षेऽपि विभुत्वेनाकाशवद् नित्याप्तत्वात्। इति भावः** ॥९५॥

25 [39b] विमलेऽतिशयानुचिते परमे
न हि संस्क्रिययाऽऽत्मनि मोक्ष इति।

क्रियया विकृतौ विलयो नियतो
वचनं च परश्शतमच्यवने ॥९६॥

अथ नापि संस्कार्यः। स्वात्मधर्म एव सन् तिरोभूत इत्यादिभाष्यं संस्कार-पक्षद्वयनिराकरणपरं क्रमेणार्धाभ्यां सङ्ग्रहेण विवृणोति—विमल इति ॥ विमले 5 दोषरहिते अतिशयानुचिते गुणाधनानर्हे ; "निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनमि"[1]त्यादिश्रुतेः परमे उत्कृष्टे आत्मनि संस्क्रियया उपासनादिलक्षणया मुक्तिरिति नैव सम्भवति ; नित्यशुद्धानाधेयातिशयब्रह्मात्मकमोक्षे विधि-विषयोपासनादिलक्षणसंस्कारायोगात्। अनेन नापि संस्कार्य इत्यादिभाष्यं विवृतं भवति। भाष्ययोजनं सुगमम्। स्वात्मेत्यादिभावपरं क्रियेत्यादि। 10 नित्यसिद्ध एव मोक्षस्तिरोभूतः क्रियया ऽऽत्मनि संस्क्रियमाणेऽभिव्यज्यते निघर्षणसंस्कृतादर्शे तेज इवेति न सम्भवति ; आदर्शे निघर्षणक्रियासम्बन्ध-वद् निर्लेप आत्मनि क्रियासम्बन्धस्यैव वक्तुमशक्यत्वात्, क्रियासम्बन्धे-ऽभ्युपगम्यमाने तत्सम्बन्धस्य धर्मिणि विकारजनकत्वेन धर्मिनाश एव स्यात्। तदेतदाह—क्रियेति ॥ धर्मिक्रियया सम्बद्धया विकृतौ सत्यां 15 धर्मिणो विलयो नियत एव भवेत्। नचान्याश्रितक्रियया ऽऽत्मनि मोक्षो-ऽभिव्यज्यत इति वक्तुं शक्यम् ; व्यधिकरणक्रियाया ब्रह्मासंस्पर्शितया ब्रह्मात्ममोक्षव्यञ्जकत्वायोगात्। अच्यवने "अविकार्योऽयमुच्यत"[2] इत्यादि वचनं परश्शतमुपलभ्यत एव। तस्मात् संस्काराद् मोक्षोऽभिव्यज्यत इति पक्षोऽसङ्गत एव। भाष्यं च स्वात्मेत्यादि सुगमयोजनम् ॥९६॥

20 [40a] जननादिसमाश्रितकर्मचयै-
स्सतनुः पुरुषो ननु संस्क्रियते।
न विशुद्धचितिः श्रुतयः स्मृतय-
श्शतशो हि तथा कथयन्ति भृशम् ॥९७॥

अथ ननु देहाश्रययेत्यादिभाष्यं पूर्वपक्षसिद्धान्तप्रमाणोपन्यासादिरूपं तस्माद् 25 ज्ञानमेकं मुक्त्वेत्यन्तं सङ्ग्रहेकेन पद्येन व्याचष्टे—जननादीति ॥ जननादि-

समाश्रितकर्मचयैः जातकर्मनामकरणान्नप्राशनचौलोपनयनस्नानाचमनसन्ध्यावन्द-
नादिकर्मनिकरैः विशुद्धचितिः संस्क्रियतामिति पूर्वपक्षः। विशुद्धा चितिर्न
संस्क्रियते, किन्तु सतनुरेव पुरुषः संहतः संस्क्रियते। एनमेवार्थं श्रुतयः स्मृतयः
शतशस्तथा कथयन्ति हि भृशम् दृढम्। भाष्यम्—नन्विति॥ देहाश्रितया
5 स्नानादिक्रियया देही संस्क्रियत इत्यन्याश्रितक्रियया शुद्धा चितिः संस्कृता
भवत्विति पूर्वपक्षार्थः। नेति॥ अन्याश्रितक्रियया नान्यः संस्क्रियते। कुतः।
चिदावरकाविद्यया चैतन्यांशाच्छादनादन्तःकरणाद्युपजनोत्तरं तत्सम्बन्धेना-
विद्यायाः सामान्यांशेन तिरस्कारादीषत्प्रकाशे कार्योन्मुखे चैतन्याविद्या-
सूक्ष्मस्थूलदेहानामयुतसिद्धसम्बन्धेन तदानीं [40b] विस्पष्टं दूरस्थत्वा-
10 भावात् पानकरसन्यायेनैकत्र सम्मेलनात् तत्र विभागमन्तरा चेतनाचेतन-
समुदायस्यात्मत्वेन परिगृहीतस्यैव संस्क्रियमाणत्वात्। तथाच देहसंस्कारेण
न शुद्धसंस्कारः। इति भावः। संहतस्येति हेतुमेव विशदयति—प्रत्यक्षं
हीति॥ उपपादितमर्थमेव सदृष्टान्तं पुनरुपपादयति—यथेति॥ शरीराश्रित-
चिकित्सया संहतस्यारोग्यफलं यथा, तथा स्नानादिसंस्कारेण देहगतेन
15 संहतः संस्क्रियमाणः कर्ताऽहंप्रत्ययविषयो निखिलक्रियानिर्वर्तको भवति।
स एव संहतस्तत्फलभोक्ताऽपि। "तयोरन्य"[1] इति मन्त्रोऽयं संहतस्य
भोक्तृत्वं शुद्धस्याभोक्तृतां च ब्रवीति। आत्मेति॥ इन्द्रियमनोयुक्तं यथा
भवति, तथाऽऽत्मा भोक्तेत्याहुरिति संहतस्यैव भोक्तृत्वं गमयतीयं कठ
श्रुतिः। एक इति॥ अयमपि कठ मन्त्रः सगुणब्रह्मकथनपूर्वकं शुद्धब्रह्मकथन-
20 परम्। स पर्यगादिति॥ ईशावास्य मन्त्रोऽयम्। स ईशः शुद्धः शुक्रम्
शुद्धम् कायादिरहितम् शोधितं जीवस्वरूपं पर्यगात् त्रिविधपरिच्छेदरहिततया
प्राप्नोति स्मेति केवलाखण्डार्थपरः। एको देव इति॥ आभ्यामन्तिमाभ्यां
मन्त्राभ्यामनाधेयातिशयो मोक्षो निरूपितः। अत इत्युपसंहारः। मोक्षस्य
क्रियानुप्रवेशे न किमपि निमित्तमस्तीति भावः। तस्मादिति परम-
25 प्रकृतोपसंहारः। मोक्षे ज्ञानस्यैवोपयोगः, न क्रियाया गन्धमात्रस्यापि।
इति दिक्॥९७॥

[41a]  प्रतिपत्किल वस्तुभवा नियमा-
दथ कर्म च मानसमन्यविधम्।

पुरुषैकवशा विधिजत्वकृति-
र्ननु मानवशा च मितिः प्रथिता ॥९८॥

अथ ज्ञानमपि मानसत्वात् क्रियारूपमेव भवतु ; ध्यानादिवत्। एवं च ज्ञानस्य क्रियात्वादेव विधिविषयत्वमप्यस्तु, इत्याशङ्कापरं ज्ञानस्य मान-
5 सत्वेऽपि ध्यानादिक्रियातो वैलक्षण्यमेवेति सदृष्टान्तं परिहारभाष्यम् ननु ज्ञानं नामेत्यादिकं ज्ञानं न चोदनातन्त्रमित्यन्तं सङ्गृहत एकेन श्लोकेन विवृणोति—प्रतिपदिति ॥ प्रतिपत् ज्ञानं नियमेन वस्तुभवं मानसं कर्मोपासनालक्षणं ज्ञानादन्यप्रकारकमेव। तदेव वैलक्षण्यं दर्शयति—पुरुषेति ॥ विधिजन्या कृतिः कार्यं प्रयत्नो भावना पुरुषैकाधीना ; कर्तुमकर्तुमन्यथा वा कर्तुं
10 शक्यत्वात्। मितिः प्रमितिः प्रमा मानवशा मानाधीना यथावस्तु मानभवत्वात्। अत्र भाष्यम्—नन्विति ॥ मानसत्वादुपासनावद् ज्ञानं क्रियारूपमस्त्वित्याक्षिपति—नन्विति ॥ ज्ञानं मानसत्वेऽपि ध्यानवत् क्रियारूपं न भवति ; ज्ञानक्रिययोः परस्परविलक्षणत्वादिति परिहरति—नेति ॥ वैलक्षण्यज्ञापनाय क्रियास्वरूपं सदृष्टान्तमाह—क्रिया हीति ॥ वस्तुनिरपेक्षा
15 पुरुषचित्तव्यापाराधीना क्रिया। यथेति ध्यानं दृष्टान्तीकृतम्। ध्याने क्रियात्वं वस्तुस्वतन्त्रत्वे सति पुरुषाधीनत्वं व्युत्पादयति—ध्यानमिति ॥ अथ ज्ञाने क्रियावैलक्षण्यमुपपादयति—ज्ञानन्त्विति ॥ यथाभूतवस्त्ववगाहि मानजन्यं ज्ञानं न क्रियालक्षणाक्रान्तम् ; वस्तुतन्त्रत्वात्। एवं च ज्ञानं न विधिपुरुषाधीनम्। तत्र दृष्टान्तमाह—यथेति ॥ पुरुषादिष्वग्निबुद्धिः
20 पुरुषविधितन्त्रत्वात् क्रिया, अग्नावग्निबुद्धिर्न पुरुषविधितन्त्रा, किन्तु वस्तुमानतन्त्रा। प्रकृते निरुक्तमर्थं सङ्गृह्य दर्शयति—तथैवमिति ॥ तथाचाखण्डार्थज्ञानं न पुरुषविधितन्त्रम्। इत्यर्थः ॥९८॥

[41b] विधयः परमात्मवचःपठिता
मितिसाधनसङ्ग्रहचेतनया।
25 कृतिसाध्यमिदं विदितं तदपी-
तरवृत्तिनिवृत्तिकृते भवति ॥९९॥

अथ ब्रह्मात्मैक्यज्ञानं यदि न विधितन्त्रम्, तर्हि "आत्मानं पश्येत्"[1] "ब्रह्म त्वं विद्धि"[2] आत्मा वा अरे श्रोतव्य इत्यादिवचनेषु लिङादयो निरर्थकाः स्युरित्याशङ्कापरिहारपरं तद्विषये लिङादय इत्यादिभाष्यं सङ्गृह्य तो योजयति —विधय इति ॥ परमात्मवचःपठिताः अखण्डार्थवाक्येषु पठिता विधयो न ज्ञानविधेयताबुद्ध्या, किन्तु ज्ञानसाधनश्रवणमननगुरूपसदनोपनिषदध्ययना-
5 दिसङ्ग्रहबुद्ध्या ज्ञानसाधनं निरुक्तं सकलं कृतिसाध्यं विदितम्। एवं च साधनस्य विधिविषयत्वं युक्तमेव। ननु लोकत एव ज्ञानसाधनानां कृतिसाध्यानां ज्ञातत्वात् तज्ज्ञापनाय लिङादयो निरर्थका एव, अज्ञातार्थ ज्ञापनाय किल विधय इत्याशङ्काम्, मुक्त्यै परमपुरुषार्थाय ज्ञानसाधन इवोपासनादिष्वपि लौकिकेष्वर्थेषु पुरुषः प्रवर्तेत। तत्र बाह्यविषयेभ्यो
10 व्यावर्तनेन श्रवणादावेव नि[42a]योजनाय लिङादयोऽपेक्षिता इति समाधत्ते—तदपीति ॥ तदपि ज्ञानसाधनमपि परिबोध्यमानम् इतरवृत्तिनिवृत्ति-कृते भवति। इतरेषु उपासनादिषु या वृत्तिः वर्तनम्, तन्निवृत्त्यर्थमित्यर्थः। श्रवणादिकमेव कुर्यात्, नतूपासनादिकमिति भावः। अत्र भाष्यम्—तद्विषय इत्यादि ॥ सुखदुःखपरिहारार्थं नियोज्यपुरुषविषयीभूतं ज्योतिष्टोमादिकर्म
15 विधिविषयः। प्रकृत आत्मज्ञानं नियोज्यपुरुषरहितं सुखप्राप्तिदुःखपरिहार-रहितम्, ब्रह्मणो नित्याप्तत्वाद् विभुत्वाच्च, हेयोपादेयभिन्नतया तद्विषयं ज्ञानं न विधिविषयो भवेत्। तदेतदाह—तदिति ॥ ज्ञानरूपे विषये लिङादयो नियोज्यपुरुषविषयत्वाभावादकृतिसाध्यत्वाद् अहेयानुपादेय-ब्रह्मात्मविषयत्वेन साध्यप्रयोजकत्वाभावाच्च क्षुरधारोपलादिष्विव कुण्ठी-
20 भवन्ति, एवन्तर्हि लिङादीनि श्रूयमाणानि किम्प्रयोजनानीति पृच्छति—किमर्थानीति ॥ उत्तरयति - स्वाभाविकेति ॥ लोकप्रमाणस्वभावायत्ता परम-पुरुषार्थसाधनपरिगृह्यमाणा श्रवणोपसनादौ प्रवृत्तिर्या, तत्रोपासनादिषु या प्रवृत्तिः, तन्निवारणार्थानि लिङादीनीति भावः। एतमेवार्थमुपपादयति—यो हीति ॥ यो जनः परमपुरुषार्थसाधनमन्वेषमाण इष्टमेव भूयादनिष्टमणु-
25 मात्रेणापि मा भूदिति बुद्ध्योपासनादिषु प्रवर्तते, तत्र तस्यात्यन्तिकपुरुषार्था-लाभाद् लोकप्रमाणसिद्धस्वाभाविकप्रवृत्तिगोचरोपासनादिभ्यो विमुखीकृत्य प्रत्यगात्मपरश्रवणादौ प्रवर्तयन्ति विधयः। तथाच श्रवणाद्येव कर्तव्यम्, नेतरदिति परिसङ्ख्या सिद्ध्यति। तत्र च ज्ञानविषयत्वेनाहेयानु-

पादेयात्मस्वरूपं वेदान्ता उपदिशन्तीति सर्वमुपपन्नम्। इति भावः ॥९९॥

[42b] परमार्थतया परमात्मनते-

रखिलार्थमनोज्ञपुमर्थपदे ।

5 सकलव्यवहारविलुप्तिरथा-

द्वयवादिविभूषणमेव भवेत् ॥१००॥

अथ श्रुतिसम्मतमात्मज्ञानं सिद्धार्थपरतयाऽकर्तव्यविषयकम्, विषयस्य नित्यसिद्धतया कस्यचिद् हानोपादाने प्रकारवद् भवेत्। तथाच निरर्थकमखण्डात्मप्रतिपादनमयुक्तमिति शङ्कातत्परिहारपरं भाष्यं सङ्गृह्य योजयति
10 —परमार्थतयेति ॥ अखिलार्थमनोज्ञपुमर्थपदे अखिला येऽर्थाः प्रयोजनानि तेभ्योऽपि मनोज्ञे पुरुषार्थरूपे पदे परमार्थतया परमात्मबुद्धेर्हेतोः सकलव्यवहारविलुप्तिरद्वयवादिनो विभूषणमेव, नतु दूषणमित्यर्थः। भाष्यम्—वक्ष्यतीति ॥ अकर्तव्यार्थविशेष्यकं ज्ञानं कस्यचिद् हानायोपादानाय वा न भवतीत्येतदलङ्कार एवाद्वतिनाम्; "आत्मनं चेद्विजानीयादि"[1]त्यादिश्रुतेः, "एतद् बुद्ध्वा बुद्धिमान्
15 स्यादि"[2]ति स्मृतेश्च। तस्मादित्युपसंहारः ॥१००॥

[43a] विधिसङ्गतमेव समस्तमपि

श्रुतिवाक्यमितीह न सम्भवति ।

चिदखण्डपरं वचनं शतश-

श्श्रुतिशीर्षगतं प्रतिभाति यतः ॥१०१॥

20 अथ श्रुतिवचनानि सर्वाण्यपि विधिसङ्गतान्येव प्रमाणानीति प्रागुक्ताक्षेपमनूद्य तन्निराकरणपरं भाष्यं सङ्गृहतो विवृणोति—विधीति ॥ समस्तमपि श्रुतिवाक्यं विधिसङ्गतमेव भवति, इतीह वेदान्तशास्त्रे न सम्भवति। यतः यस्मात् कारणात् शतशश्चिदखण्डपरं वचनं श्रुतिशीर्षेषु विद्यमानं प्रतिभाति। तस्मात् सर्वं श्रुतिवचो विधिसङ्गतमिति न सम्भवतीत्यन्वयः। अत्र भाष्यम्—
25 यदपीत्यादि ॥ प्रागुक्तपूर्वपक्षमनुवदति—प्रवृत्तीति ॥ विधिस्पर्शरहितः केवलवस्तुपरो वेदभागो नेत्यर्थः। परिहरति—तन्नेति ॥ तत्र हेतुमाह—औपनिषदस्येति ॥

उपनिषत्प्रतिपाद्यः स्वप्रकारणस्थोऽनन्यशेषः स्वतन्त्र इति तद् नेत्यन्वयः। हेतुं विवृणोति—योऽसाविति ॥ उत्पाद्यादिचतुर्विधद्रव्यविलक्षणो वेदान्तगम्यो नेति वक्तुमशक्यमेव। "स एष नेति नेत्यात्मे"¹त्यादौ द्वौ नञौ प्रकृतमर्थं गमयत इति न्यायेन सिद्धेऽर्थे आत्मपदप्रयोगेणात्मपदार्थस्य सर्वस्वरूपभूतस्य
5 सर्वैरनुभूयमानस्य प्रत्याख्यातुमशक्यत्वादखण्डं स्वतन्त्रमौपनिषदमभ्युपेयम्। इति भावः ॥१०१॥

[43b]　　अहमित्युपबद्धधियो विषयः
सकलो नहि निष्कल एव पुमान्।
निखिलात्मतया श्रुतिशीर्षवचो-
10　　नयसन्ततसूक्ष्मधियाऽधिगतः ॥१०२॥

अथाखण्डस्वरूपमौपनिषदमेवेति कथनमसङ्गतम्; अहमितिप्रत्ययेनापि वेद्यत्वात् तस्येत्याशङ्क्य नाखण्डरूपमहम्प्रत्ययविषयः, किन्तु विशिष्टरूपमेव, शुद्धरूपन्त्वौपनिषदमेवेत्याशङ्कासमाधानपरं भाष्यं नन्वित्यादिलक्षणं साहसमात्रमित्यन्तं सङ्गृह्य योजयति—अहमितीति ॥ अहमित्येवञ्जायमानाया बुद्धेः
15 सकल एव विशिष्टो जीवो विषयो ननु। निखिलात्मतया श्रुतिशिरोवचनेन मननेन नयलक्षणेन सन्ततसूक्ष्मधिया निदिध्यासनेनाधिगतो निष्कलः शुद्धः पुमान् नैव विषयः। इत्यन्वयः। भाष्यम्—नन्विति ॥ आत्मनोऽहम्प्रत्ययविषयत्वादुपनिषन्मात्रवेद्यत्वकथनमसङ्गतमित्यर्थः। परिहरति—नेति ॥ हेतुमाह—तदिति ॥ विशिष्टजीवसाक्षित्वेन शुद्धस्य, सङ्घातस्यैवाहम्प्रत्ययविषयतया
20 शुद्धस्य विषयत्वाभावादुपनिषन्मात्रगम्यत्वं न भवतीत्याक्षेपस्य निरस्तत्वादिति योजना। हेतुमुपपादयति—नहीति ॥ अहम्प्रत्ययविषयसङ्घातकर्तृव्यतिरेकेणोपनिषद्भिः साक्ष्यादिरूपेण प्रतिपाद्यमानो विधिकाण्डेन न्यायशास्त्रेण वा केनचिदधिगतो न हि भवति। अत औपनिषद ए[44a]वायम्। अत औपनिषदत्वेन प्रमाणसिद्धत्वात् केनापि प्रत्याख्यातुं विधिशेषतां नेतुं
25 वा न शक्य इत्यन्वयः। विध्यशेषतामुपपादयति—आत्मत्वादेवेति ॥ सर्वेषामात्मत्वादात्मनश्च हेयानुपादेयरूपत्वादकर्मफलरूपतेति भावः। आत्मनो नित्यतामुपपादयति—सर्वं हीति ॥

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात् पुरुषः परः ।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥"[1]

5 इत्यादिश्रुत्यनुरोधेन कारणानामेव स्वस्वकार्यसात्करणसामर्थ्यात् सर्वकार्याणां कारणैर्यथोचितमात्मसात्करणे कृते सति पुरुषादग्रे पुरुषस्यात्मसात्करणाया-परकारणाभावात् पुरुषोऽविनाशी। यद्यप्यव्यक्तस्य न कारणं पुरुषः, परन्त्वाश्रयत्वादनभिक्तरूपेण तत्र पुरुषे विलयनं भवति। इन्द्रियसाधन-तोपष्टम्भकता वा सूक्ष्मभूतानाम्। अत्र मनःपदेन साहङ्कारमेव मनो
10 गृहीतमित्यर्थानां मनसि लयः। इतरत् सुगमम्। तन्त्वौपनिषदमिति ॥ औपनिषदमिति निर्देशादुपनिषत्सु प्राधान्येन प्रतिपादनमिह विवक्षितं भवति। अत इत्युपसंहारः। वस्तुपरो वेदभागोऽस्त्येव। इति भावः ॥१०२॥

[44b] ननु कर्मपराः श्रुतिवाच इती-
रणकं विदुषां विधिकाण्डपरम्।
15 सुकृतं प्रकृतं प्रतिपादयितुं
स्फुटतः श्रुतिवागिह सङ्कुचिता ॥१०३॥

"दृष्टो हि तस्यार्थः कर्मावबोधनं नामे"[2]ति मीमांसाभाष्यकृद्वचसो योजन-परं यदपीत्यादि भाष्यं विवृणोति—नन्विति ॥ श्रुतिवाचः कर्मपरा इति मीमांसा-विदुषां ईरणकम् कथनं विधिकाण्डपरम्, न ब्रह्मकाण्डपरम्। "अथातो धर्म-
20 जिज्ञासे"[3]ति प्रस्तुत्यैव "दृष्टो हि तस्यार्थ"[4] इति निर्देशात्, तत्पदेन विधि-काण्डस्य परिग्रहात् प्रकृतं सुकृतम् "अथातो धर्मजिज्ञासे"[5]ति प्रकृतं सुकृतम् धर्मं प्रतिपादयितुं तस्येति श्रुतिपरा वागिह धर्ममीमांसाशास्त्रे स्फुटतः स्पष्ट-मेव सङ्कुचिता भवतीति वृद्धवाक्यवशाद् वेदान्तानां सिद्धब्रह्मपरतायां न काऽपि हानिरिति भावः। अत्र भाष्ये विधिप्रतिषेधशास्त्राभिप्रायमित्यनेन
25 कर्मकाण्डसामान्यमिह परिगृहीतम्। इतरत् सुगमम् ॥१०३॥

[45a] यदि जै मि नि सूत्रवशेन पुन-
निखिलाः श्रुतयः क्रियया८र्थयुजः ।
कथमत्र च तर्हि तु भूतकथा
विधिनैकवचस्त्ववशान्ननु सा ॥१०४॥

5 अथ "आम्नायस्य क्रियार्थत्वादि"[1]ति जै मि नि सूत्रेण श्रुतिवचनं सर्वमपि क्रियार्थम्, साक्षात् परम्परया वेति शङ्कापरिहारपरम् अपि चाम्नायस्येत्यादि क्रियासाधनवस्तूपदेशेनेत्यन्तं भाष्यं श्लोकाभ्यां विवृणोति—यदीति ॥ नन्विति ॥ सिद्धान्तिना कर्मकाण्डवादिनं स्वं प्रति निरुक्तं दोषमनूद्य परिहरति—यदि जै मि नि सूत्रवशेनेति ॥ "आम्नायस्ये"[2]ति जै मि नि सूत्रवशेन 10 सर्वाः श्रुतयः क्रियया८र्थयुजः अर्थवत्य इति यदि स्वीक्रियते, तर्हि श्रुतिषु "वायुर्वै क्षेपिष्ठा देवते"[3]त्यादिभूतार्थकथा कथमुपपादनीया ; "वायुरि"[4]त्यादीनां क्रियार्थत्वाभावादिति सिद्धान्तिनिरुक्तो दोषः । परिहरति—विधिनेति ॥ वेदवचसां सर्वेषामपि न साक्षादेव क्रियया८र्थवत्त्वम्, किन्तु साक्षाद्वा परम्परया वा । एवं च विधिवाक्येनैकवाक्यतया "वायुर्वै क्षेपिष्ठे"[5]त्यादि- 15 वचसां क्रियार्थताकथा । तथाच परम्परया क्रियार्थत्वं "वायुरि"[6]त्यादीना-मिति कर्मकाण्डिनो मते न कोऽपि दोषः । इति भावः ॥१०४॥

[45b] ननु भूतमिदं प्रतिपाद्य ततो
विधिना८न्वयि चेति किलात्र कथा ।
श्रुतिशीर्षवचोऽपि परात्मपदं
20 वदतु स्फुटमावृतिभङ्गकृते ॥१०५॥

अथ कर्मकाण्डिनो भावमनूद्य स्वाभिप्रायं विशदयति—नन्विति ॥ "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यत"[7] इत्याक्षेपे "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरि"[8]ति किल "वायुरि"[9]त्यादि वाक्यं भूतार्थं प्रतिपाद्य विधिना८न्वयि भवतीति जै मि नि मते कथा भवति । तत्र

यथा 'वायुरि"[1]त्यादिवाक्यं प्रयोजनसम्पत्तये विधिनाऽन्वितं भवति, तथाऽविद्यावरणभङ्गकृते श्रुतिशीर्षवचोऽपि परमात्मपदं स्पष्टं कथयतु ; वचनानां सप्रयोजनार्थपरत्वेनैव प्रामाण्यादित्यर्थः। अत्र भाष्यम्—अपिचाम्नायस्येति ॥ "आम्नायस्ये"[2]ति पूर्वपक्षाभिप्रायेण। यागनिर्वृत्तय उपदिश्यमानसोम-
5 दध्यादिपदानां क्रियार्थत्वाभावादानर्थक्यं परिपतेत् कर्मकाण्डिनो मतेऽपीत्यर्थः। "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युरि"[3]ति सिद्धान्त-सूत्रन्यायावलम्बेन पूर्वमीमांसकपक्षमुट्टङ्कयन् तद्दृष्टान्तेन स्वपक्षं दर्शयति—प्रवृत्तीति ॥ व्रीह्यादिपदानां प्रवृत्तिनिवृत्त्याद्यर्थकत्वाभावेऽपि भव्यक्रियार्थत्वेन भूतार्थोपदेशकत्वं चेद् वेदान्तभागस्यापि कूटस्थोपदेशकत्वं भवतु।
10 परमतेऽपि भूतस्य क्रियात्वाभावेऽपि व्रीह्यादिपदानां तदुपदेशकत्वस्थितेरिति भावः। भूतस्याक्रियात्वेऽपि क्रियार्थत्वेन तत्कथनं घटत इत्याशङ्कते—अक्रियात्वेऽपीति ॥ परिहरति—नेति ॥ भूतवस्तुनः क्रियानिर्वृत्तिः प्रयोजनं भवतु, नतु स्वयं क्रिया भवति। भूतवस्तुपदानां तत्प्रतिपादकत्वे सामर्थ्यं सिद्धमेवेति भावः। पदानां भूतवस्तूपदेशे सामर्थ्यसाधने सिद्धान्ते को
15 वा लाभ इति प्रश्नपूर्वकं लाभं दर्शयति—यदि नामेति ॥ पदानां भूतवस्तूपदेशसामर्थ्ये सति वेदान्तभागानामप्यविद्यानिवर्तनप्रयोजनविषयत्वं ब्रह्मणो भवति। अत्याशयः ॥१०५॥

[46a] अपि च प्रतिषेधवचस्सु नञो
गमयन्ति हि साध्यपुरःप्रकृतिम्।
20 सहजां नहि साध्यमिहास्त्यपरं
क्वचिदस्ति तु लक्षणया नयतः ॥१०६॥

अथ पूर्वं कर्मकाण्डगतसिद्धार्थबोधकवाक्यवदेव वेदान्तभागस्य ब्रह्मबोधकत्वमित्युक्तम्, सम्प्रति पुनः "ब्राह्मणो न हन्तव्य"[4] इत्यादिभाष्यं तात्पर्यतो विवृणोति—अपि चेति ॥ "ब्राह्मणो न हन्तव्यः"[5] "न सुरां
25 पिबेदि"[6]त्यादिप्रतिषेधवचस्सु श्रूयमाणा नञः सहजाम् स्वाभाविकीं साध्यपुरः-प्रकृतिम् साध्यस्य हननपानादेः पुरःप्रकृतिम् प्रागवस्थां प्रागभावलक्षणां

गमयन्ति बोधयन्ति। एवं च सति नञर्थस्यैवात्र प्राधान्यात् तस्य च सिद्धत्वात् साध्यान्तरं नास्त्येव। एवं च निषेधवाक्यस्य हननाद्यौदासीन्ये[46b]नैव सप्रयोजनत्वदर्शनात् तद्वदेव वेदान्तवाक्यमपि सिद्धब्रह्मबोधनेनाविद्यानिवृत्तिद्वारा सप्रयोजनं सत् प्रमाणं भवतु। ननु—
5 "नेक्षेतोद्यन्तमादित्यमि"[1]त्यादिप्रजापतिव्रतवाक्ये उद्यदादित्यदर्शनाभावसङ्कल्पं कुर्यादित्यर्थादन्यत्रापि नञो भावार्थकतया साध्यार्थकत्वमस्त्वित्याशङ्क्याह —क्वचिदिति ॥ क्वचित् प्रजापतिव्रतादौ नयतः "तस्य व्रतमि"[2]त्युपक्रमादिलक्षणन्यायेन लक्षणया साध्यार्थत्वमस्ति तु सत्यम्, नतु तथा सर्वत्रापि; लक्षणाग्राहकप्रमाणानैयत्यात्, यथाश्रुताभावार्थेनैवाभीष्टप्रयोजनसिद्धेरिति
10 भावः। अत्र भाष्यम्—अपिचेति ॥ यद्य क्रियार्थानामानर्थक्यम्, तर्हि "ब्राह्मणो न हन्तव्य"[3] इत्यादौ हनननिवृत्त्युपदेशेन तत्र प्रवृत्त्यौदासीन्यमात्रजननात् क्रियातत्साधनयोरनुपदेशाद् हननक्रियाभावबुद्धिजनितौदासीन्यव्यतिरेकेणार्थान्तरकल्पनायां मानाभावादौदासीन्योत्पत्तावभावबुद्धेः स्वत एवोपशमात् "नेक्षेते"[4]त्यादौ "तस्य व्रतमि"[5]त्यादिमानबलेन लक्षणया क्रियार्थत्वेऽपि
15 "ब्राह्मणो न हन्तव्य" [6]इत्यादौ तदभावाद् वाक्यमिदमनर्थकमेव स्यात्। तस्माद् भूतार्थमपि सप्रयोजनं सर्वं सार्थकम्, निष्प्रयोजनमेव भूतार्थमनर्थकम्। एवं च वेदान्तभागः सिद्धपरोऽप्यविद्यानिवृत्तिप्रयोजने सार्थक एव। इति भावः। इतरदतिरोहितार्थम् ॥१०६॥

[47a] विधिसङ्गतमेव वचो निखिलं
20 ननु मानमितोऽन्यदमानमिति।
यदुदीरणमेतदपास्तमदः
फलवत् किल रज्जुवचःसदृशम् ॥१०७॥

अथ विधिसम्बद्धमेव सार्थकत्वेन मानम्, नेतरत्, सप्तद्वीपादिवाक्यवदिति चेत्, नायं सर्पः, किन्तु रज्जुरितिवाक्यादपि वस्तुमात्रप्रदर्शने
25 प्रयोजनदर्शनेन मानत्वं घटत एवेति शङ्कातत्परिहारपरं यदपीत्यादिभाष्यं विवृणोति—विधीति ॥ विधिसङ्गतमेव निखिलं वचनं प्रयोजनवत्त्वाद् मानम्।

इतः विधिसङ्गतात् अन्यद् निष्प्रयोजनतयाऽमानमिति वेदान्तवाक्यमपि विधिस्पर्शाभावादमानमिति यदुदीरणम्, तदपास्तम्। अदो वेदान्तवाक्यं सिद्धार्थबोधकमपि संसारनिवारणद्वारा फलवदेव रज्जुरियम्, न सर्प इति वाक्यवदिति योजना। यदपीति तत् परिहृतमिति भाष्ये सुगमे ॥१०७॥

5 अथ विन्नचितोऽपि जनस्य पुन-
र्भविता प्रतिभाति हि पूर्वसमम्।
नहि रज्जुकथासमताऽऽत्मगिरा-
मुपपाद्यतया नयतो भवति १०८॥

अथ रज्जुरियम्, न सर्प इति कथनेन भ्रमनिवृत्त्या भयकम्पादि निवर्तते,
10 न तथा प्रकृते; श्रुतात्मतत्त्वस्यापि जनस्य संसारनिवृत्त्यदर्शनाद् यथापूर्वं संसारस्यैव दर्शनादितिपूर्वपक्षपरं नन्वित्यादिभाष्यं व्याचष्टे—अथेति ॥ विन्नचितोऽपि विचारितात्मतत्त्वस्यापि जनस्य भविता संसारिता पूर्वसमम् ज्ञानपूर्वकालसमं ज्ञानकालेऽपि प्रतिभाति। रज्जुरियम्, न सर्प इत्यादिवाक्यसमता न्यायेनात्मवाचामुपपाद्यत्वेन न भवति; रज्जुवाक्याद् भ्रमनिवृत्तिवदात्म-
15 वाक्याद् भ्रमनिवृत्तेरदर्शनात्। इति भावः। नन्वित्यादिभाष्यं सुगमम् ॥१०८॥

[47b] अभिमानजसंसरणप्रलयो
मृदुलात्ममतेरभिमानलयात्।
परिपक्वतरात्ममतेर्विलयो
ननु मूलमलस्य विमूलतया ॥१०९॥

20 अथ अत्रोच्यत इत्यादिसिद्धान्तभाष्यार्थं सङ्गृह्य दर्शयति—अभिमानजेति ॥ द्विविधः संसारः—अभिमानजो मूलाविद्याजश्चेति। अपक्वात्ममतेर्देहाद्यभिमानलयादभिमानजसंसारस्य विलयोऽनुभवसिद्ध एव। गौरोऽहम्, ब्राह्मणोऽहमित्याद्यभिमानभ्रमकाले देहजननानन्तरं समागतभार्यापुत्रपशुगृहादिषु

विकलेषु स्वयमेव विकल इत्येवं शोकभाग्भवति। स एव तत्त्वोपदेशानन्तरं देहाद्यैक्याभिमाने गलिते सति पुत्रभार्यादिषु विकलेष्वपि स्वयं न दुःखमश्नुते ; आगमापायि निखिलं देहवदेवेति सर्वविद्वज्जनानामनुभवात्। परिपक्वात्मसाक्षात्काराच्च मूलमलस्य अविद्यायाः समूलतया विलयो भवति।
5 रज्जुसर्पस्थलेऽपि रज्जुरित्युपदेशजज्ञानाद् भ्रान्तावप्रमाण्यशङ्कया भयकम्पादिनिवृत्तावपि दीपालोकेन स्पष्टरज्जुसाक्षात्कार एव सर्पभ्रमो निवर्तते, नान्यथा। तद्वत् प्रकृतेऽपि विवेचनीयम्। एवं च रज्जुसर्पन्यायः प्रकृतेऽपि समानः। इति भावः ॥१०९॥

[48a]     इह नावगतेतिगिरा गुरुणा
10     स्मरता किल संसरणं द्विविधम्।
भवहेतुरपि द्विविधो गमितः
स्फुटमावृतिरित्यभिमान इति ॥११०॥

अथ भाष्ये द्विविधः संसारः, द्विविधो भ्रमहेतुः, अपक्वज्ञानादभिमानजनिवृत्तिः, पक्वज्ञानादविद्याविलयेन सर्वभवनिवृत्तिरित्यादिकथा नाक्षरारूढे-
15 त्याशङ्क्याक्षरारूढामेनां कथां दर्शयति—इहेति ॥ इह प्रकरणे गुरुणा भाष्यकृता नावगतेतिगिरा संसारं द्विविधं स्मरता किल भवहेतुरपि स्फुटं द्विविधो ज्ञापितः। आवृतिरिति अविद्येति अभिमान इति आसक्तिविशेष इति चेत्यन्वयः। अत्र भाष्ये नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुमित्युपक्रमात् तस्माद् नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वम्, यस्य तु
20 संसारित्वम्, नासाववगतब्रह्मात्मभाव इति चोपसंहारात्। तत्र न यथापूर्वं संसार इति कथनेन यथापूर्वपदस्वारस्यात् कश्चन संसारो ज्ञानाद् नश्यति, अपरः कश्चन संसारो ज्ञाने सत्यपि तिष्ठतीति ज्ञापनात्, नहीत्याद्युपपादनभाष्ये सदृष्टान्तं देहाद्यभिमानजः संसारो ज्ञानकाले न तिष्ठतीति कथनेनानभिमानजः केवलाविद्याकृतस्तिष्ठतीति ज्ञापनाद् द्विविधः संसारः संसारहेतुरपि
25 द्विविधो निरुक्तो भाष्यारूढ एव। इति भावः ॥११०॥

[48b] अभिमानकृतं किल संसरणं
परमात्मपरोक्षमतौ श्रवणात् ।
अभिमाननिवृत्तिवशेन पुन-
र्विनिवर्तत एव यथोचितकम् ॥१११॥

5 अथ भाष्यसम्मतमभिमानलक्षणमिथ्याज्ञाननिमित्तः पारिप्लवः संसारः परोक्षात्मज्ञानाद् निवर्तत इत्यर्थं विशदयति—अभिमानकृतमिति ॥ श्रवणात् परमात्मपरोक्षमतौ सत्याम् अभिमानकृतं संसरणं पारिप्लवलक्षणमभिमाननिवृत्त्या यथोचितं निवर्तते । यथा यथाऽभिमाननिवृत्तिदार्ढ्यमुपजायते, तथा तथा तज्जनितसंसरणनिवृत्तिर्भवति । इत्यर्थः ॥१११॥

10 भुजगभ्रमतो भयकम्पजना-
वुरगो नहि रज्जुरितिश्रवणात् ।
दृढनिश्चयतो भयकम्पहृता-
वपि नो भ्रमहानिरदीपयुजि ॥११२॥

अथ दृष्टान्तरज्जुसर्पस्थलेऽपरोक्षज्ञाननिवर्त्यं कार्यद्वयं दार्ष्टान्तिकवदेव 15 दर्शयति—भुजगेति ॥ भुजगभ्रमेण भयकम्पादिजनौ सत्यां नायमुरगः, किन्तु रज्जुरित्याप्तमुखात् श्रवणाद् दृढपरोक्षनिश्चयेन जातेन भयकम्पहृतावपि दीपादि-रहिते देशेऽपरोक्षज्ञानाभावात् चाक्षुषः सर्पभ्रमो न निवर्तत एवेति दृष्टान्ते विनिवर्त्यद्वैविध्यमुन्नेयम् । इति भावः ॥११२॥

[49a] अभिमानहृतौ परमात्ममते-
20 रभिमानजबन्धहृतावपि हि ।
सुदृढावरणप्रभवस्तु भव-
ससतनुत्वमयो ननु नैति लयम् ॥११३॥

दार्ष्टान्तिकेऽपि निवर्त्यद्वैविध्यं प्रकटयति—अभिमानेति ॥ परमात्ममते-रभिमानलक्षणभ्रमनिवृत्त्याऽभिमानजबन्धनिवृत्तावपि सुदृढावरणप्रभवः अविद्या-वरणप्रभवः सतनुत्वमयः स्थूलसूक्ष्मदेहवत्त्वमयः संसारो लयं न प्राप्नोति। इत्यर्थः ॥११३॥

5 श्रवणान्मननादभिमानलया-
त्तदुपार्जितसंसरणप्रलयः ।
परमात्मधियाऽऽवरणे गलिते
चिदसङ्गतया सदखण्डमयी ॥११४॥

एनमेवार्थं प्रकटयति—श्रवणादिति ॥ श्रवणाद् मननाच्च परोक्षनिश्चयात्म-
10 ज्ञानेनाभिमानभ्रमनिवारणे सत्यभिमानजसंसरणप्रलयो भवति। निदिध्या-सनेन परमात्मसाक्षात्कारादविद्यालक्षणावरणे गलिते सति चित् सत्स्वरूपा-सङ्गत्वेनाखण्डमयी त्रिविधपरिच्छेदरहिता भवति। इत्यर्थः ॥११४॥

[49b] अपरोक्षधिया परिपाकयुजाऽऽ
वरणे विलयं प्रतियाति सति ।
15 अपयाति भवस्तनुपूर्वभवो
ह्यवशेषविशेषविहीनतया ॥११५॥

अथ मूलावरणभङ्गप्रकारमेव विशदयति—अपरोक्षेति ॥ दीर्घकालादर-नैरन्तर्याभ्यासतः परिपाकयुजाऽपरोक्षबुद्ध्याऽऽवरणे मूलाविद्यालक्षणे विलयं प्रतियाति सति तनुपूर्वभवः शरीरादिजनितो भवः संसारः अवशेषविशेषविहीनतया
20 अवशेषलक्षणो विशेषः, तद्रहितत्वेन निरवशेषतया अपयाति। इत्यन्वयः। पक्वतमात्मसाक्षात्काराद् निरवशेषाविद्यानाशः। इति भावः ॥११५॥

[50a] अथ बन्धनबीजमिहावरणं
प्रथमं किल मूलमलं प्रबलम् ।

फलसम्मुखकर्मवशाद् वपुषि
स्थितवत्यपि नश्यति वेदनतः ॥११६॥

अथ मूलाविद्यानाशे कालं पद्यद्वयेन श्लोकाभ्यां दर्शयति—अथेति ॥ चिरेति ॥ प्रबलम् द्वितीयबन्धनहेत्वभिमानाद्यपेक्षया प्रबलं मूलमलम् अविद्या-
5 लक्षणं किल प्रथममावरणं बन्धनबीजं भवति । तच्च फलसम्मुखकर्मवशात् प्रारब्ध-कर्मवशात् वपुषि स्थूलदेहे फलभोगाय स्थितवत्यपि वेदनतः परिपक्वसाक्षा-त्काराद् मूलमलं नश्यति ॥११६॥

चिरवाक्यवशादिति केचन तु
प्रवदन्ति परे तु ततोऽन्यविधम् ।
10 फलसम्मुखकर्मनिरोधवशा-
त्परिपक्वमतिर्न तनोः पतनात् ॥११७

प्रारब्धेन तत्त्वज्ञानादविद्यानाशेऽपि शरीरं तिष्ठतीत्यत्र हेतुमाह—चिरेति ॥ "तस्य तावदेव चिरं यावद् न विमोक्ष्ये अथ सम्पत्स्य"[1] इति वाक्यादविद्या-नाशेऽपि तत्त्वनिष्ठस्य तावान् विदेहकैवल्यविलम्बः, यावत् प्रारब्धकर्मणो
15 न विमोक्षः, अथ प्रारब्धविलयोत्तरं सत्सम्पत्तिरित्यर्थकादिति केचन वदन्तीत्यर्थः । परेतु ततः मतात् अन्यविधम् अन्यप्रकारं वदन्तीत्यन्वयः । तमेव प्रकारं विशदयति—फलेति ॥ पतनात् देहपातात् पुरतः पूर्वं फलसम्मुख-कर्मवशात् प्रारब्धकर्मकृतनिरोधवशेन परिपक्वमतिर्न भवेदेव । शरीरपातकाल एव साक्षात्कारादविद्यानाशो भवति । अविद्याया एवासङ्गतातिरस्कार-
20 कत्वेन देहपातात् पूर्वमेव साक्षात्कारेणाविद्यानाशे प्रतिबन्धकापगमाद-सङ्गताऽभिव्यक्तौ प्रारब्धकर्मणोऽप्यसम्बन्धाद् भोगदत्वायोगेन सद्योमुक्तिरेव स्यात् ॥

"जन्तोरपश्चिमतनोः सति कर्मसाम्ये
निःशेषपाशपटलच्छिदुरा निमेषात् ।

कल्याणि देशिककटाक्षसमाश्रयेण
कारुण्यतो भवसि शाम्भववैधदीक्षा ॥"[1]

इति मतान्तरे प्रारब्धस्यापि सम्बन्धपरिहारेण सद्यः शरीरपाताज्ञानेनात्म-
ज्ञानमतेऽपि तथात्वापत्तेः, न तथोपलभ्यते । अतः शरीरपातकाल एव
5 साक्षात्कारादविद्याविलयः, ततः पूर्वमविद्यानाशकात्मसाक्षात्कारो नोदेती-
त्याहुः ॥

अयमाशयः—"भूयश्चान्ते विश्वमायानिवृत्तिरि"[2]ति श्वे ता श्व त र मन्त्र-
स्वारस्याद् देहपातात् पूर्वं मन्दमध्योत्तमसाक्षात्कारादिभेदेनाविद्यालेशानां
पदे पदे विलयो भवतीति दिक् । अत्र भाष्यम्—नावगतेति ॥ अवगतात्म-
10 तत्त्वस्य यथापूर्वं न संसारो भवति ; तत्त्वज्ञानसामर्थ्यादिति भावः ।
तदेवोपपादयति—नहीति ॥ तत्त्वज्ञानात् पूर्वं शरीराद्यभिमानेन यादृशः
संसारः, ज्ञानात् पश्चाद् न तादृश इत्यर्थः । तत्रैव दुःखसुखभेदेन दृष्टान्त-
द्वयं क्रमेण दर्शयति—नहि धनिन इति ॥ नच कुण्डलिन इति ॥ सर्वमितरत्
सुगमयोजनम् ॥११७॥

15 [50b] अशरीरवचो ह्यभिमानलया-
द्धृतिभञ्जनतश्च युतार्थयुगम् ।
इति भाष्यकृतो मनसा विशदं
प्रविभज्य वदन्ति तदुक्तमिति ॥११८॥

अथ नावगतेत्यादिभाष्ये संसारद्वैविध्यसूचनेन तद्धेतुद्वैविध्यसूचनात्
20 शरीरित्वस्यापि द्वैविध्यप्राप्तेरशरीरित्वमपि द्विविधं भाष्यकृत्सम्मतं
भवतीति मनसि निधाय "अशरीरमि"[3]ति श्रुत्यवतारणभाष्यं तदुक्तमित्ये-
तदवतारयति—अशरीरेति ॥ "अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशत"[4] इति
श्रुतिवचः । अभिमानेनाविद्यया च स्थूलादिशरीरद्वैविध्यात् तत्त्वज्ञानेन
पक्वापक्वलक्षणेनाभिमानलयात् धृतिभञ्जनतश्च अविद्यानाशाच्च युतार्थयुगम् अर्थ-
25 द्वययुतम् इति भाष्यकृतः आचार्या विचार्य मनसा विशदं वाक्यार्थं विभज्य
तदुक्तमिति श्रुत्यवतारणपरं वाक्यं वदन्ति । इत्यन्वयः । अशरीरम् अभिमान-

निवृत्त्याऽभिमानभ्रमजन्यशरीररहितमभिमानभ्रमाधीने प्रियाप्रिये पुत्रो जातः, पुत्रो मृत इत्यादिविधप्रियाप्रिये न स्पृशतः। तत्त्वसाक्षात्कारात् परिपक्वान्मूलाविद्याविलयेन स्थूलादिशरीररहितं प्रियाप्रिये क्षुत्पिपासाजननमरणादिलक्षणे न स्पृशतः। इति द्विविधः श्रुतेरर्थो विवेचनीयः ॥११८॥

5 [51a] अभिमानलयादशरीरकता
न भवेत्तनुपातवशाद् भवति।
इति चेन्न शरीरयुतिर्द्विविधाऽऽ-
वृतियोगवशादभिमानजनेः ॥११९॥

अथ श्रुतिभावानभिज्ञकृताक्षेपपरं शरीरेत्यादि भाष्यम्, श्रुतिभावोद्घाटनपरं
10 न सशरीरत्वस्येत्यादिसिद्धान्तभाष्यं च विशदयति—अभिमानेति ॥ "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत"[1] इत्यत्र शरीराभावः प्रसिद्धशरीराभाव एव विवक्षितो भवति। स च शरीरपातादनन्तरमेव भवति, शरीरपातात् पूर्वमभिमानलयाद् न भवति। एवं च नायं सर्प इति ज्ञानाद् भ्रमसिद्धः सर्पो निवर्तते, तत्त्वज्ञानात्तु न शरीरं निवर्तत इति वैषम्याद् निष्प्रयोजन-
15 मात्मविज्ञानमित्यप्रामाण्यमपतति विधिस्पर्शमन्तरेणेत्याक्षेपार्थः। अनेन शरीरे पतितेऽशरीरत्वं स्यात्, न जीवत इति भाष्यं विवृतं भवति। दूषयति—नेति ॥ शरीरित्वं द्विविधम्—अविद्यायत्तमभिमानायत्तं [51b] चेति। तथा परोक्षज्ञानादभिमानतज्जन्यानर्थनिवृत्तिः, अपरोक्षज्ञानात् परिपक्वादविद्यातज्जनितपदार्थयोर्निवृत्तिरिति भावः। अत्र भाष्यम्—न सशरीरत्वस्येति ॥ मिथ्या-
20 ज्ञाननिमित्तत्वादिति ॥ मिथ्या च तदज्ञानं च मिथ्याऽज्ञानम् अविद्या। मिथ्या च तद् ज्ञानं च मिथ्याज्ञानम् अभिमानभ्रमः। मिथ्याज्ञानं मिथ्याज्ञानं चेत्येकशेषः। मिथ्याज्ञाने निमित्ते ययोस्ते मिथ्याज्ञाननिमित्ते, तयोर्भावस्तत्त्वादिति भावद्वयहेतू द्वावपीह परिगृहीतौ। सशरीरत्वस्येत्यत्रापि शरीरित्वाभिमानजं शरीरम् शरीरं चाविद्यकं शरीरे, तयोर्यः स्वामी, तस्य भावः,
25 तत्त्वस्येत्यर्थः। सशरीरत्वस्य मिथ्याज्ञाननिमित्तत्वमुपपादयति—नहीति ॥ अत्र मिथ्या च तदज्ञानं च मिथ्याऽज्ञानं मूलाविद्या। शरीरात्माभिमान-

लक्षणम् । लक्ष्यतेऽनेनेति लक्षणम्, शरीरात्माभिमान एव लक्षणम् ज्ञापकम्, कार्यत्वात् कारणस्येति शरीरात्माभिमानलक्षणं शरीरात्माभिमान-सहितं मिथ्याज्ञानम् मुक्त्वाऽन्यतः सशरीरत्वम् शरीराभ्यां सहितम् सशरीरम्, तस्य भावस्तत्त्वम् । इत्यर्थः ॥११९॥

5 [52a] अभिमानमयभ्रमतस्तनुमा-
नभिमानकरावृतितश्च भवेत् ।
जननीजठरे तनुदेहकरा-
वरणेन किलातनुदेहभवः ॥१२०॥

द्विविधशरीरवत्त्वमेव सहेतुकमुपपादयति—अभिमानेति ॥ अभिमानमय-
10 भ्रमतो जनस्तावदाभिमानिकतनुमान् भवेत् । एवम् अभिमानकरावृतितः अभिमानहेत्वविद्यातश्च तनुमान् भवेत् । अविद्यायाः स्थूलदेहसाधनतामुप-पादयति—जननीति ॥ जननीजठरे तनुदेहकरावरणेन सूक्ष्मदेहसम्बन्धहेतुभूता-विद्यालक्षणावरणेन सूक्ष्मदेहघटकान्तःकरणगतकर्मणा अतनुदेहभवः स्थूलदेह-निष्पत्तिर्भवति किल । तेन लोकसिद्धव्यावहारिकसूक्ष्मस्थूलदेहसम्बन्धोऽ-
15 सङ्गस्याविद्याकृतासङ्गतावरणायत्तः । इति विवेकः ॥१२०॥

[52b] असुतः सुतवानभिमानवशा-
त्सुतदुःखजनावतिदुःखयुतः ।
मलिनेन कृशेन युतो वपुषा
तत एव वपुस्तदिहान्यदिव ॥१२१॥

20 अथाविद्यकाद् देहद्वयादतिरिक्तमभिमानजं देहमन्वयव्यतिरेकाभ्यां दर्शयति श्लोकाभ्याम्—असुत इति ॥ अभिमानेति ॥ पूर्वं ब्रह्मचार्यवस्थादौ असुतः सुतरहितः पश्चात् सुतवान् सुताद्यभिमानेन सुतादिदुःखोत्पत्तौ पितुरपि दुःखोदयेन मलिनेन कृशेन स्थूलव्यावहारिकदेहेन युतो भवति । मलिन-कृशदेहयुतत्वहेतोरेव तद्व्यावहारिकमेव वपुरन्यदिवेहाभिमानस्थले भवति ।

तदयमाशयः—व्यावहारिकशरीरमेव सुताभिमानजनितमनोमयशरीरसंवलितत्वादसुतावस्थव्यावहारिकशरीराद् भिन्नमिवाभिन्नमपि भवति ; मनोमयशरीरक्लेशेन तत्संवलनाद् व्यावहारिकेऽपि कार्श्यमालिन्यादेर्दर्शनात् । अतो मनोमयमाभिमानिकं शरीरम्, यत्संनिधानात् प्रसिद्धं शरीरमपि

5 कार्श्याद्यनुभवति । इति दिक् ॥१२१॥

[53a]

अभिमानलयान्न तु दुःखलवोऽ-
प्यत एव पुनः पृथगेव ततः ।
अत एव सुतादिमृतावपि त-
द्वपुरुज्ज्वलरूपमहो विशदम् ॥१२२॥

10 अभिमानेति ॥ तत्त्वज्ञानादभिमानभ्रमलये तु दुःखलवोऽपि नानुभूयते । अत एव दुःखानुभवाभावादेव ततः मनोमयादाभिमानिकात् प्रसिद्धं वपुः पृथगेव भवति । अत अव भिन्नत्वादेव मनोमयशरीरसंवलनात् सुतादिमरणेऽपि तद्वपुः अभिमानदशास्थमेव प्रसिद्धवपुः उज्ज्वलरूपं सर्वलोकेषु विशदम् अतिस्पष्टं भवति । अनेनाभिमानभ्रमनाशादाभिमानिकदेहविलयात् तत्सम्पर्काभावात्

15 स्थूलं व्यावहारिकं शरीरमक्लेशमेव दृश्यत इति सिद्धं भवति ॥१२२॥

सहजं वितनुत्वमथावरणा-
दभिमानवशादपि विग्रहिता ।
अशरीरकता नतु कर्मकृता
यदिहात्मनि कर्मयुतिर्न भवेत् ॥१२३॥

20 अथाशरीरत्वसम्पत्तय एव विधिजन्यं कर्मापेक्षितं भवतु, एवञ्च श्रुत्यन्तभागोऽपि विधिसंवलितो भवत्वित्याशङ्कापरिहारपरं नित्यमशरीरत्वमित्यादि भाष्यं व्याचष्टे—सहजमिति ॥ वितनुत्वमात्मनः सहजम् स्वाभाविकम् । शरीरिता तावदावरणजा, अभिमानजा चेति द्विविधा भवति । एवञ्च

तत्त्वज्ञानादभिमानावरणयोर्विलये शरीरद्वयमपि यथोचितं कारणविलयाद् विनश्यत्येव। तेनाशरीरिता निमित्तायत्तशरीरापगमे स्वाभाविकी सर्वानुभवसिद्धा भवति। ननु अशरीरत्वं विध्यायत्तकर्मकृतमेव भवत्विति शङ्कां वारयति—अशरीरकतेति ॥ इहात्मनि यत् यस्मात् कर्मयुतिर्वक्ष्यमाणन्यायेन न भवेत्, तस्माद् हेतोरशरीरकता कर्मकृता न भवति। इति पदयोजना ॥१२३॥

[53b]

क्रियया न युतेर्घटना नयत-
स्तदिहात्मनि कर्तृकता न भवेत्।
यदि साहजकी वपुरात्मयुति-
र्वपुषो विलये स्वकहानिरपि ॥१२४॥

शुद्धेऽसङ्ग आत्मनि क्रिया न सम्भवतीत्येतदुपपादयति—क्रिययेति ॥ इहात्मनि असङ्ग आत्मनि नयतः न्यायेनासङ्गत्वलक्षणेन क्रियया युतेर्घटना न सम्भवति। अतः क्रियायोगाभावात् कर्तृताऽपि कर्मसम्बन्धिनी बाधितैव। यदि च शरीरात्मयोगोऽविद्याभिमानायत्तो न भवति, किन्तु साहजिकः, तर्हि वपुषो विलये सति स्वकहानिरपि आत्मनो हानिरपि स्यात्; साहजिकधर्मविलयस्य धर्मिविकारकरत्वेन धर्मिविलयहेतुत्वौचित्यात्। इति भावः। अत्र नित्यमित्यादि भाष्यं सुगमम् ॥१२४॥

[54a]

वपुरात्मयुतौ सुकृतासुकृते
भवतस्तु तयोर्वपुरात्मयुतिः।
इति चात्र परस्परसंश्रयता
तदनादिपरम्परिकैव गतिः ॥१२५॥

अथ सशरीरत्वं जीवकृतधर्माधर्मनिमित्तकं भवतु, न त्वारणाभिमाननिमित्तकम्; येन तत्त्वज्ञानादभिमानभ्रमावरणनिवृत्त्या निवर्तेत सशरीरत्वम्। एवं च धर्माधर्मोपरम एव देहोपरमौचित्येन जीवद्दशायामेवाशरीरत्व

कथं वक्तुमुचितमिति शङ्कापरम्—तत्कृतेत्यादि भाष्यम्। क्रियाया असङ्ग आत्मनि वक्तुमशक्यत्वाद् धर्माधर्मकर्तृत्वमात्मनः सशरीरत्वेनेति वक्तव्यम्, सशरीरत्वं चात्मनस्तत्कृतधर्माधर्मनिमित्तमित्यभ्युपेयमित्यन्योन्याश्रयः। यदि च शरीरे सति धर्माधर्मौ, धर्माधर्मयोः सतोः शरीरमन्यदेव, तस्माच्च
5 शरीरादन्यौ धर्माधर्मौ, इत्यनादिपरम्परा, तर्ह्ययमन्धपरम्परालक्षणा भवेदिति दूषणपरं च शरीरसम्बन्धस्येत्यादि भाष्यं व्याकरोति—वपुरिति॥ वपुरात्मयुतौ सत्यां धर्माधर्मौ भवतः, धर्माधर्मयोः सतोः शरीरात्मवपुरिति परस्पराश्रयत्वदोषः स्यात्। तत तस्मादन्योन्याश्रयदोषपरिहृतयेऽनादिपरम्परैव गतिरादरणीया भवति धर्माधर्मान्तरवशात्। तौ च धर्माधर्मौ ततः प्राक्तन-
10 शरीरात्मसंयोगादित्येवमुत्तरोत्तरं पूर्वपूर्वत इत्यन्धपरम्परैव निरवधिः स्यात्। इति भावः ॥१२५॥

[54b] यदसङ्गतया क्रियया न युतिः
सुकृतासुकृते च ततो न खलु।
वपुरात्मयुतिश्च कथं घटतां
15 तदमानवती हि परम्परिका ॥१२६॥

अथ प्रामाणिक्यनवस्था बीजाङ्कुरस्थलवदिहापि परिग्राह्या भवतीत्याशङ्क्य मानाभावेन परिहरति—यदिति॥ अखण्डस्यासङ्गतया "असङ्गो ह्ययं पुरुष"[1] इति श्रुतेः क्रियया व्यापारेण युतिः योगो न सम्भवति। ततः क्रियायोगाभावात् सुकृतासुकृते द्वे अप्यात्मनि न सम्भवतः। एवं च वपुरात्मनोर्युतिः कथं
20 घटताम्। न घटेतैवेत्यर्थः। तत् तस्मात् कारणात् अमानवती मानरहिता प्रागुक्ता परम्परा धर्माधर्माभ्यां देहयोगः, देहयोगात् तस्मादपरौ धर्माधर्मौ, ततश्चापरो देहयोग इत्येवंलक्षणा; असङ्गत्वेनात्मनो धर्मादिसम्बन्धस्यैव वक्तुमशक्यत्वात्। तस्मादियमन्धपरम्परा मानाभावादपरिग्राह्या। इति भावः ॥१२६॥

25 ननु संनिधिमात्रत एव नृपे
जयकर्तृकतेति न सम्भवति।

धनदानमुखेन युतेर्नियमा-
ज्जयसम्पदुपाश्रयते नृपतिम् ॥१२७॥

अथ संनिधानमात्रेण राजादीनां भटादिद्वारा जयकर्तृत्वं दृष्टम्, तद्वद् धर्मादिकर्तृतेति न सम्भवति ; धनदानादिद्वारा भटादिसम्बन्धाद् नृपतिं 5 जयसम्पत् भटादिद्वारा संश्रयते, तद्वदात्मन्यसङ्गे शरीरेण सम्बन्धघटकस्यादर्शनाद् धर्मादिकर्तृत्वं वक्तुमशक्यमेव । इति भावः ॥१२७॥

[55a] वपुषा परमात्मयुतेर्घटना-
मभिमानमपावरणं च विना ।
अपरः कुरुते क इहेति दृढं
10 परिचिन्तनतो न किलेति भवेत् ॥१२८॥

ननु धर्माधर्मदेहादिषु किञ्चित्सम्बन्धनिमित्तमस्त्वित्याशङ्क्य परिहरति—वपुषेति ॥ देहेन परमात्मयुतेः अखण्डार्थसम्बन्धस्य घटनामभिमानलक्षणभ्रमम्, अपावरणम् अविद्यां च विना कः पुनरपरः कुरुते । इतीह दृढं परिचिन्तनेनावरणाभिमानातिरिक्तः कोऽपि न हि भवेदिति भवति ॥१२८॥

15 चिदसक्तिसुखादितिरोभवने
चटुलावरणादभिमानमतेः ।
तनुदेहयुतेस्सुकृतासुकृता-
त्तनुदेहततिर्ननु मानवती ॥१२९॥

अथावरणाभिमानद्वयाङ्गीकारे सा बीजाङ्कुरन्यायसमाना परम्परा, नान्ध-20 परम्परातुल्या, किन्तु समूला, तथा सति प्रामाणिक्यनवस्था न दोषाय सिद्ध्यतीत्याह—चिदिति ॥ चिदसक्तिसुखादितिरोभवने ज्ञानासङ्गसुखाद्यंशानां तिरोधाने चटुलम् समर्थं यदावरणम् भावरूपाविद्यालक्षणम्, तस्मात् अभिमान-

मतेः स्थूलदेहानन्तरभाव्यहमितिभ्रमाच्च तनुदेहयोगाद् धर्माधर्मस्थूलदेह-परम्परा मानवती भवति । इत्यन्वयः । तत्रासङ्गताया आवरणेन तिरोधाने कृते सति तनुदेहसङ्गसम्भवादनादिपरम्परया धर्माधर्मस्थूलदेहसन्ततिर्भवति । तत्रानादिपरम्परासिद्धस्थूलदेहे सत्यहमभिमानलक्षणभ्रमो भवति । तेन च
5 धर्माधर्मसिद्धिः, तयोः [55b] सिद्धौ च स्थूलदेह इति विभेदः । एवञ्चेय-मनादिपरम्परा सङ्गसम्पादकावरणाभिमानयोगाद् मानवतीत्यन्धपरम्परादोषो नावतरतीति भावः । अत्र भाष्यम्—तत्कृतेति ॥ आत्मकृतधर्माधर्मतः शरीरित्वमिति शङ्कार्थः । नेति ॥ आत्मनो देहसम्बन्धे धर्माधर्मसिद्धिः, तत्सिद्धौ देहयोग इति परस्पराश्रयदोषो भवेत् ; असङ्गे क्रियायोगायोगात् ।
10 व्यक्तिभेदकल्पनायाश्च चक्रकानवस्थादोषः परिपतेदित्यर्थः । तत्संनिधानेति ॥ राजा संनिधानमात्राद् जयकर्तेति वक्तुमशक्यम् ; धनादिना भटसम्बन्धेन जयकर्तृत्वात्, आत्मनश्च देहादिना सम्बन्धे विना मूलावरणमभिमानञ्चा-परस्य निमित्तस्यादर्शनादिति भावः । मिथ्येति ॥ मिथ्या मूलाविद्या, तत्सहि-ताऽभिमानो मिथ्याभिमानः । सम्बन्धे देहादिसम्बन्धे प्रत्यक्षो हेतुरित्यर्थः । ननु
15 यजेतेति विध्यन्यथानुपपत्त्या कर्तृत्वमात्मन एष्टव्यमित्याशङ्क्य तत्राप्य-विद्याभिमानाधीनदेहादिमत्त्वेनैव कर्तृत्वम्, न शुद्धेन रूपेणेत्याह—एतेनेति ॥ इतरत् सुगमम् ॥१२९॥

[56a] अहमित्युपजातमतिः सतनौ
परमात्मनि गौणतया भवतु ।
20 भ्रमरूपतया ननु मा भवतु
प्रथितं वटुरेष मृगेन्द्र इति ॥१३०॥

अथाहमिति भ्रमजन्यसशरीरत्वस्य देहातिरिक्तात्मविज्ञानेनाहमिति भ्रान्तेर्विलयाद् विलय इत्युक्तम्, तदयुक्तम् ; सिंहो माणवकः, मुखं चन्द्र इत्यादिज्ञानवद् देहात्मनोरहमिति ज्ञानस्य गौणत्वेन तत्र शरीरवत्त्वस्य
25 विलयो न भवेत् ; तस्य भ्रमजन्यत्वाभावेन तत्त्वज्ञानानिवर्त्यत्वादिति मनसि निधाय प्रवर्तितमत्राहुरित्यादिपूर्वपक्षं विवृणोति—अहमितीति ॥ सतनौ

परमात्मन्यहमित्युपजाता मतिर्भ्रमो मा भवतु, किन्तु गौणतया भवतु ; वटुरेष सिंह इत्यादौ गौणबुद्धेरेव प्रसिद्धेरिति भावः। अत्र भाष्यम्—अत्राहुरिति ॥ वटौ सिंह इति ज्ञानवद् देह आत्मनोऽहमिति ज्ञानं गौणमेव, न भ्रमः। इत्यर्थः ॥१३०॥

5 [56b] अतिदूरतरे स्फुटभेदयुते
यदभिन्नतया मतिपूर्वतया।
अयमेष इति प्रतिपद्विदिते
तदियं प्रथिता ननु गौणमतिः ॥१३१॥

अथासदर्थकं ज्ञानं त्रिविधम्—गौणं विकल्पो भ्रमश्चेति। (१) दूरवर्ति-
10 त्वेन ज्ञायमानयोर्द्वयोरर्थयोर्बुद्धिपूर्वकमैक्यज्ञानं धर्मितावच्छेदकोल्लेखसहितं गौणम्। यथा—सिंहो माणवकः, मुखं पद्ममिति। (२) भिन्नत्वेन ज्ञातयोरर्थ-तोर्विवेकाभावेन दूरवर्तिनोः संनिहितयोर्वा दोषभेदेनैक्यज्ञानं धर्मितावच्छेद-कोल्लेखरहितं विधेयतावच्छेदकोल्लेखरहितं वा भ्रमः। यथा—स्थाणावयं पुरुष इति, दुग्धनीरयोरिदं दुग्धमिति, यथा वा शङ्खः पीत इति, स्फटिको
15 लोहित इति। (३) यत्तु द्वयोः संनिहितयोः शङ्खः श्वेतः, चक्षुःप्रभा पीतेति, स्फटिकः श्वेतः, जपाया लौहित्यमिति, अत्र नीरं क्षीरं च मिलितं द्वयमिति च विवेकग्रहे सत्यपि शङ्खस्य चक्षुःप्रभालेपात् स्फटिकं भित्त्वा जपाकुसुम-पर्यन्तं चक्षुःप्रभाधावनाद् नीरक्षीरयोः सर्वावयवशैथिल्येन परस्परयोगात् पीतः शङ्खः, स्फटिको लोहितः, इदं क्षीरमिति च ज्ञानम्, तद् विकल्पात्मकं
20 भ्रमसदृशम्, न भ्रम इति मनसि निधाय न प्रसिद्धवस्तुभेदस्येत्यादिभाष्याव-लम्बेन गौणमतिं व्युत्पादयति—अतीति ॥ अतिदूरतरे स्फुटभेदयुते ज्ञानभेद-कलिते द्वे वस्तुनी मतिपूर्वतया बुद्धिपूर्वतया यत् यस्मात् कारणात् अभिन्नतयाऽयमेष इति माणवकः सिंह इति प्रतिपद्विदिते प्रतिपदा ज्ञानेन विषयीकृते, प्रतिपद्विषयाविति पाठे प्रतिपदः ज्ञानस्य विषयाविति योजना,
25 भवतः, तत् तस्माद् हेतोरियं गौणमतिः प्रथिता प्रसिद्धा ननु निश्चयेनेत्यर्थः। अत्र भाष्यम्—प्रसिद्धेति ॥ दूरतरवस्तुनि प्रसिद्धभेदे शब्दप्रत्यययोर्गौणता

मुख्यता च भवति। यथा केसरादिमत्याकृतिविशेषे सिंहशब्दस्तत्प्रत्ययश्च मुख्यः, ततोऽन्यत्र वस्तुनि सिंहगतक्रौर्यादिशालिनि सिंहशब्दः सिंहत्व-प्रत्ययश्च गौणावेव भवतः। न त्वज्ञातभेदवद्वस्तुनोरेकत्वप्रत्ययतद्बोधकशब्दौ गौणौ भवतः, किन्तु भ्रान्तितत्प्रतिपादकशब्दावेव भवत इति भावः। प्रथम-
5 स्थलमुदाहरति—यथेति ॥ सुगमं दार्ष्टान्तिकं यथादृष्टान्तमुपपादयति—तद्वदिति ॥ अहमिति शब्दप्रत्ययौ देहेन्द्रियात्मविषयौ न गौणौ। इत्यर्थः ॥१३१॥

[57a] स्फुटभेदयुजोरपि हेतुवशा-
यदभिन्नतया त्वयमेष इति।
भवति स्फुरणं स विकल्प इति
10 प्रथितो जगति भ्रमकल्पतया ॥१३२॥

अथ विकल्पज्ञानस्वरूपं भ्रमविलक्षणं भ्रमकार्यकारि च दर्शयति—स्फुटेति ॥ स्फुटभेदयुजोः ज्ञातभेदयुक्तयोरर्थयोः हेतुवशाद् नियतविलक्षणसम्बन्धवशात् अयमेष इति शङ्खः पीतः, स्फटिको लोहितः, इदं क्षीरम्, अहमिति च यदभिन्नतया स्फुरणं भवति, स विकल्प इति जगति प्रथितः। किञ्च भ्रमकल्पतया
15 ईषदूनभ्रमतया भ्रमभिन्नत्वेऽपि भ्रमसमं कार्यकारित्वेन प्रसिद्ध इत्यर्थः। एतच्च परिगृहीतं सफलं भ्रमकल्पस्वरूपं भाष्यकृता आत्मानात्मविवेकिना-मित्यादिना ॥१३२॥

[57b] अविवेकनिमित्तयुतोभयके
मतिरेकमिदं भवतीति हि या।
20 भ्रमरूपतया गदिता निखिलै-
र्नयसञ्चयचुञ्चुजनैरपि सा ॥१३३॥

अथान्यत्रान्यशब्दप्रत्ययावित्यादिभाष्यपरिगृहीतं भ्रमस्वरूपं दर्शयति—अवि-वेकेति ॥ अविवेकनिमित्तयुतोभयके भेदग्रहाभावः, निमित्तं सम्बन्धविशेषसादृश्या-

दिलक्षणम्, ताभ्यां युतोभयके इदमेकं भवतीति या मतिः, सा मतिर्न्यायनिचय-चणैर्जैनैर्निखिलैरपि भ्रमरूपतया निगदिता भवति। यथा इयं शुक्तिः, शङ्खः पीतः, लोहितः स्फटिकः, इदं क्षीरम्, अहमिति। अत्र सर्वत्र भेदाग्रहोऽनुसन्धेयः। परस्परसम्बन्धविशेषाद् च निमित्तमूहनीयम् ॥१३३॥

5 वपुरादिचयेऽहमितिप्रतिप-
द्भ्रम एव तमोऽहिमतेः सदृशः।
धनपुत्रकलत्रगृहादिपदे
सकलव्यवहारकरः सततम् ॥१३४॥

अथाहमिति बुद्धिविशेषे भ्रमतां भ्रमकार्यं च दर्शयति—वपुरिति॥
10 स्थूलसूक्ष्मदेहात्मस्वहमिति प्रतिपत् ज्ञानं तमोऽहिमतेः सदृशः मन्दान्धकाररज्जुसर्पभ्रमसदृशो भ्रम एव भवति। स चाहमिति विशिष्टभ्रमो धनपुत्रकलत्रगृहादिपदे मम धनम्, मम पुत्रः, स्त्री, गृहमित्यादिसकलव्यवहारकारः सततमिति संसारहेतुर्भ्रमोऽयम्। इति भावः ॥१३४॥

[58a] चितिमूर्त्त्यनखादिचये निरतं
15 प्रभवेन्नु विकल्पमयोऽवगमः।
स्फुटमावृतिभञ्जनतः पुरत-
स्तनुभिन्नपरात्ममतावपि हि ॥१३५॥

अथ विकल्पज्ञानसमयं दर्शयति—चितीति॥ स्पष्टं शरीरभिन्नात्मज्ञाने ज्ञातेऽपि आवृतिभञ्जनतः पुरतः अविद्यानिवृत्तेः चैतन्यदेहप्राणेन्द्रियादि-
20 समुदाये विकल्परूपबोधः प्रकर्षेण भवेत्, भेदज्ञाने सत्यपि संसृष्टद्रव्येषु पीतः शङ्खः, लोहितः स्फटिकः, क्षीरमित्यादिबुद्धिदर्शनेनात्मेन्द्रियमनश्चितीनां नियतसंसर्गेण भेदज्ञानेऽप्यहमित्येव बुद्धेरौचित्यम्। इति भावः ॥१३५॥

भ्रमकल्पतया च विकल्पमतिः
प्रभवेद् व्यवहारपराऽहमिति ।
तदिह द्विविधा ननु भाष्यकृता
भवितानुमता हि यथेतिगिरा ॥१३६॥

5 अथ विकल्पस्य भ्रमकल्पतया भ्रमसमानकार्यकारित्वं भ्रमविकल्पयोर्द्वयोरपि भाष्यसूचितत्वं दर्शयति—भ्रमेति ॥ विकल्पमतिः अहमित्येवंलक्षणा भ्रमकल्पत्वाद् भ्रमवदेव व्यवहारपरा व्यवहारहेतुरित्यर्थः । तत् तस्मात् कारणात् इह ग्रन्थे भाष्यकृता यथेतिगिरा यथापूर्वं संसारित्वमित्यादिगिरा संसारिता द्विविधाऽनुमता—एकाऽविद्याप्रभवा, अपराऽहमित्यादिभ्रमजेति ।
10 तथाच भ्रमकल्पो विकल्पोऽपि भ्रमकार्यकारित्वाद् भ्रम इत्येव व्यवह्रियते । अत एवेह भाष्ये आत्मानात्मविवेकिनामपि पण्डितानामजाविपालानामिवाविविक्तौ शब्दप्रत्ययौ भवतः । तस्माद् देहातिरिक्तात्मास्तित्ववादिनां देहादावहम्प्रत्ययो मिथ्यैव, न गौण इति विकल्पभ्रमावेकीकृत्य व्यवहृतम् । शब्दप्रत्ययावविविक्तौ समानौ मूर्खपण्डितयोर्द्वयोरपि ; नीरक्षीरवद् देहेन्द्रियात्मस्वहमिति बुद्धेः
15 सर्वसंमतत्वात् । तत्र तावद् भ्रमस्थले संसारिता सर्वविषयेऽप्यतिदृढा ; पुत्रादौ विकले स्वयमेव विकलः, सकले स्वयमेव सकल इति प्रत्ययात् । विकल्पप्रत्यये तु न तथा दृढा संसारिता ; पुत्रकलत्रादौ विकले सकले वा स्वयं विकलः सकल इति पूर्ववत् प्रत्ययानुदयात्, शरीरक्लेश एव क्लेशानुभवदर्शनात्, देहादिसमुदायेऽहमिति प्रत्ययात्, देहातिरिक्तात्मविज्ञाने सत्यपि
20 ब्राह्मणोऽहं यक्ष्य इत्यादिनिर्देशेन विकल्पप्रत्ययोऽपि यथोचितमभ्युपेय एव । इति दिक् ॥१३६॥

[58b] अभिमानमयभ्रमनाशनत-
स्तदधीनशरीरलयेन भृशम् ।
अशरीरकतामपि देहवतः
25 श्रुतयः स्मृतयश्च वदन्ति परम् ॥१३७॥

अथाविवेकिजनप्रसिद्धाहमितिभ्रमकार्यं सूत्रयन् तद्भ्रमनाशात् तत्कार्यनाश-मपि दर्शयति श्रुतिस्मृत्युपारूढतया—अभिमानेति ॥ अभिमानमयभ्रमनाशेन आभिमानिकदेहस्य मनोमयस्य नाशेन भृशं श्रुतयः स्मृतयश्च देहवतोऽपि मायिकशरीरवतोऽपि जनस्य अशरीरकतां वदन्ति। परम् सम्यक्। इत्यन्वयः। श्रुतिस्मृती—"तद्यथाऽहिनिर्ल्वयिनी"[1]त्यादिः "स्थितप्रज्ञस्य का भाषे"[2]-त्यादिश्च भाष्य एव सङ्गृहीते। अत्र भाष्यम्—तस्मादिति ॥ अभिमानायत्त-त्वाद् देहवत्त्वस्याभिमानिकस्य जीवतोऽपि विदुषो मायिकदेहे सत्यप्याभि-मानिकदेहनाशादशरीरित्वमित्यर्थः। तद्यथाऽहिनिर्ल्वयिनीति ॥ यथाऽहिनिर्मोकः पूर्वमहमिति चैतन्यात्मना गृहीतः संसारहेतुर्मायीयो मायीयकालपरिपाक-व[59a]शाद् लोमादिवद् देहाद् पृथग्भूतोऽहमित्यगृह्यमाणो मृतस्त्यक्तः शेते, तथाऽभिमानादहमिति मायीयस्थूलदेहाभेदेन गृह्यमाणो मानसो देह आभिमानिकस्तत्त्वज्ञानपरिपाकेनाभिमानभ्रमे निवृत्ते मानसदेहातिरिक्त-मायिकशरीराद् मानसदेहोऽतिपृथग्भूतोऽहमित्यगृह्यमाणो मृतः शेत इव। अत्रायं विशेषः—मायामयी हि त्वग् मायामयकालपरिपाकेन मायामयदेहात् पृथग्भूता पश्चादहम्बुद्ध्यविषयो मृतैव, आभिमानिको मानसो देहस्तु तत्त्वज्ञानवशादभिमानभ्रमे निवृत्ते स्वयं मायिकदेहात् पृथग्भूत इव मृतो भवतीति। सचक्षुरिति ॥ मायिकचक्षुषा युतोऽयं तत्त्वज्ञानादाभिमानिक-चक्षुषा रहित इवेत्यर्थः। एवं "सकर्णोऽकर्ण इव सवागवागिव समना अमना इव सप्राणोऽप्राण इवे"[3]त्यपि योजनीयम्। स्मृतिरपीति ॥ "प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतानि"[4]त्यादिनाऽभिमानभ्रमजन्यमानसशरीराद्यपगमेन मानसः संसारो विनिवृत्तो भवतीति स्पष्टीकृतम्। "या निशा सर्वभूतानां तस्यां जागर्ति संयमी"[5]ति समाम्नाताखण्डावस्थानस्वरूपायाम् "एषा ब्राह्मी"[6]त्युपात्तायां "स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छती"[7] त्यनेन शरीरावसाने ब्रह्म-साक्षात्कारेणाविद्यायाः समूलविलये सति मायिकदेहवियोगाद् मायिकसंसार-स्याप्यपुनरुत्थानविलयेन विदेहकैवल्यसिद्धिरुपपादिता। इति दिक् ॥१३७॥

[59b] श्रवणं मननं निरतावगमः

करणं त्रितयं परिपक्वमतौ।

विषयो विधिगो यदि तर्हि मतिः
सकृदेव कृतोपकरोति विधौ ॥१३८॥

अथ ज्ञानमात्रमिह विवक्षितं चेत् "श्रोतव्य"[1] इत्यनेनैव ज्ञानांशसिद्धेः "मन्तव्यो निदिध्यासितव्य"[2] इति निर्देशानर्थक्याद् विधिविषयत्वं प्रति-
5 पत्तेरभ्युपेयमित्याशङ्कापरं तत्परिहारपरं च यत् पुनरित्यादिभाष्यं तात्पर्यतो विवृणोति—श्रवणमिति ॥ यथा रागसाक्षात्कारे रागाभ्यासः साधनम्, तथाऽऽत्मसाक्षात्कारे श्रवणादिज्ञानाभ्यासः साधनमिति श्रवणादि त्रितयं परिपक्वमतौ करणम्, विषयो ज्ञानलक्षणो विधिगः विधिविषयो यदि, तर्हि सकृदेव कृता मतिर्विधावुपकरोति। तथाच सकृदनुष्ठानेनादृष्टद्वारा कार्यसम्भवाद् मन-
10 ननिदिध्यासनानर्थक्यं परिपतेत्। अतस्तदानर्थक्यभिया परिपक्वज्ञानार्थमेव मनननिदिध्यासने अपेक्षिते। इति भावः ॥१३८॥

[60a] असकृद्धिषणाकरणं विविधं
प्रतिपत्परिपाककृते भवति।
तत आवरणप्रशमः प्रथितः
15 स पुमर्थ इति क्व विधेः कलना ॥१३९॥

उक्तमेवार्थं विशदयति—असकृदिति ॥ श्रवणादिभेदेन विविधं धिषणाकरणम् मुहुः प्रतिपत्सम्पादनं ज्ञानपरिपाकार्थमेव भवति। ततो ज्ञानात् पक्वात् आवरणप्रशमः अविद्याविलयः प्रसिद्धः। सः आवरणप्रशम एव पुरुषार्थ इति हेतोर्विधेः कलना क्व वर्तते। न वर्तत एव। इति भावः। अत्र भाष्यम्—
20 यत् पुनरिति ॥ श्रवणेनैव ज्ञानसिद्धेः श्रवणानन्तरभाविनोर्मनननिदिध्यासन-योर्वैयर्थ्यपरिहाराय ज्ञानविधिशेषत्वं ब्रह्मणो भवतु, न स्वातन्त्र्यमिति पूर्वपक्षार्थः। नेति ॥ ज्ञातब्रह्मणोऽन्यत्र विनियोगादर्शनाद् मनननिदिध्या-सनयोर्ज्ञानपरिपाकार्थत्वाद् ब्रह्म स्वतन्त्रमेव शास्त्रप्रमाणकम्, न प्रतिपत्ति-विधिविषयत्वेन। इति भावः। इतरत् सुगमम् ॥१३९॥

[60b] प्रतिपत्तिविधिप्रतिषेधपरे
ह्युपसंहरणप्रवणे वचसि ।
गतसूत्रचतुष्टयमेकवचो-
विधया कथयन्ति गुरुप्रवराः ॥१४०॥

5 अथ तस्माद् न प्रतिपत्तिविधिविषयतयेत्याद्युपसंहारभाष्यस्वारस्यावलम्बेनाथेत्यादिसूत्रचतुष्टयस्याप्येकवाक्यतां मतभेदेन दर्शयति—प्रतिपत्तीति ॥ गुरुप्रवराः श्रीभगवत्पादा उपसंहारपरे प्रतिपत्तिविधिप्रत्याख्यानपरे वचसि गतसूत्रचतुष्टयम् "अथात"[1] इत्यादिलक्षणमेकवाक्यविधया कथयन्ति । इत्यन्वयः । अतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकम् ; वेदान्तवाक्यसमन्वयादिति सिद्धम् ।
10 एवं च स"त्वथातो ब्रह्मजिज्ञासे"[2]ति शास्त्रारम्भ उपपद्यत इति भाष्ये तृतीयचतुर्थसूत्रयोरेकवाक्यतानिर्देशपूर्वकं प्रथमसूत्रसाङ्गत्यस्य प्रतिपादनात् प्रथमद्वितीयसूत्रयोरेकवाक्यतायाः प्रागेवोपपादनात् सूत्रचतुष्टयं वाक्यैकवाक्यतापन्नम् । इति भावः ॥१४०॥

[61a] निखिलागमवाक्यसमन्वयतो
15 निगमप्रमितं जगतां जनकम् ।
तदखण्डमथ प्रविचार्यमिति
प्रकटीकृतमेकवचोविधया ॥१४१॥

अथोक्तामेव प्रकृतसूत्राणामेकवाक्यतां दर्शयति—निखिलेति ॥ निखिलवेदान्तवाक्यसमन्वयेन जगत्कारणं शास्त्रप्रमाणकं भवति, तटस्थविधया
20 जगत्कारणत्वोपलक्षितमखण्डं प्रविचार्यमित्येकवाक्यविधया प्रकटीकृतम् तस्मादित्यादिग्रन्थेन । इति भावः ॥१४१॥

श्रुतिवाग्विवृतीतरपक्षबला-
दुपसंहरणप्रवणं वचनम् ।

नियमो न खलु श्रुतिवाग्विवृतौ
ननु संश्रवमाश्रयतीह गुरुः ॥१४॥

अथ तस्मादित्युपसंहारवाक्यम् "अथात"[1] इत्यादिसूत्राणि चत्वार्यपि श्रुतिविवरणरूपाणीति भाष्यकृन्मतातिरिक्तमतेन प्रवर्तितम्, न तु भाष्य-
5 कारमताभिप्रायेणेत्याह—श्रुतीति ॥ श्रुतिवाचां विवृतिरिति पक्षातिरिक्त-पक्षबलात् तस्मादित्याद्युपसंहारवाक्यम्। जिज्ञासादिसूत्राणां श्रुतिवाग्वि-वरणत्वपक्षे प्रथमसूत्रे नियमः प्रतिज्ञानं नैव भवति। इह समन्वयसूत्रप्रान्ते गुरुः आचार्यः ननु संश्रवं प्रथमसूत्रार्थत्वेन आश्रयति "अथातो ब्रह्मजिज्ञासे"[2]ति शास्त्रारम्भ उपपद्यत इति ब्रह्मात्मैक्यावगतिस्त्वप्रतिज्ञातेति, तदर्थो युक्तः शास्त्रारम्भः—
10 "अथातो ब्रह्मजिज्ञासे"[3]ति च ॥१४२॥

[61b] नियमार्थमिहादिमसूत्रमिति
स्फुटमेव हि देशिकराड् वदति।
तत एव समन्वयसूत्रमिदं
विवृतं पररीतित इत्युचितम् ॥१४॥

15 अथ समन्वयसूत्रेऽस्मिन् पररीत्या प्रथमसूत्रस्य प्रतिज्ञापरत्वनिर्देशात् समन्वयसूत्रविवरणमपीदं तत्समभिव्याहारात् परमतरीत्यैव भवतीति दर्शयति—नियमेति ॥ इह समन्वयसूत्रविवरणप्रस्ताव आदिमं सूत्रं नियमार्थम् प्रतिज्ञार्थमिति देशिकराजो वदति हि। तत एव मतान्तरसाहित्याद् हेतोः समन्वयसूत्रमिदं परमतरीत्यैव विवृतमिति समुचितं भवति। इत्यर्थः ॥१४३॥

20 परिपक्वमतेर्वृत्तिभञ्जनतो
वितनुर्नहि मातृतया भवति।
रहितः करणैः क्व विधौ प्रभवे-
दधिकारितयाऽनुमतो मितिभिः ॥१४४॥

अथ तस्मादहमित्यादिभाष्यमात्मसाक्षात्कारादविद्यानिवृत्त्या विदेहकवल्ये सति प्रमातृत्वादीनामभावाद् विधिविषयतादि प्रमातृत्वायत्तं तत्त्वज्ञानस्य नेत्यर्थकं विवृणोति—परीति ॥ परिपक्वमतेः साक्षात्कारादन्तिमात् श्रुतिभञ्जनतः अविद्याभञ्जनात् वितनुः विदेहकैवल्यभाक् तत्त्वज्ञः प्रमातृत्वेन न भवति हि। 5 करणैः इन्द्रियैः शून्यः मितिभिः प्रमाणैरनुमतः सन् क विधावधिकारित्वेन भवति। क्वापि नाधिकारी भवति। अपक्वसाक्षात्कारदशायां देहे सति भिक्षाटनादिष्वधिकारी यथायोगमुपाध्यविलयात् प्रमातृत्वेन भवतीति भावः। भाष्यम्—तस्मादिति ॥ पक्वसाक्षात्कारपर्यन्ता एव विधयोऽन्यानि प्रमाणानि च, साक्षात्कारोत्तरमप्रमातृत्वाद् न प्रमाणसंस्पर्शो भवति। 10 इति भावः ॥१४४॥

[62a]

कथितार्थपरां द्र वि डा र्य कृता-
मपिचेति गुरुर्वदतीह कथाम्।
महतामुदिते गदिते विदितं
स्थिरनिश्चयवान् जन एष इति ॥१४५॥

15 अथ परिपक्वसाक्षात्कारादेव मूलाविद्याविलयेन प्रमातृत्वादिविलयाद् विदेहकैवल्यम्, अपरिपक्वसाक्षात्कारात्तु देहात्मैक्यप्रत्ययविलयेनाभिमानिकार्थसामान्यविलयः, नतु मायिकप्रमातृत्वादिविलयः, इत्याद्युक्तेऽर्थे द्र वि डा-चा र्य सम्मतिप्रदर्शनपरम् अपिचेत्यादिग्रन्थमवतारयति—कथितेति ॥ कथितार्थपरां द्र वि डा र्य कृतां कथामिह समन्वयसूत्रान्ते गुरुः भगवत्पादः अपिचेत्यादि-20 नाऽवतार्य वदति। इत्यन्वयः ॥१४५॥

[62b]

परिपक्वतमात्ममतेर्विलये
सुतसर्वतनुप्रभृतेर्वियुतः।
करणादिविहीनतया विगल-
च्चिरमातृतया क्रियया वियुतः ॥१४६॥

अथ "गौणे"[1]ति श्लोकभावं दर्शयति—परिपक्वतमेति ॥ परिपक्वतमात्ममतेः अन्तिमसाक्षात्कारादविद्यासूक्ष्मस्थूलतनुप्रभृतीनाम्, अहमितिदेहात्मैक्याव-गाहिमिथ्यात्मनः, मम पुत्रः, कलत्रम्, गृहम्, धनमित्यादिगौणात्मप्रभृतीनां च विलये सति करणानाम् इन्द्रियाणां प्राणानां च जीवोपाधीनां विरहात् पुमान् तत्त्वज्ञः विगलच्चिरमातृतया चिरं प्रवृत्ताऽनादिसिद्धा या प्रमातृता, सा च विगलन्ती लुप्यमाना मूलाविद्यादिविलयाद् विलीयमाना, तादृश्या मातृतया क्रियया वियुतः कर्तृत्वादिरहितः। प्रमातृत्वाभावेन कर्मकर्तृत्वरहितो विदेहकैवल्यसमये। इति भावः ॥१४६॥

पुरतः किल पक्वतमात्ममते-
स्तनुभिर्ननु मातृतया प्रभवन्।
विदिते किल मातरि शुद्धतया
सुखभूमचिदेव भवेत्स पुमान् ॥१४७॥

अथान्वेष्टव्ये[2]ति द्वितीयश्लोकभावं दर्शयति—पुरत इति ॥ परिपक्वतमात्ममतेः पुरतः अन्तिमसाक्षात्कारात् पूर्वं तनुभिः स्थूलसूक्ष्मकारणशरीरैरुपलक्षितः पुमान् प्रमातृतया प्रभवन् सन् सकलकार्येषु समर्थः सन् भवति। स एव संसारी पुमान् मातरि प्रमातरि शुद्धतया त्वक्शोधनेन विदिते ज्ञाते सति अन्तिमसाक्षात्कारविषयीकृते सति मूलाविद्यादिविलयात् सुखभूमचिदेव विदेह-कैवल्ययुतो भवेत्। इत्यन्वयः ॥१४७॥

[63a]

वपुरात्ममतिः प्रमितिर्हि यथा
निखिलं ननु लौकिकमानमपि।
परमात्मविनिश्चयतोऽन्तिमतः
पुरतस्तु तथा परतो न तथा ॥१४८॥

अथ "देहात्मे"[3]ति तृतीयश्लोकभावं दर्शयति—वपुरिति ॥ अहमिति

मानसी देहात्मैक्यबुद्धिर्यथा प्रमितिः व्यावहारिकमितिः ; सकलव्यवहारमूल-
भूतज्ञानत्वाद् येन रूपेण, तेनैव रूपेण निखिलम् समस्तं लौकिकमानमपि प्रत्यक्षा-
नुमानश्रुतिस्मृतिलौकिकवाक्यादिलक्षणमन्तिमात् परमात्मसाक्षात्कारात्
पुरतो भवति व्यावहारिकमानं भवति। अन्तिमसाक्षात्कारात् परतस्तु विदेह-
5 कैवल्यदशायान्तु न तथा मानं भवति। परस्तादात्मनो निर्मलतया स्वप्रकाश-
त्वेन स्वसंनिधानमात्रेण सर्वप्रकाशकतयाऽविद्याकालिकमानानामावरणनिवर्त-
कानामुपयोगाभावेन प्रत्यक्षादिलौकिकमानानां विदेहकैवल्यदशायाममानत्व-
मेवेति भावः। भाष्ये—गौणेति॥ सद्ब्रह्माहमित्येवं बोधे अन्तिमसाक्षात्कारे
वृत्ते सति मूलाविद्याविलयेन पुत्रदेहादिबाधनाद् देहसामान्यविलयपूर्वकं
10 पुत्रादीनां सम्बन्धांशपूर्वकं बाधनात्, अभिमानविलयेनाभिमानिकपदार्थानां
सर्वेषामपि विलयाद् गौणमिथ्यात्मनोऽसत्त्वेऽहमिति भ्रम[63b]सिद्धविशिष्टात्म-
नोऽभिमानभ्रमायत्तपुत्रादिगौणात्मनश्चासत्त्वे सति कार्यम् गौणात्मपुत्रकल-
त्रादिकृतकार्यं प्रवृत्त्यादिलक्षणं स्वदेहयात्रादिलक्षणमिथ्यात्मकार्यं च कथं भवेत
न भवेदेव। स्वस्वरूपेणावस्थिते लोकव्यवहारप्रवृत्त्ययोगादिति भावः।
15 अन्तिमसाक्षात्कारात् पूर्वं सर्वव्यवहारो भवति, पश्चाद् न भवतीत्यत्र हेतु-
माह—अन्वेष्टव्येति॥ अन्वेष्टुमुचितो य आत्माऽखण्डलक्षणः, तस्य विज्ञानाद्
अन्तिमसाक्षात्कारात् प्रागात्मनः प्रतीचः प्रमातृत्वं भवति ; अविद्यावृतत्वेन
देहेन्द्रियादिसङ्गेनावरणभङ्गार्थं चिदुपरागार्थं वा प्रमाणानां प्रवृत्तिसम्भवात्।
ननु आत्मनः सकाशादपर एवान्विष्टश्चेदात्मा यथापूर्वं सावरण एवेति
20 मानानां सर्वेषाममुक्तिकाल इव मुक्तिकालेऽपि प्रवृत्तिर्भवेदित्याशङ्क्याह—
अन्विष्ट इति॥ अत्र प्रतीचोऽन्यस्य नान्वेषणम्, येनोक्तदोषः स्यात्, किन्तु
प्रमातैव पाप्मदोषादिवर्जितोऽन्विष्टः स्यात्। अविद्याकामकर्मादिदोषैस्तत्त्व-
साक्षात्कारादन्तिमाद् रहितः स्वप्रकाश एव निरावरण एव भवेत्। तेन
विदेहकैवल्यदशायां मानानामप्रवृत्तिरिति भावः। अनेन श्लोकेनान्तिम-
25 साक्षात्कारात् पूर्वमेव प्रमातृत्वम्, न पश्चात्, इति प्रमातृत्वविचार एव
कृतः। तृतीयश्लोके तु प्रमातृत्वायत्तप्रमाणप्रवृत्त्यप्रवृत्ती प्रमातृत्ववदेव
विशदयति—देहेति॥ अहमिति देहात्मप्रत्ययोऽभिमानभ्रमः सकलव्यवहार-
मूलभूतो यथा प्रमाणत्वेन कल्पितो व्यवहारकुशलैः, तथैव लौकिकं प्रत्यक्षानु-
मानश्रुतिस्मृतिलौकिकवाक्यलक्षणं भवति ; परन्त्वात्मनिश्चयाद् अन्तिम-

साक्षात्कारपर्यन्तमेव प्रमाणम्, न ततः परम्; तदानीमविद्यानिवृत्त्या स्वप्रकाशतयाऽऽवरणभङ्गाद्यर्थं प्रमाणप्रवृत्तेरनुपपत्तेः। इत्यर्थः ॥१४८॥

[64a] आलम्ब्य शङ्करपराशरसूनुपक्षौ
तत्सूत्रशीतगिरिभाष्यमहावनालीः।
5 उल्लङ्घ्य मानसविजृम्भितसत्पयोजं
हंसः परोऽहमतिवेगबलादवापम् ॥१४९॥

अथाधिकरणान्ते मङ्गलाय सूत्रभाष्यकृतावनुस्मरन्नधिकरणसमाप्तिं निबध्नाति—आलम्ब्येति ॥ "तत्तु समन्वयादि"[1]ति सूत्रमेव हिमाचलः, तद्भाष्यमेव हिमगिरिगतवनावलयः ताः। श्रीशङ्करार्यवेदव्यासलक्षण-
10 पक्षाववलम्ब्य परो हंसोऽहं बुद्धिवेगबलेन प...रज्जुहस्तको यास्यामि। ईदृशमतिवेगबलेनोल्लङ्घ्य मानसमेव मानससरः, तत्र विजृम्भितम् अभिव्यक्तं "सदेव सोम्ये"[2]त्युक्तसदेव पयोजम् कमलम्, तदेव सत् समीचीनं पयोजं अवापम् प्राप्तवानस्मि। इति भावः ॥१४९॥

[64b] इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीस्वयम्प्रका-
15 शानन्दसरस्वती पूज्यपादशिष्य श्रीश्रीधरान-
न्दसरस्वती चरणकमलपरिचर्यापरायण श्रुतिनगरे-
शाभिनवद्रविडाचार्य श्रीबालकृष्णानन्दसरस्वती-
विरचिते श्रीमच्छारीरकमीमांसाभाष्यवार्तिके
समन्वयसूत्रम् ॥

20 इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीस्वयम्प्रकाशानन्दसरस्वती पूज्यपादशिष्य श्रीश्रीधरानन्दसरस्वती चरणकमलपरिचर्यापरायण श्रुतिनगरेशाभिनवद्रविडाचार्य श्रीबालकृष्णानन्दसरस्वती विरचिते श्रीमच्छारीरकमीमांसाभाष्यवार्तिकविवरणे तत्तुसमन्वयसूत्रं सम्पूर्णम् ॥

॥ श्रीरस्तु ॥

# APPENDIX

## A

*Passages quoted or referred to in the Text*

| Passage | Source | Page & Number |
|---|---|---|
| अग्निहोत्रं जुहोति | TS, 1. 5. 6. 1 | 270-2 |
| अग्नीषोमीयं पशुम् | TS, 6. 5. 11.6 | 232-2, 311-2 |
| अजो नित्यः | KtU, 1. 2. 18 | 371-1 |
| अत्तं यथा | VP, 5. 9. 30 | 135-1 |
| अत्याश्रमी | KvU, 2. 24 | 204-5 |
| अत्राप्युदाहरन्ति | ŚP, 338. 78 | 220-9, 221-3 |
| अथ च | MB, 5. 1. 115 | 168-7 |
| अथ त्रिविध | SS, 1. 1 | 220-2 |
| अथ योगानुशासनम् | YS, 1. 1. 1 | 33-1, 33-3, 48-1, 220-3, 225-4, 245-3 |
| अथवा पुनरस्तु | MB, 5. 11. 115 | 168-9 |
| अथ शब्दानुशासनम् | MB, 1. 1 | 33-2, 48-2, 225-3 245-4 |
| अथ शब्दो निरूप्यते | NB, 1. 1. 7 | 235-4 |
| अथ सोऽभयम् | TU, 2. 7. 12 | 289-5 |
| अथात आत्मादेशः | ChU, 7. 25. 2 | 218-3 |
| अथातो धर्मजिज्ञासा | MS, 1. 1. 1 | 227-1, 325-3 |
| अथातो धर्मम् | VS, 1. 1. 1 | 48-3, 220-5 |
| अथातो ब्रह्मजिज्ञासा | BS, 1. 1. 1 | 19-5, 20-3, 30-2, 31-2, 31-3, 32-1, 35-1, 35-2, 35-4, 38-3, 38-4, 41-1, 47-12, 52-8, 54-5, 55-9, 57-4, 58-1, 59-1, 60-2, 65-1, 217-2, 220-1, 220-8, 221-2, 225-1, 227-1 227-2, 239-1, 245-1, 246-1, 254-2, 256-8, 266-4, 267-2, 295-1, 295-2, 298-11, 299-1, 302-1, 308-1, 318-1, 318-3, 325-1, 325-2, 325-4, 356-1, 378-1, 378-5 401-1, 401-2, 402-1, 402-2, 402-3 |

| Passage | Source | Page & Number |
|---|---|---|
| अथातः कत्वर्थ- | MS. 3. 4. 1 | 19-1, 235-6 |
| अथातः शेषलक्षणम् | MS. 3. 1. 1 | 235-5 |
| अथानुमानम् | VdP. 2 | 235-2 |
| अथोपमानम् | NB. 1. 1. 6 | 235-3 |
| अधीहि भगवो ब्रह्म | TU. 3. 1. 3 | 53-1, 53-6, 53-8, 54-6, 256-3, 256-7, 270-9, 270-12, 270-15, 280-1, 281-7, 284-12, 285-1, 285-2 287-6, 289-2, 294-7, 298-1, 298-6. |
| अनन्तं वै मनः | BU. 3. 1. 9 | 360-1 |
| अनावृत्तिः शब्दात् | BS. 4. 4. 22 | 266-5 |
| अनेकजन्म | BG. 6. 45 | 210-1 |
| अनेन जीवेन | ChU. 6. 3. 2 | 259-1 |
| अन्धं तमः | IU. 12 | 40-1 |
| अन्नं प्राणम् | TU. 3. 1. 7 | 51-7, 51.8, 61-4, 254-5, 270-16, 280-4, 281-8, 281-9, 281-10, 282-1, 282-6, 282-7, 284-1, 284-8, 284-11, 288-2, 294-8, 298-4, 298-9, 315-2, 316-2. |
| अन्नं ब्रह्मेति | TU. 3. 2. 1 | 52-2, 52-11, 61-5, 61-17, 65-51, 271-3, 291-1, 282-2, 282-3, 284-3, 284-9, 284-11 288-1, 288-4, 288-10, 289-15, 292-3, 298-9, 315-5, 316-3. |
| अन्नाद्ध्येव | TU. 3. 2. 2 | 282-4 |
| अन्यदेव तद्विदितात् | KU. 1. 3 | 363-1, 366-1, 367-1, 369-1, 370-1, 370-3. |
| अन्वेष्टव्यः | ChU. 8. 3. 1 | 345-5 |
| अन्वेष्टव्यात्म | BS. 1. 1. 4 | 404-2 |
| अप एव ससर्जादौ | MS. 1. 8 | 80-1, 184-5 |
| अपरोक्षचेतन- | ? | 105-1 |
| अपि च | MB. 5. 1. 115 | 171-2, 172-1, 172-6 |
| अप्रमादी भवदेतैः | UP. 42. 32 | 45-5 |
| अभयं प्रतिष्ठां | TU. 2. 7. 11 | 286-1 |

| Passage | Source | Page & Number |
|---|---|---|
| आधारं तु | SP. 338. 95 | 219. 6 |
| आनन्द आत्मा | TU. 2. 5. 19 | 286. 10. 287-7 |
| आनन्दमयोऽभ्यासात् | BS. 1. 1. 12 | 317-1. 317-9. 321-5. 322-2 325-5. |
| आनन्दाद्धयेव खलु | TU. 3. 6. 2 | 270-8. 271-7. 297-3 |
| आनन्दो ब्रह्मेति | TU. 3. 6. 1 | 52-5. 61-9. 61-18. 63-1. 255-5. 281-5. 284-7. 286-10. 287-4. 288-8. 288-11, 289-9. 289-19. 292-7. 294-10. 315-6. 316-7 |
| आनन्दं ब्रह्मण | TU. 2. 9. 3 | 286-14. 287-10. 289-14 |
| आम्नायस्य | MS. 1. 2. 1 | 333-4. 379-1. 379-2. 379-7. 380-2 |
| आविः संनिहितम् | ? | 286-7 |
| आषोडशात् | AD. 1. 1. 27 | 230-3 |
| इदं पुरुषसूक्तम् | SP. 338. 75 | 221-1 |
| इदमस्तु | ? | 122-5 |
| ईन्द्रियेभ्यः पराः | KtU. 1. 3. 10 | 378-1 |
| इन्द्रियेभ्यश्च | ? | 42-4. 45-8 |
| इमानि भूतानि | TU. 3. 1. 7 | 285-5 |
| इषे त्वा | TS. 1. 1. 1. 1 | 321-4. 336-2. 336-5 |
| इष्टापूर्तं | UP. 42. 30 | 45-4 |
| ईशावास्यम् | IU. 1 | 40-5 |
| ईक्षतेर्नाशब्दम् | BS. 1. 1. 5 | 317-5. 322-8 |
| उत तमादेशम् | ChU. 6. 1. 1 | 368-1 |
| उदस्य कुम्भीः | NC. 15. 19 | 33-6 |
| उपासीत | BU. 1. 4. 7 | 345-7 |
| ऋषिसिंहेन | SP. 338. 75 | 220-7 |
| एकत्वमनु | IU. 10 | 358-3 |
| एकादश वै | ? | 232-3 |
| एतद्बुद्ध्वा | BG. 15. 20 | 376-2 |
| एतद्विदुः | ? | 364-3 |
| एतेनेष्ट्वा | ŚB. 3. 3. 32 | 236-3 |
| एते वै तमात्मानम् | BU. 3. 5. 1 | 55-6. 55-10 |
| एतं वै तमात्मानम् | ? | 55-6 |
| एवं चैव हि | MB. 5. 1. 15 | 170-2. 170-5. 170-6. 170-7. 170-8. 172-5. 173-1 |

| Passage | Source | Page & Number |
|---|---|---|
| जातपुत्रः | ? | 27-2, 213-8 |
| जायतेऽस्ति | N, 1. 2. 8 | 272-3, 304-1, 305-1 |
| जायत इति पूर्वभावस्य | N, 1. 2. 9 | 272-4, 273-1, 273-2 |
| जिज्ञासितव्यः | TU, 3. 1. 8 | 345-6 |
| जीव ईशः | ? | 22-1, 199-1 |
| ज्योतिश्चरणाभिधानात् | BS, 1. 1. 24 | 317-2, 322-4 |
| ज्योतिष्टोमेन | ŚB, 2. 3. 1 | 212-4, 351-4 |
| ज्ञा अवबोधने | DP, 150. 8 | 56-1 |
| ज्ञानं च सत्यम् | UP, 42. 21 | 45-1 |
| डुकृञ् करणे | DP, 1473 | 278-4 |
| तत्केन कं पश्येत् | BU, 2. 4. 13 | 339-2, 339-3 |
| तत्तु समन्वयात् | BS, 1. 1. 4 | 268-2, 317-6, 318-1, 320-1, 320-2, 322-1, 323-1, 323-2, 324-1, 324-2, 327-1, 328-1, 328-3, 332-3, 333-4, 334-3, 336-6, 337-1, 341-1, 406-1 |
| तत्र | P, 5. 1. 116 | 174-4, 174-5, 174-7, 174-9, 174-12, 174-15, 175-1, 176-1, 176-2, 333-4, 335-1, 335-3, 3736-6 |
| तत्रैतन्नामा | N, 1. 2. 8 | 273-3 |
| तत्त्वमसि | ChU, 4. 8. 7 | 51-5, 207-5, 218-2, 271-11, 314-1, 323-4, 323-8, 331-4, 332-1, 359-5, 360-5, 361-5, 362-1 |
| तथाऽक्षरात् | MU, 2. 1. 1 | 219-3 |
| तथा गौरः | MB, 5. 1. 115 | 167-3 |
| तदर्थमुक्तम् | UP, 42. 8 | 44-6 |
| तं होवाच | TU, 3. 1. 6 | 51-4, 52-4, 255-2, 270-14, 280-3, 285-4, 298-3, 315-3 |
| तदर्हम् | P, 5. 1. 117 | 174-1, 174-3, 177-8, 174-11, 174-13, 177-1, 177-2, 177-3 |
| तदित्यायुक्तिः | V, 1. 1. 2 16 | 296-6 |

| Passage | Source | Page & Number |
|---|---|---|
| तस्माच्चेन्न | TU, 2. 5. 6 | 42-2, 240-1, 240-4 |
| तस्मात्तत्सुकृतम् | TU, 3. 7. 4 | 49-6 |
| तस्माद्वा एतस्मात् | TU, 2. 1. 6 | 60-3, 61-11, 61-12 |
| तस्माद्वा एतस्मात्प्राण | TU, 2. 3. 11 | 60-6 |
| तस्माद्वा एतस्मादन्न | TU, 2. 2. 14 | 60-5, 65-4 |
| तस्माद्वा एतस्मान्मनो | TU, 2. 4. 7 | 60-7 |
| तस्माद्वा एतस्माद्विज्ञान | TU, 2. 5. 11 | 61-1, 286-9 |
| तस्मै मृदित | PU, 6. 8 | 361-4 |
| तस्य तावदेव | ChU, 6. 14. 2 | 204-6, 211-1, 211-2, 386-1 |
| तस्य यजुरेव | TU, 2. 3. 17 | 43-7 |
| तस्य व्रतम् | ŚB, 4. 1. 3 | 381-2, 381-5 |
| तस्यैव नामादि | UP, 42 7 | 44-5 |
| तावानन्तरेण | BU, 3. 3. 2 | 26-3 |
| तावानेषोऽन्तर्हृदय | ChU, 8. 1. 3 | 184-3 |
| तुलया च संमितम् | MB, 5. 1. 115 | 166-8, 168-5 |
| तृतीयासमर्थम् | MB, 5. 1. 115 | 166-7, 168-3 |
| तेन | MB, 5. 1. 115 | 168-10, 169-7, 171-1 |
| तेन तुल्यं | MB, 5. 1. 115 | 166-11 |
| तेन तुल्यं क्रिया | P, 5. 1. 115 | 158-1, 159-1, 159-2, 159-3, 166-1, 166-2, 166-3, 169-1, 169-3, 169-4, 171-3, 174-2, 174-6. 174.10, 174-14, 177-4, 178-1 |
| तेनैष पूर्णः | TU, 2. 5. 13 | 287-11 |
| त्यजतैव हि | ? | 209-2 |
| त्रयो धर्मस्कन्धाः | ChU, 2. 13. 1 | 209-3 |
| त्वं हि नः पिता | PU, 6. 8. | 358-7, 358-8, 358-9, 361-3 |
| दमस्त्यागः | UP, 42. 23 | 45-2 |
| दर्शपूर्णमासाभ्याम् | AU, 3. 14. 8 | 232-5, 351-3, |
| दिव्यो ह्यमूर्तः | MU, 2. 1. 2 | 217-6,218-7 |
| दुःखजन्म | NS, 1. 1. 2 | 30-1, 64-1, 359-1, 359-2 |
| दूरतरपर्वत | V, 1. 1. 1. 90 | 182-3 |
| दृश्यते त्वग्र्यया | KtU, 1. 13. 12 | 364-1, 367-3, 370-2, 370-4 |

| Passage | Source | Page & Number |
|---|---|---|
| नास्त्यकृतः | MU. 1. 12 | 47-2 |
| नित्यो नित्यानां | ŚU. 6. 13 | 371-2 |
| नित्यः सर्वगतः | BG. 2. 24 | 345-9 |
| निर्गुणं निष्क्रियं | ? | 364-4, 372-1 |
| निर्गुणं निर्गुणा | ŚP. 338. 97 | 221-4 |
| निवृत्तेनैव | UP. 42. 35 | 46-5 |
| निर्वेदम् | MU. 1. 12 | 47-3 |
| निशि नेति | BS. 4. 2. 19 | 138-2 |
| निष्कल्मषम् | UP. 42. 13 | 44-8 |
| निहितं गुहायाम् | TU. 2. 1. 4 | 287-1 |
| नेच्चेतोयन्तम् | MS. 4. 37 | 381-1, 381-4 |
| नैतयुक्तम् | MB. 5. 1. 115 | 167-2, 169.6 |
| नैव मानं च | UP. 41. 42 | 43-5 |
| नैष दोषः | MB. 5. 1. 115 | 168-8 |
| पञ्चम्यास्तसिल् | P. 5. 3. 7 | 294-3 |
| पण्डितो मेधावी | ChU. 4. 2. 2 | 266-3, 310-2 |
| पत्न्यवेक्षते | ? | 362-4 |
| पराबरयोगे | P. 3. 4. 20 | 32 2, 139-4 |
| परीक्ष्य लोकान् | MU. 1. 2. 12 | 47-1, 47-2, 224-2, 238-1, 239-2, 244-1, 248-2 |
| पश्यन् प्रतिपेदे | BU. 1. 4. 10 | 358-5 |
| पाराशर्यशिलालिभ्याम् | P. 4. 3. 110 | 217-1 |
| पितरमुपससार | TU. 3. 1. 2 | 251-2 |
| पितृलोके | UP. 41. 6 | 43-1 |
| पुत्रैषणायाः | BU. 3. 5. 1 | 203-2 |
| पुरश्चक्रे | BU. 7. 5. 18 | 218-4 |
| पुरस्स पक्षी | BU. 7. 5. 18 | 218-5 |
| प्रकृतिपरिणामाः | ? | 277-1 |
| प्रणाशो नास्ति | SP. 187. 1 | 133-1 |
| प्रतिपत्तिविधि | V. 1. 1. 4. 46 | 344-1 |
| प्रत्ययार्थविशेषणम् | MB. 5. 1. 115 | 166-9, 170-1 |
| प्रत्ययार्थौ विशेषिनः | MB. 5. 1. 115 | 167-1, 5, 167-6 |
| प्रत्यक्षानुमान | NS. 1. 3 | 235-1 |

| Passage | Source | Page & Number |
|---|---|---|
| भानमभिवाञ्छितम् | V, 1. 1. 1. 237 | 182-2 |
| भावप्रधानम् | N, 1. 1. 9 | 273-1, 273-2, 276-1, 276-2 |
| भावः सत्ता | MK, 172. 20 | 275-1 |
| भावस्सत्ता | AK, 3. 217 | 275-3 |
| भावः स्वभावे | VK, 163. 4 | 275-2 |
| भिद्यते | MU, 2. 2. 8 | 361-2 |
| भूमानं | ChU, 7. 23. 1 | 4-1 |
| भूमैव सुखम् | ChU, 7. 23. 1 | 66-2 |
| भूयश्चान्ते | ŚU, 1. 10 | 28-1, 202-1, 205-1, 287-2 |
| भू सत्तायाम् | DP, 1 | 278-1 |
| भृगुर्वै वारुणिः | TU, 3. 1. 1 | 51-2, 52-9, 53-3, 65-3, 240-3, 254-4, 269-1, 270-6, 296-4, 297-1, 298-7, 315-1 |
| मङ्गलानन्तर | AK, 3. 246 | 33-5 |
| मनो ब्रह्म | TU, 3. 4. 1 | 61-7, 271-5, 281-3, 281-4, 288-6, 289-17, 292-5, 316-5, 360-2 |
| मन्तव्यः | BU. 2. 4. 5 | 270-1 |
| मयरसतजभ | CS, 1. 1 | 245-5 |
| महाशालाः | ChU, 5. 11. 12 | 230-5, 237-1 |
| मुखजानाम् | AP, 154 | 203-3 |
| यतो न वेदाः | UP, 42. 2 | 44-1 |
| यतो वा इमानि | TU, 3. 1. 7 | 20-1, 38-1, 50-3, 51-9, 52-1, 53-7, 54-1, 54-5, 54-7, 55-2, 247-7, 248-8, 255-4, 265-2, 265-3, 265-4, 269-2, 269-3, 269-4, 270-4, 270-5, 270-7, 270-10, 271-1, 272-1, 272-2, 281-6, 285-4, 287-3, 288-3, 288-9, 289-4, 290-1, 291-1, 292-10, 293-1, 293-5, 294-1, 294-6, 294-9, 295-5, 295-2, 295-7, 296-1, 296-4, 296-3, 297-2, 297-4, 297-5, 299-3, 302-2, 303-1, 315-4, 316-1, 321-2 |

| Passage | Source | Page & Number |
| --- | --- | --- |
| वसन्ते वसन्ते | ? | 351-2 |
| वाग्बुद्धिशरीर- | NS, 1. 1. 19 | 64-3 |
| वानप्रस्थः | ? | 208-3 |
| वापी कापि | SB, 284. 50 | 122-3 |
| वायुर्वाव संवर्गः | ChU, 4. 3. 1 | 360-3 |
| वायुर्वै | TS, 2. 1. 1.1 | 379-3, 379-4, 379-5, 379-6, 379-9, 380-1 |
| विकत्थनः | UP, 42. 19 | 44-11 |
| विकारशब्दात् | BS, 1. 1. 7 | 317-3, 322-3 |
| विजिज्ञासस्व | TU, 3. 1. 8 | 56-3 |
| विज्ञानं ब्रह्म | TU, 3. 5. 1 | 61-8, 271-6, 281-4, 284-6, 288-7, 289-18, 292-6, 316-6 |
| विज्ञानं ब्रह्म चेत् | TU, 2. 5. 5 | 44-2 |
| विद सत्तायाम् | DP, 1171 | 278-2 |
| विद्यां चाविद्यां च | IU, 11 | 40-2 |
| विद्वान्न बिभेति | TU, 2. 4. 1 | 357-3 |
| विधिना तु | MS, 1. 2. 7 | 379-8, 380-3 |
| विनश्यतीति | N, 127 | 276-3 |
| विषयानुकृतिः | ? | 367-4 |
| विषयो विशयः | ? | 29-3, 58-3 150-3, 223-1, 265-6, 296-2 |
| वेद | V, 1. 1. 1. 316 | 236-1 |
| वेदाहमेतम् | ŚU, 3. 8 | 55-4 |
| शमान्विताय | MU, 1. 2. 12 | 47-4 |
| शान्तो दान्तः | BU, 4. 4. 23 | 46-2, 46-3, 238-4 |
| शास्त्रयोनित्वात् | BS, 1. 1. 3 | 268-1, 318-2, 320-3, 329-1, 334-2, 337-2, 337-3, 366-2, 367-2 |
| शौनको ह वै | MU, 1. 1. 3 | 230-4 |
| श्रुत्यर्थपाठ- | ? | 232-4 |
| श्रेयांश्च षड्विधः | UP, 42. 29 | 45-3 |
| श्रोतव्यो मन्तव्यो | BU, 2. 4. 5 | 35-6, 224-3, 236-4, 247-3, 248-3, 248-7, 266-2, 267-1, 310-1, 349-4 |
| षड् भावविकाराः | N, 1. 2. 8 | 272-2, 275-4 |

| Passage | Source | Page & Number |
| --- | --- | --- |
| सार्वविभक्तिकः | KV, 5. 3. 7 | 294-2 |
| सुपो धातु | P, 2. 4. 71 | 294-4 |
| सैषाऽऽनन्दस्य | TU, 2. 8. 5 | 286-12, 287-5 |
| सैषा भार्गवी | TU, 3. 6. 5 | 271-8, 287-5, 292-8, 296-5 |
| सोपनयनादूर्ध्वं | AU, 5 | 229-2 |
| सोऽरोदीत् | TS, 1. 5. 1. 1 | 321-3, 336-1, 336-3, 336-4 |
| सोऽश्नुते | TU, 2. 1. 5 | 286-5 |
| संन्यस्य | ? | 208-2 |
| संन्यस्याग्नीन् | ? | 208-4 |
| स्नानं शौचम् | ? | 204-1 |
| स्वपदानि च | ? | 22-1 |
| स्वयमकुरुत | TU, 3. 7. 3 | 49-5 |
| स्वशाखोपनिषत् | ? | 204-3 |
| हृदा मनीषी | ŚU, 4. 12 | 364-2 |

# APPENDIX

## B

*Names of Works or Sciences referred to in the Text*

# APPENDIX

## C

*Names of Authors or other Persons referred to in the Text*

# APPENDIX

## D

*Alphabetical Index of the Ślokas in the Text*

| Śloka | | Page |
|---|---|---|
| इमानीति त्यक्त्वा | ... | 292 |
| इष्टविषये तदितरत्र च | ... | 200 |
| इह कर्मसमानम् | ... | 345 |
| इह नावगतेति गिरा | ... | 383 |
| इह भाष्यकृतः कथयन्ति | ... | 327 |
| इह रज्जुरिति श्रवणेन | ... | 346 |
| इहाम्नायाः कोशाः | ... | 287 |
| ईक्षणघृणेः सविधे | ... | 75 |
| उक्तमुपसंहरति | ... | 215 |
| उक्तविधया यदि न | ... | 89 |
| उक्तविपरीतधिया | ... | 109 |
| उचितं परिहाय तम् | ... | 324 |
| उन्मिषितविकसित | ... | 112 |
| उन्मिषितशक्तिषु | ... | 90 |
| उपेन्द्रा निस्तन्द्राः | ... | 12 |
| ऋक्षवलयादुपरि | ... | 181 |
| एकपुरुषेण रचिते | ... | 234 |
| एकमततामति | ... | 155 |
| एकविध एव यदि | ... | 233 |
| एकविषये ननु | ... | 194 |
| एकविषयैव न हि | ... | 235 |
| ऐक्यमतिरेषु | ... | 113 |
| ऐक्यमिह जीवपरयोः | ... | 259 |
| ओड्रकुसुमे स्फटिक | ... | 66 |
| ओतुनयनावकलिते | ... | 82 |
| औपनिषदेन वचसा | ... | 257 |
| कथमादिवचस्त्वव | ... | 334 |
| कथमित्यवतारणतः | ... | 319 |
| कथितार्थपरा द्रविडार्य | ... | 403 |
| कर्तृसमताविरहतः | ... | 139 |
| कर्मजनितं त्रिदश | ... | 210 |
| कर्म बहुलं त्रिविधम् | ... | 208 |
| कर्मशकले फलपरे | ... | 211 |

# THE
# ASUTOSH SANSKRIT SERIES

UNDER THE GENERAL EDITORSHIP

OF

THE ASUTOSH PROFESSOR OF SANSKRIT

UNIVERSITY OF CALCUTTA

---

No. 1. ŚĀRĪRAKAMĪMĀṂSĀBHĀṢYAVĀRTIKA with Vivaraṇa by Abhinavadraviḍācārya Bālakṛṣṇānanda Sarasvati, edited by Mahāmahopādhyāya Anantakrishna Sastri and Pandit Ashokanath Bhattacharya, Sastri, M.A.

IN THE PRESS

No. 2. SĀRASAṂGRAHA attributed to Jivagosvāmin, edited by Pandit Radharaman Goswami, Vedantabhusan and Pandit Krishnagopal Goswami, Sastri, M.A.

No. 3. KUSUMĀÑJALIKĀRIKĀ by Udayanācārya with the commentary of Rāmabhadra, edited by Pandit Narendra Chandra Vedantatirtha, M.A.